तत्र सूरीणा सुधोपमवचनैः सिक्तहृदयश्चाचिंगः ससेह स्वयमेव पुत्रमुपदीकृत्य स्वगृहं प्रत्याययौ । तत्र गृहीतदीक्षश्च-गदेवोऽचिरादेव समधिगतागमपारावार. संपादितसूरिपदो "हैमाचार्य" इत्याख्यया परां प्रसिद्धि समुपागतवान् । तदनु महाशयशिरोमणयोऽगण्यगुणगणिन सकलशव्दशास्त्रजलधितलस्पर्शिन. श्रीहेमचंद्राचार्या जैनमताध्वनीनता-मुपगम्य सर्वत्र विहृत्य चानेकविद्वत्ससत्सु सन्मानसपदा समुपार्ज्य सर्वास्वाशासु शशिकरोज्ज्वला धर्मकीर्ति प्रसार्यार्हे-त्तत्वप्रकाशेन भव्यानामज्ञानतिमिर विनाश्य गुर्जराधिपत्यो. श्रीसिद्धराजकुमारपालयो राज्ये गत्वा कुमतध्वसपूर्वक स्वमत सस्थाप्य विशेषत' कुमारपालमार्हत विधाय तदष्टादशदेशेष्वमारीघोषणा प्रवर्त्तयामासु' । तथाचान्ते चतुरशी-तिलक्षजन्मनामतेऽप्यगण्यै' पुण्यैरुपलभ्यमैहिकामुष्मिकानेकाविधनि.श्रेयसाना मूलमिम मानवभवमन्वर्थक कृत्वा विक्रमसमयात् खाग्निसूर्यमिते ( १२३० ) वर्षे शुभाध्यवसायेन परलोकं समाजग्मु' । श्रीहेमचद्राचार्यैर्विविधविष-येषु जैनमतोपयोगिन सर्वोपयोगिनश्च बहवो ग्रंथा रचिता. । तत्र व्याकरणे शव्दानुशासन—तन्मूलसूत्रमयी अष्टाध्यायी—धातुपारायण—उणादिगणसूत्रविवरणं कोषे—अभिधानचितामणि—अनेकार्थनाममाला—देशीना-ममाला—महाकाव्ये सस्कृत प्राकृत च द्व्याश्रयकाव्य वीतरागस्तवस्त्रिपष्टिशलाकापुरुपचरित्र—न्याये—अन्ययो-गव्यवच्छेदद्वात्रिंशिका—अयोगव्यवच्छेदद्वात्रिंशिका—स्याद्वादकलिका—योगशास्त्रे योगशास्त्र—अध्यात्मे—अध्या-त्मोपनिषद्—नीतौ अर्हन्नीति'—साहित्ये काव्यानुशासन छंदसि प्रस्ताररूप छदोनुशासन इत्यादयः प्रसिद्धास्तेभ्यो-ऽन्येऽपि बहवो ग्रंथाः प्रायोऽनुपलब्धा. श्रूयन्ते । सर्ववयसि पूर्णे तैरेतावतो ग्रथा रचितास्तद्गतसर्वश्लोकाना सख्या-सार्द्धकोटीत्रयमिता भवतीति प्रसिद्धिः—तत्र पञ्चत्रिंशत्सहस्रश्लोकात्मको दशपर्वग्रथितत्रिपष्टिशलाकापुरुपचारित्रग्रन्थ-स्तैरेवाचार्यवर्यैर्व्यरचि । एतस्मिन् चतुर्विंशतेरर्हता द्वादशचक्रवर्त्तिना नववासुदेवाना नवप्रतिवासुदेवानां नव-

अथ त्रिषष्टिशलाकापुरुषचरित्रे प्रथमपर्वणि

आदीश्वरचरित्रं ॥

सलिलैर्नीचमुच्चं च सर्वमुर्व्या समीकृतम् । जडानामुदये हंत विवेकः कीदृशो भवेत् ॥ ९४ ॥
पयोभिः कंटकैः पंकैर्दुर्गमत्वेन वर्त्मनः । योजनानां शतमिव क्रोशोऽपि समजायत ॥ ९५ ॥
अध्वन्यजन आजानुसंलग्ननवकर्दमः । आमुक्तमोचय इव प्रचचाल शनैः शनैः ॥ ९६ ॥
धर्तुं प्रतिपथं पांथान् दुर्दैवेन प्रसारिताः । प्रवाहच्छद्मना दीर्घाः स्वबाहुपरिघा इव ॥ ९७ ॥
अमज्जन्नभितः पंकविकटे शकटाः पथि । चिरं कृतविमर्दोत्थरोषाद्ग्रस्ता इवेलया ॥ ९८ ॥
अवरुह्याकृष्यमाणा औष्ट्रिकैर्धृतरज्जुभिः । पथि क्रमेलकाः पेतुर्भ्रश्यत्पादाः पदे पदे ॥ ९९ ॥
दुर्गत्वं वर्त्मनां प्रेक्ष्य सार्थवाहस्ततो धनः । तत्रैव च महाऽटव्यां दत्वा वासान्नवास्थितः ॥ १०० ॥
अतिवाहयितुं वर्षाश्चक्रे तत्रोटजान्जनः । नहि सीदंति कुर्वंतो देशकालोचितां क्रियाम् ॥ १०१ ॥
दर्शिते मणिभद्रेण निर्जंतुजगतीतले । उटजोपाश्रयेऽवात्सुः सूरयोऽपि ससाधवः ॥ १०२ ॥
भूयस्त्वात्सार्थलोकस्य दीर्घत्वात्प्रावृषोऽपि च । अत्रुटयत्तत्र सर्वेषां पाथेययवसादिकम् ॥ १०३ ॥
ततश्चेतस्ततश्चेलुः कुचेलास्तापसा इव । खादितुं कंदमूलादि क्षुधार्त्ताः सार्थवासिनः ॥ १०४ ॥
अथ तत्सार्थनाथस्य सार्थदौस्थ्यमशेषतः । विज्ञप्तं मणिभद्रेण तन्मित्रेण निशामुखे ॥ १०५ ॥
सार्थवाहः सार्थदुःखचिंतासंताननिश्चलः । तस्थौ निवातनिष्कंप इव पाथोनिधिस्ततः ॥ १०६ ॥
ततश्च चिंतापन्नस्य निद्राऽभूत्क्षणमात्रतः । अतिदुःखातिसौख्ये हि तस्याः प्रथमकारणम् ॥ १०७ ॥

१ अत्र डलयोरैक्यात् जलानामिति वक्तव्यम् । २ आमुक्तमोचक. बन्धात्सद्यो मुक्तः । ३ स्वबाहुरूपार्गला इव । ४ इलया भूम्या । ५ औष्ट्रिकैः उष्ट्रारूढैः । ६ क्रमेलकाः उष्ट्राः । ७ उटजान् पर्णकुटीः । ८ पाथेयघासादिकम् ।

ध्यानाधीनात्मनः कांश्चित् कांश्चिन्मौनावलंबिनः । कायोत्सर्गस्थितान्कांश्चित्पठतः कांश्चिदागमम् ॥१२२॥
वाचनां ददतः कांश्चित्कांश्चिद्भूमिं प्रमार्जतः । वंदमानान्गुरून्कांश्चित्कांश्चिद्धर्मकथाजुषः ॥ १२३ ॥
श्रुतमुद्दिशतः कांश्चित्कांश्चित्तदनुजानतः[1] । तत्वानि वदतः कांश्चित्तत्राद्राक्षीन्मुनीनपि ॥ १२४ ॥
त्रिभिर्विशेषकम् ।
सोऽवंदताचार्यपादान् साधूनपि यथाक्रमम् । तस्मै ते धर्मलाभं च ददुः पापप्रणाशनम् ॥ १२५ ॥
आचार्यपादपद्मांते राजहंस इवाथ सः । निषद्यासादितानंद[2] इति वक्तुं प्रचक्रमे ॥ १२६ ॥
तदाकारयता[3] युष्मान् भगवन्नात्मना सह । मुधैव संभ्रमोऽदर्शि शरद्गर्जितवन्मया ॥ १२७ ॥
आरभ्य तद्दिनाद्यूयं न पृष्टा नच वंदिताः । न चान्नपानवस्त्राद्यैः कदाचिदपि सत्कृताः ॥ १२८ ॥
जाग्रत्सुषुप्तावस्थेन[4] मया मूढेन किं कृतम् । यद्यूयमवजज्ञिध्वे ध्वस्तस्ववचसा चिरम् ॥ १२९ ॥
भगवंतः सहध्वं तत् प्रमादाचरणं मम । सर्वसहा महांतो हि सदा सर्वंसहोपमाः[5] ॥ १३० ॥
सूरयोऽप्यूचिरेऽस्माकं त्वया किं किं न सत्कृतम् । दुःश्वापदेभ्यो[6] दस्युभ्यस्त्रायमाणेन[7] वर्त्मनि ॥ १३१ ॥
तवैव सार्थिका यच्छंत्यन्नपानादि चोचितम् । तन्न सीदति नः किंचिन्मा विषीद महामते ॥ १३२ ॥
धनोप्यूचे गुणानेव संतः पश्यंति सर्वतः । ततो मम सदोषस्याप्याराध्यैरेवमुच्यते[8] ॥ १३३ ॥

---

१ तदनुजानतः तदनुज्ञाकारिणः । २ निषद्य उपविश्य । ३ आकारयता आमन्त्रण कुर्वता । ४ जाग्रतापि सुषुप्तावस्थागतेनेत्यर्थः । ५ सर्वसहा पृथ्वी तदुपमा इत्यर्थः । ६ दुःश्वापदेभ्यो दुष्टहिंस्रप्राणिभ्यः । ७ दस्युभ्यश्चौरेभ्यः । ८ आराध्यैराराद्धुमुचितैः ।

अस्य पुस्तकस्य द्वितीयावृत्तिरियं श्रीभावनगरस्थ जैनधर्मप्रसारकसभया

मुम्बय्या 'निर्णयसागरा' ख्यमुद्रणालये प्राकाश्यंनीता

संवत् १९६१

धर्मः संक्रमयत्युच्चैर्गुणान्गुरुरिवोज्ज्वलान् । धर्मः प्रकृष्टां स्वामीव प्रतिष्ठां च प्रयच्छति ॥ १४८ ॥
धर्मः शर्ममहाहर्म्यं धर्मो वर्मारिसंकटे । धर्मो जाड्यच्छिदाघर्मो धर्मो मर्माविदंहसाम् ॥ १४९ ॥
धर्माज्जंतुर्भवेद्भूपो धर्माद्रामोऽर्धचक्र्यपि । धर्माच्चक्रधरो धर्माद्देवो धर्माच्च वासवः ॥ १५० ॥
ग्रैवेयकानुत्तरेषु धर्माद्यात्यहमिंद्रताम् । धर्मादार्हत्यमाप्नोति किं किं धर्मान्न सिध्यति ॥ १५१ ॥
दुर्गतिप्रपतज्जंतुधारणाद्धर्म उच्यते । दानशीलतपोभावभेदात्स तु चतुर्विधः ॥ १५२ ॥
तत्र तावद्दानधर्मस्त्रिप्रकारः प्रकीर्त्तितः । ज्ञानदानाभयदानधर्मोपग्रहदानतः ॥ १५३ ॥
दानं धर्मानभिज्ञेभ्यो वाचनादेशनादिना । ज्ञानसाधनदानं च ज्ञानदानमितीरितम् ॥ १५४ ॥
ज्ञानदानेन जानाति जंतुस्तस्य हिताहितम् । वेत्ति जीवादितत्वानि विरतिं च समश्नुते ॥ १५५ ॥
ज्ञानदानादवाप्नोति केवलज्ञानमुज्ज्वलम् । अनुगृह्याखिलं लोकं लोकाग्रमधिगच्छति ॥ १५६ ॥
भवत्यभयदाने तु जीवानां वधवर्जनम् । मनोवाक्कायैः करणकारणानुमतैरपि ॥ १५७ ॥
तत्र जीवा द्विधा ज्ञेयाः स्थावरत्रसभेदतः । द्वितीयोऽपि द्विधा पर्याप्ताऽपर्याप्तविशेषतः ॥ १५८ ॥
पर्याप्तयस्तु षडिमाः पर्याप्तत्वनिबंधनम् । आहारो वपुरक्षाणि प्राणो भाषा मनोऽपि च ॥ १५९ ॥
स्युरेकाक्षविकलाक्षपंचाक्षाणां शरीरिणाम् । चतस्रः पंच षड् वापि पर्याप्तयो यथाक्रमम् ॥ १६० ॥
एकाक्षाः स्थावरा भूम्यप्तेजोवायुमहीरुहाः । तेषां तु पूर्वे चत्वारः स्युः सूक्ष्मा बादरा अपि ॥ १६१ ॥

१ शर्ममहाहर्म्यं सुखमहाहर्म्यं । २ जाड्यच्छिदाघर्मः शैत्यविच्छेदे घर्मरूपः । ३ मर्म्माणि विध्यतीति मर्म्मावित् । ४ अर्धचक्री वासुदेवः । ५ लोकाग्र मोक्ष । ६ कृतकारितानुमोदितैः । ७ अक्षाणि इंद्रियाणि । ८ विकलाक्षशब्देन द्वीन्द्रियादयो ग्राह्याः ।

युग्मधर्मास्त्रिगव्यूत्युच्छ्रयाः पल्यत्रयायुषः । पर्यंतप्रसवाः स्वल्पकषाया ममतोज्झिताः ॥ २२९ ॥
अपत्ययुग्ममेकोनपंचाशतमहानि तु । पालयित्वा विपद्यंतेऽथोत्पद्यंते सुरेषु ते ॥ २३० ॥
शर्करास्वादु[1]सिकताः शरज्ज्योत्स्नानिभांभसः । तत्रोत्तरेषु कुरुषु भूम्यो रम्याः स्वभावतः ॥ २३१ ॥
मद्यांगप्रमुखास्तत्र दशधा कल्पपादपाः । मनुजानामयत्नेन सदा यच्छंति वांछितम् ॥ २३२ ॥
ददते तत्र मद्यांगा मद्यं भृंगा*स्तु भाजनम् । तूर्यांगकास्तु तूर्याणि वर्याणि विविधैर्लयैः ॥ २३३ ॥
दीपशिखा ज्योतिष्काश्च तन्वंत्युद्योतमद्भुतम् । माल्यं यच्छंति चित्रांगा भोज्यं चित्ररसाः पुनः ॥ २३४ ॥
भूषणानि तु मण्यंगा गेहाकारा गृहाणि तु । संपादयंति चाऽनग्ना दिव्यवासांस्यनेकशः ॥ २३५ ॥
एते च नियतानर्थान्यच्छंत्यनियतानपि । अन्ये च कल्पतरवस्तत्र सर्वेप्सितप्रदाः ॥ २३६ ॥
दिवीव तत्र कल्पद्रुः संपन्नसकलेप्सितः । धनजीवो युग्मधर्मान्वभूद्वैषयिकं सुखम् ॥ २३७ ॥
मिथुनायुः पालयित्वा धनजीवस्ततश्च सः । प्राग्जन्मदानफलतः सौधर्मे त्रिदशोऽभवत् ॥ २३८ ॥
च्युत्वा सौधर्मकल्पाच्च विदेहेष्वपरेष्वथ । विजये गंधिलावत्यां वैताढ्यपृथिवीधरे ॥ २३९ ॥
गंधाराख्ये जनपदे पुरे गंधसमृद्धके । राज्ञः शतबलाख्यस्य विद्याधरशिरोमणेः ॥ २४० ॥
भार्यायां चंद्रकांतायां पुत्रत्वेनोदपादि सः । नाम्ना महाबल इति बलेनाति महाबलः ॥ २४१ ॥
त्रिभिर्विशेषकं
रक्ष्यमाणः स आयुक्तै[2]र्लाल्यमानस्तथा तथा । वृद्धिमासादयामास शाखीव[3] क्रमयोगतः ॥ २४२ ॥

१ शर्करावत् स्वादुवेलुकाः । * भृगकल्पवृक्षस्य भृताङ्ग इत्यपरनामापि प्रसिद्ध । २ आयुक्तैः रक्षकैः । ३ शाखीव वृक्ष इव ।

# प्रस्तावना.

इह खलु निखिलेऽपि भारतवर्षे समुल्लसंत्येव कोटिश प्राचीनैरर्वाचीनैश्च सत्कविचिन्तामणिभिर्निर्मितानि सदुपदेशामृतमयानि परिस्फुरदैहिकामुष्मिकश्रेयश्श्रयानि संप्राप्तपरमाभ्युदयानि परिपूर्णपरिपाकमृदुलतममृद्वीकामृदीयांसि निरवधिमाधुर्यधुर्यसुधारसस्वादीयांसि मनोवचोविलासदवीयांसि निरंतराप्रतिमतमरससंदोहनिष्यंदानि समुच्छलदमन्दानंदकन्दानि विविधानेककाव्यकथाकथानकग्रंथवृंदानि । तत्रापि श्रीमदर्हच्चरणसरोजलीनस्वान्तमिलिंदानां वागीश्वरीलीलानिलयायमानमानसानां सकलसागरांबरावलयविभूषणायमानगुणगणानां कृतभवपरिभवानां कलिकालसर्वज्ञाना श्रीहेमचन्द्राचार्याणां सुधामधुरिमावलेपलोपपरिपाटीपटीयसीनां काव्यकृतीनां लोकोत्तरचमत्कारितया सर्वोत्कर्षेण कोऽपि विलक्षणो महिमा जरीजृंभीति । यासां पीयूषपूरप्रतिस्पर्द्धिभिश्च रसप्रसरैर्निरवकाशलेशं पूर्णानि काव्यरत्नपरीक्षणचणानां विद्वद्गणानामन्तःकरणानि निःसीमानन्दमयानि भवंति । त इमे श्रीमदाचार्याः श्रीविक्रमार्कसमयात् पचचत्त्वारिंशदधिके एकादशे शतके सौराष्ट्रदेशांतरगत " धंधुका " ख्यग्रामे मौढज्ञातीयवणिक्वंशोद्भवस्य कस्यचित् चाचिगाख्यस्य गृहिण्या " पाहिणी " नाम्न्या उदराच्चन्द्रपानस्वप्नसूचनेन प्रादुर्भूय " चंगदेव " इत्याख्यया प्रथिता अभूवन् । एकदा श्रीदेवचद्रसूरयो विहरन्तस्तत्राभ्यगच्छन् । रथ्यायां सवयोभी रममाणं सल्लक्षणलक्षितं भव्याकृतिमष्टवर्षवयसं चंगदेव प्रेक्ष्य तद्गृहे गत्वा तन्मातरं पाहिणीं संबोध्य तं सह नीत्वा ते कर्णावटीनगरीमभ्यैयुः । तदा चाचिगो गृहे नासीत् यदा स गृहमागत्य स्वपुत्रहर्त्तार जैनमुनिं शुश्राव तदा सखेदस्तं प्रत्यानेतु कर्णावटीमन्वगच्छत् ।

स्वछंदं तस्य विषयक्रीडाव्यग्रस्य सर्वदा । समरात्रिंदिवः कालो बभूव विषुवन्निभः[1] ॥ २८४ ॥
अनेकामात्यसामंतैर्मणिस्तंभैरिवापरैः । परिष्कृतां निजास्थानीं सोधितस्थावथैकदा ॥ २८५ ॥
तं नत्वोपाविशन् सर्वे यथास्थानं सभासदः । ते तदेकाग्रनयना योगिलीलामधारयन् ॥ २८६ ॥
ते स्वयंबुद्धसंभिन्नमती शतमतिस्तथा । महामतिश्च तत्रासांचक्रिरे मंत्रिणोऽपि हि ॥ २८७ ॥
स्वामिभक्तिसुधासिंधुर्मनीषारत्नरोहणः[2] । सम्यग्दृष्टिः स्वयंबुद्ध इति तत्र व्यचिंतयत् ॥ २८८ ॥
अस्माकं पश्यतामेष दुर्वाजिभिरिवेंद्रियैः । ह्रियते विषयासक्तः स्वामी धिङ् न उपेक्षकान् ॥ २८९ ॥
ईदृग्विनोदव्यग्रस्य जन्मास्मत्स्वामिनो मुधा । यातीति ताम्यति मनो मीनः स्तोक इवांभसि ॥ २९० ॥
अस्माभिर्मंत्रिभिरसौ न चेदुच्चैः पदं श्रयेत् । तदस्माकं भवेन्नर्ममंत्रिणां च किमंतरम् ॥ २९१ ॥
तद्विज्ञपय्य नेतव्योऽस्माभिः स्वामी हिते पथि । नीयंते यत्र तत्रैते यांति सारणिवन्नृपाः[3] ॥ २९२ ॥
यद्यप्यपवदिष्यंते स्वामिव्यसनजीविनः । वाच्यं तथापि नोप्यंते यवा मृगभयेन किं ॥ २९३ ॥
विमृश्येति स्वयंबुद्धो धौरेयो बुद्धिशालिनाम् । इति विज्ञपयामास राजानं रचितांजलिः ॥ २९४ ॥
आसंसारं सरिन्नाथः किं तृप्यति सरिज्जलैः । सरित्पतिपयोभिर्वा किमेष वडवानलः ॥ २९५ ॥
अंतको जंतुभिः किं वा किमेधोभिर्[4]हुताशनः । सुखैर्वैषयिकैरात्मा किं तथैव कदाचन ॥ २९६ ॥
कूलच्छाया दुर्जनाश्च विषं च विषयास्तथा । दंदशूकाश्च जायंते सेव्यमाना विपत्तये ॥ २९७ ॥

---

१ तुलामेषराशिस्थिते सूर्ये समरात्रिदिनात्मकः कालो विषुवत् । २ मनीषारत्नरोहणो बुद्धिरत्नस्य रोहणाचलरूप. । ३ सारणिः जलप्रसारिणी तद्वत् । ४ एधोभिः काष्ठैः ।

चक्रवर्त्यप्यधर्मः सन् जन्म तत्र लभते पुनः । कदन्नमपि संप्राप्तं यत्र राज्याय मन्यते ॥ ३११ ॥
महाकुलप्रसूतोऽपि धर्मोपार्जनवर्जितः । भवेद्भवांतरे श्वेव परोच्छिष्टान्नभोजनः ॥ ३१२ ॥
धर्महीनो द्विजन्मापि नित्यं पापानुबंधकः । बिडाल इव दुर्वृत्तो म्लेच्छयोनिषु जायते ॥ ३१३ ॥
बिडालव्यालशार्दूलश्येनगृध्रादियोनिषु । भवंति भूयिष्ठभवा भविनो धर्मवर्जिताः ॥ ३१४ ॥
धर्महीनाः कृमयः स्युरसकृच्छकृदादिषु । कुकुटादेर्लभंते च चंचूचरणताडनम् ॥ ३१५ ॥
जायंते धर्मरहिता नरा नरकभूमिषु । वैरादिव कदर्थ्यंते परमाधार्मिकैः क्रुधा ॥ ३१६ ॥
अनंतव्यसनावेगज्वलनांतरवर्त्तिनः । त्रपुःपिण्डानिव हहा धिगधर्मान् शरीरिणः ॥ ३१७ ॥
धर्मादाप्नोति शर्माणि परमादिव बांधवात् । तैरंडेनेव तरति धर्मेण विपदापगाः ॥ ३१८ ॥
पुंसां शिरोमणीयंते धर्मार्जनपरा नराः । आश्रीयंते च संपद्भिर्लताभिरिव पादपाः ॥ ३१९ ॥
आधिव्याधिविरोधादि सर्वं बाधानिबंधनम् । विध्यायत्याशु धर्मेण जलेनेव हुताशनः ॥ ३२० ॥
जन्मांतरेप्यर्पणाय सर्वकल्याणसंपदाम् । प्रतिभूर्धर्म एवायमलंकर्मीणविक्रमः ॥ ३२१ ॥
किमन्यदुच्यते स्वामिन् धर्मेणैव बलीयसा । सौधाग्रमिव निश्रेण्या लोकाग्रं यान्ति जंतवः ॥ ३२२ ॥
विद्याधरनरेन्द्रत्वं धर्मेणैव त्वमासदः । अतोप्युत्कृष्टलाभाय धर्ममेव समाश्रय ॥ ३२३ ॥
दर्शरात्रिरिवात्यंतमिथ्यात्वमितिराकरः । ततो विषोपममतिः संभिन्नमतिरब्रवीत् ॥ ३२४ ॥

---

१ कदन्न कुत्सितमन्न । २ शकृदादिषु गोमयादिषु । ३ त्रपुःपिण्डान् सीसकपिण्डान् । ४ तरण्डेन नौकया । ५ विध्यायति शाम्यति।
६ दर्शरात्रिरमावास्यारात्रिः ।

बलदेवानामतिचमत्कारि चरित्रं सविस्तरं वर्णितं । तत्रैतस्मिन् प्रथमपर्वणि षड्भिः सर्गैः श्रीयुगादीशचरित्र तदंतर्गतभरतचक्रिचरित्रं च विस्तरेण कथितं । कथाप्रसङ्गेऽन्तरान्तरा जैनमतस्वरूपं विविच्य प्रकाशित यथा प्रथमसर्गे धनसार्थवाहभवे धर्मघोषसूरिकृतदेशनाप्रसगे चतुर्विधधर्मकथनं तत्र त्रिविधदानेऽभयदानप्रसंगे जीवानां सर्वभेदा लक्षणानि च प्रकटीकृत्य तत्पुण्यफलं प्रदर्शितं धर्मोपग्रहदानप्रसंगे दायकशुद्ध–ग्राहकशुद्ध–देयशुद्ध–कालशुद्ध–भावशुद्ध–इति पंचभेदाः सलक्षणाः कथिताः । तपोभेदान् विविच्य भावलक्षण स्पष्टीकृतं । तदनु महाबलकुमारकथाया तत्सभाप्रसगे स्वयबुद्धादिमंत्रिणां विवादे चेतनाचेतनस्वरूपं दृष्टांतपूर्वं सम्बोध्य बौद्धादिनास्तिकमतानां स्थापनपूर्वक खंडनं प्रदर्शितं । स्वयंप्रभायाः पूर्वभववार्त्ताप्रसंगे युगंधरमुनेर्देशनायां विविधनारकिदु खवर्णनं वज्रनाभचक्रिकथाप्रसगे सर्वासा लब्धीनां सविस्तरवर्णनं विंशतिस्थानकतपसां प्रभावादि च सविस्तर प्रपंचितं । द्वितीयसर्गे सागरचंद्रप्रियदर्शनाकथाप्रसंगेऽवसर्पिण्यादिकालगणना तदारकाणां संख्या च सव्यास स्पष्टीकृता । तृतीयसर्गे श्रीयुगादीशदेशनाप्रसगे जैनतत्वानि विस्तरेण कथितानि । एवं सर्वतो जैनमतानुयायिनां पदे पदे प्रतिबोधकारकमनंतपुण्यानुबंधिनमिम ग्रथं विज्ञायास्माभिर्मुद्राप्य प्रकाशितः । आशास्महे सर्वेषां साधुसाध्वीश्रावकश्राविकाणामत्रवाचने पठने पाठने श्रवणे प्रवृत्ति साधीयसी स्यादिति । महता यत्नेन ग्रंथोयं अस्मदीयशास्त्रिनर्मदाशकरशर्मणा चत्वारि पुस्तकानि संमील्यप रिशोधितस्तथापि यद्यत्र किञ्चित् स्खलितं सुधीभिर्लक्ष्येत तत्परिशोधनीयमिति सानुनयं प्रार्थयामहे वय ।

सवत् १९६१ श्रावण

श्रीजैनधर्मप्रसारक सभा,
भावनगर.

अमूर्वाप्यो रत्नमय्यः सौवर्णकमलाकराः । तवा[1]क्रीडनगाश्चैते रत्नकांचनसानवः ॥ ४८५ ॥
एताः स्वच्छजलाः क्रीडानद्यः सद्यः प्रमोददाः । क्रीडोद्यानानि चैतानि नित्यपुष्पफलानि ते ॥ ४८६ ॥
सदःसदनमेतत्ते स्वर्णमाणिक्यनिर्मितम् । आदित्यमंडलमिव द्युतिद्योतितदिग्मुखम् ॥ ४८७ ॥
एताश्च चामरादर्शता[2]लवृंताकपाणयः । सर्ववारं वार[3]नार्यस्त्वत्सेवैकमहोत्सवाः ॥ ४८८ ॥
अयं चतुर्विधातोद्यचतुरः पुरतस्तव । गंधर्ववर्गः संगीतकृते सज्जोऽवतिष्ठते ॥ ४८९ ॥
दत्तोपयोगस्तत्कालमवधिज्ञानतस्ततः । स दिनं ह्यस्तनमिव पूर्वजन्मैवमस्मरत् ॥ ४९० ॥
विद्याधरपतिः सोऽहं स्वयंबुद्धेन मंत्रिणा । धर्ममित्रेण जैनेंद्रं धर्ममस्मि विबोधितः ॥ ४९१ ॥
प्रव्रज्यां प्रतिपन्नोहं तदैवाऽनशनं व्यधाम् । आसदं तत्फलमिदमहो धर्मस्य वैभवम् ॥ ४९२ ॥
इति स्मृत्वा समुत्थाय दत्तबाहुः स वेत्रिणा । सिंहासनमलंचक्रे स्फूर्जज्जयजयध्वनिः ॥ ४९३ ॥
ततोऽभिषिषिचे देवैरवीज्यत स चामरैः । अगीयत च गंधर्वैः कल[4]मंगलगीतिभिः ॥ ४९४ ॥
समुत्थाय ततोप्येष भक्तिभावितमानसः । गत्वा चैत्येऽर्हत्प्रतिमाः पूजयामास शाश्वतीः ॥ ४९५ ॥
देवैर्ग्रामत्रयोद्गारमधुरे गीतमंगले । क्रियमाणे जिनाधीशं सोऽस्तावीद्विविधैः स्तवैः ॥ ४९६ ॥
ततोऽसौ वाचयामास पुस्तकान् ज्ञानदीपकान् । आनर्च्च मंरूपस्तंभस्थितान्यस्थीनि चार्हताम् ॥ ४९७ ॥
अथ दिव्यातपत्रेण पार्वणें[5]दुसनाभिना । भ्राजिष्णुर्धार्यमाणेन स लीलासदनं ययौ ॥ ४९८ ॥

---

१ आक्रीडनगाः क्रीडापर्वताः । २ तालवृन्तः व्यजन । ३ वारनार्य्यो वेश्याः । ४ कलमङ्गलगीतिभिः मधुरमङ्गलगीतैः । ५ पूर्णिमाचन्द्रतुल्येन ।

वत्से नारकषण्ढानां[1] यद्दुःखं तदशेषतः । श्राव्यमाणमपि प्राणभाजां दुःखाय जायते ॥ ५६९ ॥
किं च प्रत्यक्षमीक्ष्यंते जलस्थलखचारिणः । प्राणिनो विविधं दुःखमापेदानाः[2] स्वकर्मजम् ॥ ५७० ॥
तत्र वारिचराः स्वैरं खादंत्यन्योन्यमुत्सुकाः । धीवरैः परिगृह्यंते गिल्यंते च बकादिभिः ॥ ५७१ ॥
उत्कील्यंते त्वचयद्भिर्भृज्ज्यंते च भटित्रवत् । भोक्तुकामैर्विपच्यंते निगाल्यंते वसार्थिभिः ॥ ५७२ ॥
प्राणिनश्च स्थलचरा अबला बलवत्तरैः । मृगाद्याः सिंहप्रमुखैर्मार्यंते मांसभक्षिभिः ॥ ५७३ ॥
मृगयासक्तचित्तैश्च क्रीडया मांसकाम्यया । नरैस्तत्तदुपायेन हन्यंतेऽनपराधिनः ॥ ५७४ ॥
क्षुधापिपासाशीतोष्णातिभारारोपणादिना । कशांकुशप्रतोदैश्च सहंते वेदनाममी ॥ ५७५ ॥
खेचरास्तित्तिरशुककपोतचटकादयः । श्येनसिंचानगृध्राद्यैर्गृह्यंते मांसगृध्नुभिः ॥ ५७६ ॥
मांसलुब्धैः शाकुनिकैर्नानोपायप्रपंचतः । संगृह्य प्रतिहन्यंते नानारूपैर्विडंबनैः ॥ ५७७ ॥
जलादिशस्त्रादिभवं तिरश्चां सर्वतोभयम् । अभग्नप्रसरं स्वस्वकर्मबंधनिबंधनम् ॥ ५७८ ॥
मानुष्यकेऽपि संप्राप्ते जायंते केऽपि जन्मिनः। जन्मांधबधिरा जन्मपंगवो जन्मकुष्ठिनः ॥ ५७९ ॥
चौरिकापारदारिक्यप्रसक्ताः केऽपि मानवाः । नवैर्नवैर्निगृह्यंते निग्रहैर्नारका इव ॥ ५८० ॥
विविधैर्व्याधिभिः केपि बाध्यमाना निरंतरम् । प्रेक्ष्यमाणाः परमुखमुपेक्ष्यंते सुतैरपि ॥ ५८१ ॥
मूल्यक्रीताश्च ताड्यंते केचिदश्वतरा इव । अतिभारं च वाह्यंते साह्यंते च तृषादिकम् ॥ ५८२ ॥
परस्परपराभूतिक्लिष्टानां द्युसदामपि । स्वस्वामिभावबद्धानां दुःखमेव निरंतरम् ॥ ५८३ ॥

---

१ नारकिना । २ आपेदाना आप्नुवाना ।

॥ श्री ॥

# त्रिषष्टिशलाकापुरुषचरिते प्रथमपर्वणि.

## आदीश्वरचरित्रं.

सकलार्हत्प्रतिष्ठानमधिष्ठानं शिवश्रियः । भूर्भुवःस्वस्त्रयीशानमार्हन्त्यं प्रणिदध्महे ॥ १ ॥
नामाकृतिद्रव्यभावैः पुनतस्त्रिजगज्जनम् । क्षेत्रे काले च सर्वस्मिन्नर्हतः समुपास्महे ॥ २ ॥
आदिमं पृथिवीनाथमादिमं निष्परिग्रहम् । आदिमं तीर्थनाथं च ऋषभस्वामिनं स्तुमः ॥ ३ ॥
अर्हंतमजितं विश्वकमलाकरभास्करम् । अम्लानकेवलादर्शसंक्रांतजगतं स्तुवे ॥ ४ ॥
विश्वभव्यजनारामकुल्यातुल्या जयंति ताः । देशनासमये वाचः श्रीसंभवजगत्पतेः ॥ ५ ॥
अनेकांतमतांभोधिसमुल्लासनचंद्रमाः । दद्यादमंदमानंदं भगवानभिनंदनः ॥ ६ ॥
द्युसत्किरीटशाणाग्रोत्तेजितांघ्रिनखावलिः । भगवान् सुमतिः स्वामी तनोत्वभिमतानि वः ॥ ७ ॥
पद्मप्रभप्रभोर्देहभासः पुष्णंतु वः शिवम् । अंतरंगारिमथने कोपाटोपादिवारुणाः ॥ ८ ॥
श्रीसुपार्श्वजिनेंद्राय महेंद्रमहितांघ्रये । नमश्चतुर्वर्णसंघगगनाभोगभास्वते ॥ ९ ॥

---

१ अम्लानो यः केवलज्ञानरूप आदर्शस्तस्मिन् सङ्क्रान्तानि जगन्ति यस्य स त । २ समग्रभव्यजन एव आरामस्तस्मिन् कुल्यातुल्याः सारणिसमानाः । कोपाटोपात् ३ कोपाडम्बरात् ।

तच्च दर्शयास्याः स्वं त्वयि रक्ता सती मृता । सा ते पत्नी भवेदंते या मतिः सा गतिः किल ॥ ५९९ ॥
तच्चक्रे ललितांगोऽपि सापि तद्रागिणी सती । मृत्वा स्वयंप्रभा नाम तत्पत्न्यजनि पूर्ववत् ॥ ६०० ॥
प्रणष्टां प्रणयक्रोधादिव प्राप्य प्रियां ततः । स रेमेऽभ्यधिकं तापे रत्यै छाया हि जायते ॥ ६०१ ॥
रममाणस्तया सार्द्धं गते काले कियत्यपि । आत्मच्यवनचिह्नानि ललितांगो व्यलोकयत् ॥ ६०२ ॥
तस्य रत्नाभरणानि निस्तेजस्कानि जज्ञिरे । मम्लुश्च मौलिमाल्यानि तद्वियोगभयादिव ॥ ६०३ ॥
मालिन्यं भेजिरे सद्यस्तस्यांगवसनानि च । आसन्ने व्यसने लक्ष्म्या लक्ष्मीनाथोऽपि मुच्यते ॥ ६०४ ॥
भोगेष्वत्यंतमासक्तिस्तस्याभूद्धर्मबाधया । प्रकृतिव्यत्ययः प्रायो भवत्यंते शरीरिणाम् ॥ ६०५ ॥
जजल्प शोकविरसं तस्य सर्वः परिच्छदः । भाविकार्यानुसारेण वागुच्छलति जल्पताम् ॥ ६०६ ॥
आकालप्रतिपन्नाभ्यां प्रियाभ्यां च सदैव हि । कृतापराध इव स श्रीह्रीभ्यां पर्यमुच्यत ॥ ६०७ ॥
अदीनोऽपि हि दैन्येन विनिद्रोऽपि हि निद्रया । स शिश्रिये मृत्युकाले पक्षाभ्यामिव कीटिका ॥ ६०८ ॥
हृदयेन समं तस्य विश्लिष्यत्संधिबंधनाः । महाबलैरप्यकंप्याः कल्पवृक्षाश्च कंपिरे ॥ ६०९ ॥
तस्याऽरुजोऽप्यभज्यंत सर्वांगोपांगसंधयः । भाविदुर्गतियानोत्थवेदनाशंकनादिव ॥ ६१० ॥
पदार्थग्रहणे तस्यापटुर्दृष्टिरजायत । तथैव स्थितिमन्येषामक्षमेव निरीक्षितुम् ॥ ६११ ॥
गर्भावासनिवासोत्थदुःखागमभयादिव । प्रकंपतरलान्यंगान्यस्याजायन्त तत्क्षणम् ॥ ६१२ ॥
क्रीडागिरिसरिद्वापीदीर्घिकोपवनेषु सः । रम्येष्वपि रतिं नाप सपालक इव द्विपः ॥ ६१३ ॥

१ लक्ष्मीनाथो विष्णुः । २ परिच्छदः परिवारः । ३ कीटिकानां मृत्युकाले पक्षोत्पत्तिर्भवति । ४ महागानसहितः ।

...मूर्त्तिर्मूर्त्तसितध्याननिर्मितेव श्रियेऽस्तु वः ॥ १० ॥
चंद्रप्रभप्रभोश्चंद्रमरीचिनिचयोज्ज्वला । ...
...सुविधिर्बोधयेऽस्तु वः ॥ ११ ॥
करामलकवद्[1]विश्वं कलयन् केवलश्रिया । अचिंत्यमाहात्म्यनिधिः सुविधिर्बोधयेऽस्तु वः ॥ ११ ॥

सत्वानां परमानंदकंदोद्भेदनवांबुदः । स्याद्वादामृतनिस्यंदी शीतलः पातु वो जिनः ॥ १२ ॥
भवरोगार्त्तजंतूनामगदंकारदर्शनः । निःश्रेयसश्रीरमणः श्रेयांसः श्रेयसेऽस्तु वः ॥ १३ ॥
विश्वोपकारकीभूततीर्थकृत्कर्मनिर्मितिः । सुरासुरनरैः पूज्यो वासुपूज्यः पुनातु वः ॥ १४ ॥
विमलस्वामिनो वाचः कतकक्षोदसोदराः[2] । जयंति त्रिजगच्चेतोजलनैर्मल्यहेतवः ॥ १५ ॥
स्वयंभूरमणस्पर्द्धी करुणारसवारिणा । अनंतजिदनंतां वः प्रयच्छतु सुखश्रियम् ॥ १६ ॥
कल्पद्रुमसधर्माणमिष्टप्राप्तौ शरीरिणाम् । चतुर्धा धर्मदेष्टारं धर्मनाथमुपास्महे ॥ १७ ॥
सुधासोदरवाग्ज्योत्स्नानिर्मलीकृतदिङ्मुखः । मृगलक्ष्मा तमःशांत्यै शांतिनाथजिनोऽस्तु वः ॥ १८ ॥
श्रीकुंथुनाथो भगवान् सनाथोऽतिशयर्द्धिभिः । सुरासुरनृनाथानामेकनाथोऽस्तु वः श्रिये ॥ १९ ॥
अरनाथः* स भगवांश्चतुर्थारनभोरविः । चतुर्थपुरुषार्थश्रीविलासं[3] वितनोतु वः ॥ २० ॥
सुरासुरनराधीशमयूरनववारिदम् । कर्मद्रून्मूलने हस्तिमल्लं मल्लिमभिष्टुमः ॥ २१ ॥
जगन्महामोहनिद्राप्रत्यूषसमयोपमम् । मुनिसुव्रतनाथस्य देशनावचनं स्तुमः ॥ २२ ॥
लुठंतो नमतां मूर्ध्नि निर्मलीकारकारणम् । वारिप्लवा[4] इव नमेः पांतु पादनखांशवः ॥ २३ ॥

---

१ करामलकवत् कररिथतनिर्मलजलवत् । २ कतकचूर्णसमानाः । * अरनाथस्तु इत्यपि पाठः । ३ चतुर्थपुरुषार्थश्रीविलास मोक्षलक्ष्मीविलास । ४ वारिप्लवा जलप्रवाहाः ।

योग्यं ज्ञात्वा वज्रजंघं स्वर्णजंघोऽथ नृपतिः । राज्ये निवेशयामास स्वयं दीक्षामुपाददे ॥ ६८९ ॥
सूनोः पुष्कलपालस्य दत्वा राज्यश्रियं निजाम् । प्राव्राजीद्वज्रसेनोऽपि जज्ञे तीर्थंकरश्च सः ॥ ६९० ॥
विलसन्वज्रजंघोऽपि श्रीमत्या सह कांतया । उवाह लीलया राज्यमंभोजमिव कुंजरः ॥ ६९१ ॥
अवाप्तयोर्विप्रयोगं गंगासागरयोरिव । तयोर्भुंजानयोर्भोगान् सुतः समुदपद्यत ॥ ६९२ ॥
अथ पुष्कलपालस्य व्यक्रियंत महारुषः । समंतात्सीमसामंताः सर्पाकारोपमाजुषः ॥ ६९३ ॥
तेन तेषां द्विजिह्वानामिव साधनहेतवे । नरेंद्रो वज्रजंघोऽथ समाहूतोऽचलद्बली ॥ ६९४ ॥
श्रीमत्यपि समं वज्रजंघेन जगतीभुजा । अचालीदचलाभक्तिः पौलोमीव बिडौजसा ॥ ६९५ ॥
स गच्छन्नर्द्धमार्गेऽथ महाशरवणं पुरः । ददर्श दर्शयामिन्यामपि ज्योत्स्नाभ्रमप्रदम् ॥ ६९६ ॥
दृग्विषोहिरिहास्तीति विज्ञप्तः सोऽध्वगैरगात् । पथाऽन्येन नयज्ञा हि प्रस्तुतार्थेषु तत्पराः ॥ ६९७ ॥
आययौ पुंडरीकिण्यां पुंडरीकोपमोऽथ सः । सामंतमंडलं सर्वं वशेऽभूत्पुष्कलस्य च ॥ ६९८ ॥
राजा पुष्कलपालोऽपि पुष्कलानि विधेयवत् । विविधानि व्यधादस्य स्वागतानि गुरोरिव ॥ ६९९ ॥
श्रीमंतं श्रीमतीबंधुमनुज्ञाप्याऽन्यदा तु सः । श्रीमत्या सहितोऽचालीच्छ्रियःपतिरिव श्रिया ॥ ७०० ॥
सोऽथ प्राप्तः शरवणं निकषा कर्षणो द्विषाम् । इत्यूचे कुशलैर्यानमध्येनाप्यस्य संप्रति ॥ ७०१ ॥
उत्पेदे केवलज्ञानं द्वयोरत्राऽनगारयोः । तत्र देवागमोद्द्योताद् दृग्विषो निर्विषोऽभवत् ॥ ७०२ ॥
नाम्ना सागरसेनश्च मुनिसेनश्च तौ मुनी । राजन्नत्रैव विद्येते सूर्याचंद्रमसाविव ॥ ७०३ ॥

---

१ अन्तर्भेदं प्राप्ताः । २ पौलोमी इन्द्राणी । ३ विधेयवत् शिष्यवत् । ४ द्विषां कषणः संहारकः ।

यदुवंशसमुद्रेन्दुः कर्मकक्षहुताशनः । अरिष्टनेमिर्भगवान् भूयाद्वोऽरिष्टनाशनः ॥ २४ ॥
कमठे धरणेन्द्रे च स्वोचितं कर्म कुर्वति । प्रभुस्तुल्यमनोवृत्तिः पार्श्वनाथः श्रियेऽस्तु वः ॥ २५ ॥
कृतापराधेऽपि जने कृपामंथरतारयोः । ईषद्बाष्पार्द्रयोर्भद्रं श्रीवीरजिननेत्रयोः ॥ २६ ॥
एषां तीर्थकृतां तीर्थेष्वासन् द्वादशचक्रिणः । नवार्धचक्रिणो रामास्तथा प्रत्यर्धचक्रिणः ॥ २७ ॥
एते शलाकापुरुषा भूतभाविशिवश्रियः । त्रिषष्टिरवसर्पिण्यां भरतक्षेत्रसंभवाः ॥ २८ ॥
एतेषां चरितं ब्रूमः शलाकापुंस्त्वशालिनाम् । महात्मनां कीर्त्तनं हि श्रेयो निश्रेयसास्पदम् ॥ २९ ॥
तत्र तावद्भगवतश्चरित्रमृषभप्रभोः । बोधिबीजावाप्तिहेतोर्भवादारभ्य वर्ण्यते ॥ ३० ॥
अस्त्यसंख्यांबुधिद्वीपवलयैः परिवेष्टितः । जंबूद्वीप इति द्वीपो वज्रवेदिकया वृतः ॥ ३१ ॥
भूषितस्य स्रवंतीभि[1]र्वर्षै[2]र्वर्षधरैरपि । स्वर्णरत्नमयो मेरुर्मध्ये तस्यास्ति नाभिवत् ॥ ३२ ॥
स लक्षयोजनोच्छ्रायो मेखलात्रयभूषितः । चत्वारिंशद्योजनोच्चचूलोऽर्हच्चैत्यमंडितः ॥ ३३ ॥
अस्ति पश्चिमतस्तस्य विदेहेषु महापुरम् । क्षितिप्रतिष्ठितं नाम क्षितिमंडलमंडनम् ॥ ३४ ॥
तत्र प्रसन्नचंद्रोऽभून्नि[3]स्तंद्रो धर्मकर्मसु । देवराजोपमो राजा राजमानो महर्द्धिभिः ॥ ३५ ॥
तत्र चासीत्सार्थवाहो धनो नाम यशोधनः । आस्पदं संपदामेकं सरितामिव सागरः ॥ ३६ ॥
आसंस्तस्य महेभ्यस्यानन्यसाधारणाः श्रियः । परोपकारैकफला रुचो हिमरुचेरिव ॥ ३७ ॥
सदा सदाचारनदीप्रवाहैकमहीधरः । सेवनीयो न कस्यासीत्स महीतलपावनः ॥ ३८ ॥

---

१ स्रवन्तीभिः नदीभिः । २ वर्षैः खण्डैः । ३ निस्तन्द्रोऽनलसः ।

जंबूद्वीपे विदेहेषु पुरे क्षितिप्रतिष्ठिते । वैद्यस्य सुविधेः पुत्रः स जीवानंद इत्यभूत् ॥ ७१९ ॥
तदैव तस्मिन्नगरे चत्वारोऽन्येऽपि दारकाः । उदपद्यंत धर्मस्य भेदा इव वपुर्जुषः ॥ ७२० ॥
अभूत्तत्रैक ईशानचंद्रस्य पृथिवीपतेः । भार्यायां कनकवत्यां सूनुर्नाम्ना महीधरः ॥ ७२१ ॥
मंत्रिणोऽन्यः सुनासीरनाम्नः पत्न्यामजायत । लक्ष्म्यां श्रीनंदन इव सुबुद्धिर्नाम नंदनः ॥ ७२२ ॥
अन्यः सागरदत्तस्य सार्थवाहपतेरभूत् । भार्यायामभयवत्यां पूर्णभद्राभिधः सुतः ॥ ७२३ ॥
चतुर्थस्य समुत्पेदे पत्न्यां श्रेष्ठिधनस्य तु । शीलमत्यां शीलपुंज इव नाम्ना गुणाकरः ॥ ७२४ ॥
प्रयत्नाद्रक्ष्यमाणास्ते बालधारैर्दिवानिशम् । समं ववृधिरे सर्वेऽप्यंगेऽगावयवा इव ॥ ७२५ ॥
सह पांशुक्रीडनास्ते जगृहुः सममेव हि । कलाकलापं सकलं मेघांभः पादपा इव ॥ ७२६ ॥
तत्रैव नगरे जीवः श्रीमत्या अपि सोऽभवत् । सूनुरीश्वरदत्तस्य श्रेष्ठिनः केशवाभिधः ॥ ७२७ ॥
समं च मिलितास्तेन ते षण्मित्राणि जज्ञिरे । अवियुक्ताः करणांतःकरणानीव सर्वदा ॥ ७२८ ॥
विदांचकारायुर्वेदं जीवानंदोऽपि पैतृकम् । अष्टांगमौषधीश्चापि रसवीर्यविपाकतः ॥ ७२९ ॥
ऐरावण इवेभेषु गृहेष्विव दिवाकरः । अभूत् प्राज्ञो निरवद्यविद्यो वैद्येषु सोऽग्रणीः ॥ ७३० ॥
सोदर्या इव संभूय रममाणाः सदैव ते । कदाचित्कस्यचिद्वेश्मन्यन्योन्यस्यावतस्थिरे ॥ ७३१ ॥
एकदा वैद्यपुत्रस्य जीवानंदस्य मंदिरे । एतेषां तिष्ठतामेकः साधुर्भिक्षार्थमाययौ ॥ ७३२ ॥
पृथ्वीपालस्य राज्ञः स सूनुर्नाम्ना गुणाकरः । राज्यं मलमिवोत्सृज्य शमसाम्राज्यमाददे ॥ ७३३ ॥

१ पांशुक्रीडना रज क्रीडना । २ करणानि इन्द्रियाणि अन्तःकरण मनस्तान्यपि षट्सङ्ख्यकानि ।

आसन् बीजान्यमोघानि प्रभवाय यशस्तरोः ॥ ३९ ॥
तस्मिन्नौदार्यगांभीर्यधैर्यप्रभृतयो गुणाः । आसन् बीजान्यमोघानि प्रभवाय यशस्तरोः ॥ ४० ॥
कणानामिव रत्नानामुत्करास्तस्य वेश्मनि । गोणीनामिव देवांगवाससामपि राशयः ॥ ४१ ॥
अश्वैरश्वतरैरुष्ट्रैर्वाहनैरपरैरपि । तस्य वेश्म व्यराजिष्ट यादोभिरिव सागरः ॥ ४२ ॥
धनिनां गुणिनां कीर्त्तिशालिनां च नृणामसौ । धुर्यत्वं धारयामास प्राणोऽङ्गमरुतामिव ॥ ४३ ॥
अर्थैस्तस्य महार्थस्य पर्यपूर्यत सेवकाः । महासरोवरस्येव स्यंदैरभ्यर्णभूमयः ॥ ४४ ॥
स गृहीतमहाभांड उत्साह इव मूर्त्तिमान् । ईहांचक्रेऽन्यदा गंतुं वसंतपुरपत्तनम् ॥ ४५ ॥
सार्थवाहो धनस्तस्मिन् सकलेऽपि पुरे ततः । डिंडिमं ताडयित्वोच्चैः पुरुषानित्यघोषयत् ॥ ४६ ॥
असौ धनः सार्थवाहो वसंतपुरमेष्यति । ये केप्यत्र यियासंति ते चलंतु सहाऽमुना ॥ ४७ ॥
भांडं दास्यत्यभांडायाऽवाहनाय च वाहनम् । सहायं चाऽसहायायाऽशंबलाय च शंबलम् ॥ ४८ ॥
दस्युभ्यस्त्रास्यते मार्गे श्वापदोपद्रवादपि । पालयिष्यत्यसौ मंदान् सहगान्बांधवानिव ॥ ४९ ॥
क्षणे स कल्पः कल्याणे कुलस्त्रीकृतमंगलः । रथमास्थाय विदधे प्रस्थानं पत्तनाद्बहिः ॥ ५० ॥
प्रस्थानभेरीभांकारैराकारकनरैरिव । जनाः सर्वेऽपि तत्रेयुर्वसंतपुरगामिनः ॥ ५१ ॥
अत्रांतरे धर्मघोष आचार्यः साधुचर्यया । धर्मेण पावयन् पृथ्वीं सार्थवाहमुपाययौ ॥ ५२ ॥
ससंभ्रममथोत्थाय धनो दीप्रं तपस्त्विषा । सहस्रांशुमिवाचार्यमवंदत कृतांजलिः ॥ ५३ ॥

---

१ यादोभिर्जलजन्तुभिः । २ अङ्गमरुता अङ्गान्तर्गतसर्ववायूना मध्येप्राणोनामवायुर्यथा धुर्यत्व धारयामासतथा । ३ क्षुद्रप्रवाहैः ।
४ शम्बल पाथेय । ५ कल्पः समर्थः । ॰ सकलकल्याणे इत्यपि क्वचित् पाठः । ६ आकारकैः आह्वानकारकपुरुषैः ।

तीर्थकृत्पादसेवायास्तपसो दुस्तरस्य च । असंतुष्टाः सदाऽभूवंस्ते संतोषधना अपि ॥ ७३८ ॥
ते नित्यं तीर्थकृद्वाणीपीयूषरसपायिनः । अपि मासोपवासादितपसा नैव चक्लमुः ॥ ७३९ ॥
भगवान् वज्रसेनोऽपि शुक्लध्यानं श्रितोंऽतिमम् । निर्वाणं प्राप गीर्वाणप्रपंचितमहोत्सवम् ॥ ७४० ॥
सनाभिरिव धर्मस्य वृतो व्रतसनाभिभिः । मुनिभिर्वज्रनाभोऽपि विजहार वसुंधराम् ॥ ७४१ ॥
स्वामिना वज्रनाभेन बाह्वाद्याः सच सारथिः । सनाथा जज्ञिरे पंचेंद्रियाणीवांतरात्मना ॥ ७४२ ॥
तेषां योगप्रभावेन सर्वाः खेलादिलब्धयः । औषध्य इव शैलानामाविरासन् शशित्विषा ॥ ७४३ ॥
तेषां श्लेष्मलवेनापि संश्लिष्टं कुष्ठिनो वपुः । कोटिवेधरसेनेव ताम्रराशिः सुवर्ण्यभूत् ॥ ७४४ ॥
कर्णनेत्रादिभूरंगभूश्च तेषामभून्मलः । कस्तूरिकापरिमलो रोगघ्नः सर्वरोगिणाम् ॥ ७४५ ॥
तेषां वपुःपरिस्पर्शमात्रादपि शरीरिणः । सरुजो नीरुजोऽभूवन् सुधांभःस्नपनादिव ॥ ७४६ ॥
तदंगसंगादंभोदमुक्तं नद्यादिवार्यपि । सर्वरोगान् पयोऽहार्षीत्तमांसीवांशुमन्महः ॥ ७४७ ॥
विषादिदोषाः प्राणश्यंस्तदंगस्पर्शवायुना । गंधसिंधुरदानांभोगंधेनेवान्यसिंधुराः ॥ ७४८ ॥
विषसंपृक्तमन्नादि तेषां पात्रे मुखेऽपि वा । संप्रविष्टं सुधाखंड इव निर्विषतामगात् ॥ ७४९ ॥
वचनस्मरणात्तेषां विषं मंत्राक्षरादिव । बाधामहाविषव्याधिबाधितस्याप्यपासरत् ॥ ७५० ॥
नखाः केशा रदाश्चान्यदपि तेषां शरीरजम् । भेजे भैषज्यतां सर्वं मुक्तात्वं शुक्तिवारिवत् ॥ ७५१ ॥
आसन्नणीयसीं मूर्त्तिं तथा ते कर्त्तुमीश्वराः । यथा संचरितुमलं सूचीरंध्रेऽपि तंतुवत् ॥ ७५२ ॥

१ सनाभिः सहोदर. । २ कोटिवेधनामा रसविशेषः ।

धनेन पृष्टास्त्वाचार्याः समागमनकारणम् । वसंतपुरमेष्यामस्त्वत्सार्थेनेत्यचीकथन् ॥ ५३ ॥
सार्थवाहोऽप्युवाचैवं धन्योऽद्य भगवन्नहम् । अभिगम्या यदायाता मत्सार्थेन च यास्यथ ॥ ५४ ॥
आचार्याणां कृतेऽमीषामन्नपानाद्यमन्वहम् । संपादनीयं युष्माभिः सूदानित्यादिशच्च सः ॥ ५५ ॥
आचार्या अप्यवोचंत यतीनामशनादिकम् । अकृतं चाकारितं चासंकल्प्यं चापि कल्पते ॥ ५६ ॥
वापीकूपतडागादि गतं वार्यपि वार्यते । अशस्त्रोपहतं सार्थनाथ जैनेंद्रशासने ॥ ५७ ॥
अत्रांतरे च केनापि सार्थवाहस्य ढौकितम् । पक्वचूतांचितं स्थालं भ्रष्टसंध्याभ्रसंनिभम् ॥ ५८ ॥
प्रमोदमेदुरमना निजगाद ततो धनः । फलान्यमूनि गृह्णीतानुगृह्णीत च मामिति ॥ ५९ ॥
सूरिरूचे फलादीदृगशस्त्रोपहतं हि नः । न स्प्रष्टुमपि कल्पेत किं पुनः श्राद्ध खादितुम् ॥ ६० ॥
धनोऽवोचदहो कापि दुष्करव्रतकारिता । शक्यं दिनमपीदृक्षैर्जीवितुं न प्रमादिभिः ॥ ६१ ॥
कल्प्यं वः स्याद्यदन्नादि तद्दास्यामि प्रसीदत । चलताद्येत्युदित्वा तान्नत्वा च व्यसृजन्मुनीन् ॥ ६२ ॥
सार्थवाहस्ततोऽचालीत् चंचलैस्तुरगैर्मयैः । शकटैरुक्षभिस्तुंगैस्तरंगैरिव सागरः ॥ ६३ ॥
अथ प्रचेलुराचार्या अपि साधुभिरावृताः । मूर्त्ततामाश्रितैर्मूलगुणोत्तरगुणैरिव ॥ ६४ ॥
सार्थस्याग्रे धनः पृष्टे माणिभद्रः सखाऽस्य तु । ईयतुः पार्श्वयोस्तत्रश्वयारवारावचारितौ ॥ ६५ ॥
श्वेतछत्रैः स चक्रे द्यां शरदभ्रमयीमिव । मायूरैरातपत्रैश्च प्रावृडब्दमयीमिव ॥ ६६ ॥

---

१ अशस्त्रोपहत अग्न्यादिशस्त्रोपहतं न भवति यत्तदशस्त्रोपहतं अप्रासुकमित्यर्थः । * क्वचित्पुस्तके "ऽकारि" इत्यपि पाठः । २ मयै-रुष्ट्रैः । ३ उक्षभिः वृषैः ।

रे निर्मर्याद पुंस्खेट[1] त्वयैतच्चिंतितं कथम् । चिंतितं वा कथं तूक्तं धिक् साहसमचेतसः ॥ ७३ ॥
किं च संभावयसि रे महात्मानं पतिं मम । आत्मानुरूपमेवैवं धिक् त्वां मित्रमिषाद्द्विषम् ॥ ७४ ॥
गच्छ मा तिष्ठ रे पाप पापं त्वद्दर्शनादपि । इत्याक्रुष्टस्तया शीघ्रं स दस्युरिव निर्ययौ ॥ ७५ ॥
स गोहत्याकर इवांधकारमलिनाननः । विमनस्कः समागच्छन् सागरेण व्यलोक्यत ॥ ७६ ॥
हे मित्र हेतुना केन त्वमुद्विग्न इवेक्ष्यसे । इति सागरचंद्रेण सोऽपृच्छि स्वच्छचेतसा ॥ ७७ ॥
ततः स मायाकूटाद्रिर्दीर्घं निःश्वासमुद्वहन् । विकूणिताधरः किंचिद्दुष्टः कष्टादिवाऽवदत् ॥ ७८ ॥
जाड्यहेतुमिव हिमवद्भूमाभृदन्त्यर्णवासिनाम् । संसारे वसतां भ्रातः पश्यस्युद्वेगकारणम् ॥ ७९ ॥
न यच्छादयितुं नापि प्रकाशयितुमिष्यते । तदस्थानव्रणमिव किमपीहोपतिष्ठते ॥ ८० ॥
इत्युदित्वा स्थिते मायादर्शिताश्रुविलोचने । अशोकदत्ते सोऽमायश्चिंतयामासिवानिति ॥ ८१ ॥
अहो असारः संसारः पुंसां यत्रेदृशामपि । संदेहपदमीदृक्षमकस्मादुपजायते ॥ ८२ ॥
अस्य धैर्यादवदतोऽप्यंतरुद्वेग उच्चकैः । हुताश इव धूमेन बलाद्बाष्पेण सूच्यते ॥ ८३ ॥
चिंतयित्वेति सुचिरं सद्यस्तद्दुःखदुःखितः । भूयः सागरचंद्रस्तमित्युवाच सगद्गदम् ॥ ८४ ॥
अप्रकाश्यं न चेद्बंधो तच्छंसोद्वेगकारणम् । दत्वा दुःखविभागं मे स्तोकदुःखो भवाधुना ॥ ८५ ॥
अशोकदत्तोऽपीत्यूचे मम प्राणसमे त्वयि । अन्यदप्यप्रकाश्यं न वृत्तांतोऽयं विशेषतः ॥ ८६ ॥
इदं वयस्यो जानाति सदाऽपि यदिहांगना । अनर्थानां प्रसूर्दर्शशर्वरी[2] तमसामिव ॥ ८७ ॥

---

१ हेपुरुषाधम । २ दर्शशर्वरी अमावास्यारात्रिः ।

करभैः[1] सैरभै[2]रुक्षवरैरश्वतरैः खरैः । तस्योहे दुर्वहं भांडं धनवातै[3]रिव क्षितिः ॥ ६७ ॥
वेगादलक्ष्यमाणांघ्रिपाता वातमजा[4] इव । ययुः पार्श्वस्थगोणीभिरुत्पक्षा इव वेसराः[5] ॥ ६८ ॥
यूनामंतर्विनिष्ठानां तत्र क्रीडानिबंधनम् । जंगमानीव वेश्मानि शकटानि चकाशिरे ॥ ६९ ॥
महाकाया महास्कंधा महिषास्तोयवाहिनः । महीप्राप्ता इवांभोदा जनानां चिच्छिदुस्तृषाम् ॥ ७० ॥
तदा तद्भांडसंभारभाराक्रांता समंततः । शकटश्रेणिचित्कारै ररासेव वसुंधरा ॥ ७१ ॥
औक्षकेणौष्ट्रकेणाऽश्वनोद्भूतः पांशुरानशे । तथा दिवं यथा विष्वक् सूचीभेद्यं तमोऽभवत् ॥ ७२ ॥
उक्ष्णां घंटाटणत्कारैर्बधिरीकृतदिङ्मुखैः । चमर्यस्तत्रसुदूरादुत्कर्णास्तर्णकैः समम् ॥ ७३ ॥
महाभारं वहंतोऽपि क्रामंतोऽपि क्रमेलकाः[7] । वलितग्रीवमग्राणि भूरुहां लिलिहुर्मुहुः ॥ ७४ ॥
उत्कर्णसरलग्रीवं दशंतो दशनैर्मिथः । पृष्टप्रविष्टकंगालाः पृष्ठा एवाऽभवन् खराः ॥ ७५ ॥
आरक्षकैः प्रतिदिशं वेष्टितः शस्त्रपाणिभिः । वज्रपंजरमध्यस्थ इव सार्थोऽवहत्पथि ॥ ७६ ॥
महार्थस्यापि सार्थस्य दूरेऽस्थुस्तस्य दस्यवः । महार्घमौलिरत्नस्य भुजंगमपतेरिव ॥ ७७ ॥
निःस्वाऽऽढ्ययो[8]र्निर्विशेषं योगे[9] क्षेमे[10] च सोद्यमः । धनः सर्वान् सहाऽनैषीद्यूथेशः कलभानिव ॥७८॥
आशास्यमानः सकलैर्लोकैः स्फारितलोचनैः । दिने दिने रविरिव प्रयाणमकरोद्धनः ॥ ७९ ॥

---

१ उष्ट्रैः । २ सरभैर्महिषैः । ३ घनवाताः पृथ्व्याधारभूता वातविशेषाः । ४ वातमजाः पवनाभिमुखचारिणो मृगविशेषाः । ५ वेसराः अश्वतराः । ६ वत्सतरैः । ७ क्रमेलकाः उष्ट्रा । ८ निःस्वाढ्ययोर्निर्धनधनाढ्ययो । ९ अप्राप्तस्य प्राप्त्युपायो योगः । १० प्राप्तस्य रक्षण क्षेम ।

तेनैवमृजुना सोऽनुनीतः प्रमुमुदेऽधमः । सत्कारयंति ह्यात्मानं कृत्वाप्यागांसि मायिनः ॥ १०३ ॥
ततःप्रभृति निःस्नेहः सागरः प्रियदर्शनाम् । सोद्वेगं धारयामास रोगग्रस्तामिवांगुलीम् ॥ १०४ ॥
किं तु तां वर्त्तयामासोपरोधात्प्राग्वदेव सः । वंध्याप्युन्मूल्यते नैव लता या लालिता स्वयम् ॥ १०५ ॥
मत्कृतो मानयोर्भेदोऽभूदिति प्रियदर्शना । नाशोकदत्तवृत्तांतं तं प्रियाय न्यवेदयत् ॥ १०६ ॥
कारागाराय संसारं मन्यमानोऽथ सागरः । ऋद्धिं कृतार्थयामास दीनादिषु नियोगतः ॥ १०७ ॥
कालेन पूरयित्वायुः सागरः प्रियदर्शना । अशोकदत्तश्च ययुः कालधर्मं त्रयोऽपि ते ॥ १०८ ॥
जंबूद्वीपस्य भरतक्षेत्रदक्षिणखंडके । गंगासिंधूत्तरस्यांतर्भागे मध्येऽवसर्पिणि ॥ १०९ ॥
तृतीयारे पल्याष्टमांशशेषे युग्मरूपतः । ततः समुदपद्येतां सागरप्रियदर्शने ॥ ११० ॥ युग्मम् ॥
भारतेषु च वर्षेषु पंचस्वैरवतेषु च । द्वादशारं कालचक्रं हेतुः कालव्यवस्थितेः ॥ १११ ॥
कालो द्विविधोऽवसर्पिण्युत्सर्पिणीविभेदतः । अराः षडवसर्पिण्यां एकांतसुखमादयः ॥ ११२ ॥
तत्रैकांतः सुखमारश्चतस्रः कोटिकोटयः । सागराणां सुषमा तु तिस्रस्तत्कोटिकोटयः ॥ ११३ ॥
सुषमदुःखमा ते द्वे दुःखमसुषमा पुनः । सैका सहस्रैर्वर्षाणां द्विचत्वारिंशतोनिता ॥ ११४ ॥
एकविंशतिरब्दानां सहस्राणि तु दुःखमा । एकांतदुःखमापि स्यात्तावद्वर्षप्रमाणिका ॥ ११५ ॥
अरका अवसर्पिण्यां य एते समुदीरिताः । उत्सर्पिण्यां त एव स्युः प्रतिलोमक्रमेण तु ॥ ११६ ॥
तदेवमवसर्पिण्यामुत्सर्पिण्यां च मीलिताः । सागरोपमकोटीनां कोटयः खलु विंशतिः ॥ ११७ ॥

१ आगासि अपराधान् ।

सरसां सरितां चापस्तनूकुर्वन् निशा इव । उद्दामः समभूत्पांथत्तीष्मो ग्रीष्मऋतुस्तदा ॥ ८० ॥
भ्राष्ट्रमिंधा इव ववुर्वायवोऽत्यंतदुःसहाः । आतपं तपनस्तेने विष्वग् वह्निकुंडोपमं ॥ ८१ ॥
तत्सार्थपथिकास्तस्थुरनूपांतं तरुं तरुं । प्रपां प्रपां प्रवेशं च पायं पायं पयोऽलुठन् ॥ ८२ ॥
जिह्वामकर्षन् महिषा निःश्वासप्रेरिता इव । विविशुश्च नदीपंकेष्ववधीरितकाहराः ॥ ८३ ॥
रथिकानवमत्यापि प्राजनेषु पतत्स्वपि । उन्मार्गपादपानीयुरुक्षाणश्च क्षणे क्षणे ॥ ८४ ॥
तप्ताऽयःसूचीसदृशै रोचिभिश्चंडरोचिषः । व्यलीयंत शरीराणि विष्वग् मंदनपिंडवत् ॥ ८५ ॥
तप्ताऽयःफालकराणि तरणिर्नितरां दधौ । पथि क्षिप्तकरीषाग्निवैषम्यं पांसवोऽवहन् ॥ ८६ ॥
प्राविशन् मार्गसरितः परितः सार्थयोषितः । उन्मूल्य नलिनीनालान् गलनालेषु चिक्षिपुः ॥ ८७ ॥
घर्मान्तःक्लिन्नवासोभिरशोभंत भृशं पथि । जलार्द्रा इव विभ्रत्यः सार्थपांथपुरंध्रयः ॥ ८८ ॥
पलाशतालहिंतालनलिनी कदलीदलैः । तालवृंतीकृतैः पांथाश्छिन्दुर्घर्मजं श्रमम् ॥ ८९ ॥
ग्रीष्मस्येव स्थितिच्छेदं गतिच्छेदं प्रवासिनाम् । विदधानः समागच्छन् मेघचिह्नमृतुस्ततः ॥ ९० ॥
यातुधान इवाकाशे दधानो धन्व वारिदः । कुर्वन् धाराशरासारं सार्थेनोत्रासमैद्यत ॥ ९१ ॥
अलातमिव तडितं तडित्वान्भ्रमयन्मुहुः । निर्भरं भापयामास पथिकान् बालकानिव ॥ ९२ ॥
अभ्रंलिहैः पयःपूरैः कूलिनीनां प्रसारिभिः । कूलानि पांथहृदयानीव सद्यो विदद्रिरे ॥ ९३ ॥

१ भ्राष्ट्रमिन्धा भ्राष्ट्रकर्मकारकाः । २ प्रपा जलसत्र । ३ अवधीरितकाहरास्तिरस्कृतकशाविशेषाः । ४ प्राजनेषु कशाविशेषेषु । ५ मदनपिण्डवत् लोके"मिण्"इति प्रसिद्ध । ६ यक्षः । ७ उल्मुक अर्धदग्धकाष्ठ वा ।

अस्मिन्नप्यरके प्राग्वत् क्रामति न्यूनमेव हि । वपुरायुर्भूमाधुर्यकल्पद्रुमहिमाऽपि च ॥ १३३ ॥
पूर्वप्रज्ञावरहिते चतुर्थे त्वरके नराः । पूर्वकोट्यायुषः पंचधनुःशतसमुच्छ्रयाः ॥ १३४ ॥
पंचमे तु वर्षशतायुषः सप्तकरोच्छ्रयाः । षष्ठे पुनः षोडशाब्दायुषो हस्तसमुच्छ्रयाः ॥ १३५ ॥
एकांतदुःखप्रचिता उत्सर्पिण्यामपीदृशाः । पश्चानुपूर्व्या विज्ञेया अरेषु किल षट्स्वपि ॥ १३६ ॥
तृतीयारांतजातत्वाद्दैर्घ्ये नवधनुःशतौ । पल्यदशमाशायुष्कावभूतां तौ तु युग्मिनौ ॥ १३७ ॥
वज्रऋषभनाराचसंधिबंधं वपुस्तयोः । समेन चतुरस्रेण संस्थानेन परिष्कृतम् ॥ १३८ ॥
युग्मधर्मी स शुशुभे जात्यजांबूनद[1]द्युतिः । प्रियंगुवर्णया पत्न्या सुमेरुरिव मेघया[2] ॥ १३९ ॥
तत्रैवाऽशोकदत्तोऽपि प्राग्जन्मकृतमायया । श्वेतवर्णश्चतुर्दतः सुरदंतीव दंत्यभूत् ॥ १४० ॥
भ्राम्यतेतस्ततः स्वैरमन्येद्युस्तेन दंतिना । स युग्मधर्मी पुरतः प्राग्जन्मसुहृदैक्ष्यत ॥ १४१ ॥
तद्दर्शनामृतासारस्फारीभूततनोस्ततः । बीजस्येवांकुरस्तस्य स्नेहः समुदपद्यत ॥ १४२ ॥
हस्तिना तेन हस्तेनादायालिंग्य यथासुखम् । अनिच्छन्नपि स स्कंधप्रदेशमधिरोहितः ॥ १४३ ॥
अन्योन्यदर्शनाभ्यासाद्द्वयोरपि तयोस्ततः । जज्ञे पुरस्कृतस्येव स्मरणं पूर्वजन्मनः ॥ १४४ ॥
चतुर्दतद्विपस्कंधारूढं ददृशुरिंद्रवत् । तमन्ये विस्मयोत्तानलोचना युग्मरूपिणः ॥ १४५ ॥
शंखकुंदें[3]दुविमलं गजमारूढ इत्यसौ । ततः प्रोच्यत मिथुनैर्नाम्ना विमलवाहनः ॥ १४६ ॥
जातिस्मृत्या स नीतिज्ञो विमलद्विपवाहनः । प्रकृत्या रूपवांश्चेति जज्ञे सर्वजनाधिकः ॥ १४७ ॥

१ जाम्बूनद सुवर्णम् । २ मेघमालया । ३ कुन्द माघ्यकुसुमम् ।

विदधुर्गंधकाषाय्या तयोरंगप्रमार्जनम् । केशांश्च वेष्टयामासुर्वाससा मसृणेन[1] ताः ॥ ८०४ ॥
तास्ते क्षौमाणि संधाय्यासयित्वा चासनांतरे । केशेभ्यश्चोतयत् वारि मुक्तावृष्टिभ्रमं दिशत् ॥ ८०५ ॥
ईषदार्द्रानधूपायन् दिव्यधूपेन कुंतलान् । स्निग्धधूमलतापुष्टश्रीविशेषांस्तयोश्च ताः ॥ ८०६ ॥
पद्मखंडपतद्बालारुणरोचिर्विडंबिना । अमंडयंस्तयोः पादानलक्तकरसेन ताः ॥ ८०७ ॥
अंगनारत्नयोरंगमंगरागेण चारुणा । कांचनं गैरिकेणेव विलिंपंति स्म तास्तयोः ॥ ८०८ ॥
ग्रीवाभुजाग्रवक्षोजगंडदेशेषु तास्तयोः । प्रशस्तीरिव कामस्य लिलिखुः पत्रवल्लरीः ॥ ८०९ ॥
अलिके[2] तिलकं चारु चक्रुस्ताश्चांदनं तयोः । रतिदेव्यवताराय प्रत्यग्रमिव[3] मंडलम् ॥ ८१० ॥
तयोः प्रसाधयामासुर्नयनान्यंजनेन ताः । नीलोत्पलवनायातभृंगसब्रह्मचारिणा[4] ॥ ८११ ॥
तयोर्बबंधुर्धम्मिल्लमुन्मीलन्माल्यदाम ताः । पुष्पायुधेनेवकृतमायुधागारमात्मनः ॥ ८१२ ॥
पारिणेत्राणि[5] वस्त्राणि ताभ्यां ताः पर्यधापयन् । लंबमानदशाश्रेणिन्यकृतेंदुकराण्यथ[6] ॥ ८१३ ॥
तयोरधिशिरोन्यासन् विचित्रमणिभासुरौ । तौ किरीटौ पुष्पदंतौ[7] पूर्वापरदिशोरिव ॥ ८१४ ॥
तत्कर्णयोर्मणिमयावतंसौ ता न्यवीविशन् । रत्नांकुरितमेरूर्वीगर्वसर्वस्वतस्करौ ॥ ८१५ ॥
ताः समारोपयामासुर्दिव्ये मौक्तिककुंडले । तत्कर्णलतयोर्नव्यपुष्पगुच्छविडंबिनी ॥ ८१६ ॥
निष्कं ताश्चित्रमाणिक्यदीप्तिदंतुरितांबरम् । संक्षिप्तेंद्रधनुर्लक्ष्मीहरं कंठे न्यधुस्तयोः ॥ ८१७ ॥

---

१ कोमलेन । २ ललाटे । ३ प्रत्यग्र नवीन । ४ सब्रह्मचारिणा तुल्येन । ५ पारिणेत्र "पानेतर" इति लोके प्रसिद्ध वस्त्र ।
६ लम्बमानप्रान्तभागश्रेण्या तिरस्कृतचन्द्रकिरणानि । ७ पुष्पदन्तौ सूर्याचन्द्रमसौ ।

यामिन्याश्चरमे यामे मंदुरायामपालकः । ततश्च कश्चिदप्येवमपाठीदशठाशयः ॥ १०८ ॥
प्रत्याशं विस्फुरत्कीर्त्तिः प्राप्तोऽपि विषमां दशाम् । स्वामी नः पालयत्यात्मप्रतिपन्नमसावहो ॥ १०९ ॥
तदाकर्ण्य धनो दध्यावुपालब्धोऽस्मि केनचित् । अस्तीह मामके सार्थे को नामाऽत्यंतदुःस्थितः॥११०॥
आ ज्ञातं संति मे धर्मघोषाचार्याः सहागताः । अकृताकारितप्रासुभिक्षामात्रोपजीविनः ॥ १११ ॥
कंदमूलफलादीनि स्पृशंत्यपि न ये क्वचित् । अधुना दुःस्थिते सार्थे वर्त्तंते हंत ते कथम् ॥ ११२ ॥
मार्गकृत्यमुरीकृत्य पथि यानहमानयम् । तानद्यैव समस्मार्षं किमकार्षमचेतनः ॥ ११३ ॥
वाङ्मात्रेणापि नो येषामद्ययावत्कृतौचिती । स्वमुखं दर्शयिष्यामि तेषामद्य कथं न्वहम् ॥ ११४ ॥
तथाप्यद्यापि तान् दृष्ट्वा निजांहः क्षालयाम्यहम् । सर्वत्रापि निरीहाणां कार्यं तेषां तु किं मया ॥ ११५॥
इति चिंतयतस्तस्योत्सुकस्य मुनिदर्शने । तुर्यो यामस्त्रियामायास्त्रियामेवाऽपराऽभवत् ॥ ११६ ॥
विभातायां विभावर्यां शुचिवस्त्रविभूषणः । सूरीणामाश्रयमगात्सप्रधानजनो धनः ॥ ११७ ॥
पलाशछदनछन्नं सच्छिद्रतृणभित्तिकम् । स्थलस्थंफिलसंस्थानं तेषां सोऽविशदाश्रयम् ॥ ११८ ॥
मंथानमिव पापाब्धेः पंथानमिव निर्वृतेः । आस्थानमिव धर्मस्य संस्थानमिव तेजसाम् ॥ ११९ ॥
कषायगुल्मनीहारं हारं कल्याणसंपदः । संघस्याद्भुतमाकल्पं कल्पद्रुं शिवकांक्षिणाम् ॥ १२० ॥
पिंडीभूतं तप इव मूर्त्तिमंतमिवागमम् । तीर्थंकरमिवाद्राक्षीद्धर्मघोषमुनिं धनः ॥१२१॥ त्रिभिर्विशेषकम् ।

---

१ मन्दुरावाजिशाला तस्या यामपालकः प्राहरिकः । २ औचिती परिचर्या । ३ निजांहः स्वपापं । ४ त्रियामाया रात्र्याः । ५ मंथनदण्डम् । ६ आस्थानं सभास्थान भूषणरूपं ।

चंपकं चिन्वती काचिदलियूनोत्पतिष्णुना । दृश्यते स्माधरदले क्रुधेवाश्रयभंगतः[1] ॥ १००५ ॥
उच्चैरुच्चैः सुमनसः काचिदुत्क्षिप्तदोर्लता । जहार मनसा सार्द्धं यूनां दोर्मूलदर्शिनां ॥ १००६ ॥
प्रत्यग्रपुष्पस्तबकसनाथीकृतपाणयः । रेजुः पुष्पावचायिन्यो जंगमा इव वल्लयः ॥ १००७ ॥
प्रतिशाखं विलग्नाभिः पुष्पोच्चयकुतूहलात् । रेजिरे शाखिनः स्त्रीभिः संजातस्त्रीफला इव ॥ १००८ ॥
मल्लिकाकोरकैः कोपि कामिन्याः स्वयमुच्चितैः । सर्वांगाभरणं चक्रे मुक्तादामविडंबकम् ॥ १००९ ॥
प्रियायाः कोपि धम्मिल्लं विकचैर्निजपाणिना । कुसुमैः पूरयामास कुसुमेषोरिवेषुधिम् ॥ १०१० ॥
पंचवर्णैः स्रजं कश्चिद्ग्रथितां कुसुमैः स्वयम् । विडंबितेन्द्रधनुषं दत्वा कांतामतोषयत् ॥ १०११ ॥
सलीलं प्रियया कोपि प्रक्षिप्तं पुष्पकंदुकम् । प्रतीच्छति स्म पाणिभ्यां प्रासादमिव किंकरः ॥ १०१२ ॥
दोलादोलनसंजातयातायाता मृगीदृशः । जघ्नुः पादैः पादपाग्रान् सापराधान् पतीनिव ॥ १०१३ ॥
दोलारूढा नवोढा पृच्छंतीनां धवाभिधाम् । काप्यालीनां लताघातान् सेहे ह्रीमुद्रितानना ॥ १०१४ ॥
कातराक्ष्या समं कश्चिदारूढः संमुखीनया । गाढमांदोलयद्दोलां तद्गाढालिंगनेच्छया ॥ १०१५ ॥
प्रतिशाखं लंबमानदोलांदोलनलीलया । रेजुरुद्यानवृक्षेषु युवानः प्लवंगा[2] इव ॥ १०१६ ॥
एवं खेलयमानेषु तत्र पौरजनेष्वथ । दध्यौ स्वामी किमीदृक्षा क्रीडान्यत्रापि कुत्रचित् ॥ १०१७ ॥
जज्ञेऽथावधिना स्वामी स्वःसुखं चोत्तरोत्तरम् । अनुत्तरस्वर्गसुखं भुक्तपूर्वं स्वयं च तत् ॥ १०१८ ॥
भूयोऽप्यचिंतयदिदं विगलन्मोहबंधनः । धिगेष विषयाक्रांतो वेत्ति नात्महितं जनः ॥ १०१९ ॥

---

१ आश्रयभङ्गत. निजाश्रयरूपपुष्पभङ्गतः । २ प्लवगा वानराः ।

एवं विचिंतयंतौ तौ प्रणम्य पितरौ तदा । पप्रच्छतुः कच्छमहाकच्छावप्येवमूचतुः ॥ १२९ ॥
त्यक्त्वा राज्यं जगन्नाथो भगवानृषभध्वजः । भुवं विभज्य भरतादिभ्यो दत्वाग्रहीद्व्रतं ॥ १३० ॥
स्वामिना सममस्माभिरशेषैरभसावशात् । तदा तद्व्रतमारेभे हस्तिनेवेक्षुभक्षणम् ॥ १३१ ॥
क्षुधापिपासाशीतोष्णप्रभृतिक्लेशपीडितैः । तद्व्रतं मुमुचेऽस्माभिर्न्यस्ता धूः कंसरैरिव ॥ १३२ ॥
यद्यपि स्वामिनो गत्या वयं गंतुं न शक्नुमः । तथापि मुक्त्वा गार्हस्थ्यं वसामोऽत्र तपोवने ॥ १३३ ॥
स्वामिनो भूसंविभागमावामप्यर्थयावहे । इत्युक्त्वा नमिविनमी स्वामिपादावुपेयतुः ॥ १३४ ॥
निःसंग इत्यजानंतौ प्रभुं प्रतिमया स्थितम् । प्रणम्यैवं विज्ञापयांबभूवतुरुभावपि ॥ १३५ ॥
आवां प्रेष्यप्रेषणेन दूराद्देशांतरं विभोः । पुत्रेभ्यो भरतादिभ्यस्त्वया दत्ता विभज्य भूः ॥ १३६ ॥
मही गोष्पदमात्रापि त्वयावाभ्यां न किं ददे । इदानीमपि तद्देहि विश्वनाथ प्रसादतः ॥ १३७ ॥
दोषः किमावयोः कोपि देवदेवेन वीक्षितः । यद्दत्से नोत्तरमपि दूरेऽन्यद्देयमस्तु तत् ॥ १३८ ॥
प्रभुर्न किंचित्प्रत्यूचे वदंतावपि तौ तदा । निर्ममा हि न लिप्यंते कस्याप्यैहिकचिंतया ॥ १३९ ॥
न ब्रूते यद्यपि स्वामी तथापि गतिरेष नौ । इति निश्चित्य तौ देवं प्रवृत्तावुपसेवितुम् ॥ १४० ॥
जलं जलाशयान्नित्यमानीय नलिनीदलैः । ववृषुः स्वामिनोऽभ्यर्णे रजःप्रशमहेतवे ॥ १४१ ॥
तावुभांचक्रतुर्धर्मचक्रिणः पुरतः प्रगे । पुष्पप्रकरमामोदमाद्यन्मधुकरोत्करम् ॥ १४२ ॥
कृष्टासी च सिपेवाते स्वामिनं पारिपार्श्वकौ । अहर्निशं मेरुगिरिं सूर्याचंद्रमसाविव ॥ १४३ ॥

१ कसरैर्गर्धभैरश्वतरैर्वा । २ भृत्यप्रेषणेन । ३ प्रगे प्रातःकाले । ४ कृष्टासी आकृष्टखड्गौ ।

सर्वथा स्वप्रमादेन लज्जितोऽस्मि प्रसीदत । साधून् प्रेषयताहारं प्रयच्छामीच्छया यथा ॥ १३४ ॥
सूरिर्बभाषे योगेन वर्त्तमानेन वेत्सि नु । अकृताकारिताचित्तमन्नाद्युपकरोति नः[1] ॥ १३५ ॥
तदेव दास्ये साधूनां यदेवोपकरिष्यते । इत्युदित्वा च नत्वा च निजावासं ययौ धनः ॥ १३६ ॥
अस्यानुपदमेवाथ साधुद्वितयमागमत् । तदर्हं चान्नपानादि दैवादासीन्न किंचन ॥ १३७ ॥
इतस्ततोऽन्वेषयंश्च सार्थवाहः स्वयं ततः । ईक्षांचक्रे घृतं स्त्यानं[2] निजाशयमिवामलम् ॥ १३८ ॥
इदं च कल्पते किंचिदिति सार्थपतीरिते । इच्छामीति वदन् साधुः पतद्ग्रहमधारयत्[3] ॥ १३९ ॥
धन्योहं कृतकृत्योहं पुण्योहमिति चिंतयन् । रोमांचितवपुः सर्पिः साधवे स स्वयं ददौ ॥ १४० ॥
आनंदाश्रुजलैः पुण्यकंदं[4] कंदलयन्निव । घृतदानावसानेऽथ धनोऽवंदत तौ मुनी ॥ १४१ ॥
सर्वकल्याणसंसिद्धौ सिद्धमंत्रसमं ततः । वितीर्य धर्मलाभं तौ जग्मतुर्निजमाश्रयम् ॥ १४२ ॥
तदानीं सार्थवाहेन दानस्याऽस्य प्रभावतः । लेभे मोक्षतरोर्बीजं बोधिबीजं सुदुर्लभम् ॥ १४३ ॥
रजन्यां पुनरप्येषां मुनीनामाश्रयं ययौ । स प्रविश्यानुजानीतेति वदन् प्राणमद्गुरून् ॥ १४४ ॥
धर्मघोषसूरयोऽपि मेघनिर्घोषया गिरा । श्रुतकेवलिदेशीयां[5] दिदिशुर्देशनामिमाम् ॥ १४५ ॥
धर्मो मंगलमुत्कृष्टं धर्मः स्वर्गापवर्गदः । धर्मः संसारकान्तारोल्लंघने मार्गदेशकः[6] ॥ १४६ ॥
धर्मो मातेव पुष्णाति धर्मः पाति पितेव च । धर्मः सखेव प्रीणाति धर्मः स्निह्यति बंधुवत् ॥ १४७ ॥

---

१ अकृत अकारित अचित्त चेति एकवद्भावी द्वन्द्वः । २ स्त्यानं नवम् । ३ पतद्ग्रह पात्रम् । ४ पुण्यकन्द पुण्याङ्कुरम् । ५ श्रुतकेवलिसमानाम् । ६ मार्गदेशकः मार्गदर्शकः ।

अदृश्यत स्वर्णगिरिः परितः श्यामलो मया । अभिषिच्य पयस्कुंभैर्विहितोऽधिकमुज्ज्वलः ॥ २४५ ॥
॥ युग्मं ॥

सुबुद्धिश्रेष्ठिनाप्यैक्षि गोसहस्रं रवेश्च्युतम् । श्रेयांसेनाहितं तत्र ततोऽर्कोऽभ्यतिभासुरः ॥ २४६ ॥

अदर्शि सोभयशसा राज्ञैको बहुभिः परैः । रुद्धः समंताच्छ्रेयांसः साहाय्याज्जयमीयिवान् ॥ २४७ ॥

त्रयस्ते सदसि स्वप्नानन्योन्यस्य न्यवीवदन् । तन्निर्णयमजानंतः स्वं स्वं स्थानं पुनर्ययुः ॥ २४८ ॥

प्रादुर्भावयितुमिव तदा तत्स्वप्ननिर्णयं । भिक्षार्थं प्राविशत्स्वामी नगरं हस्तिनापुरम् ॥ २४९ ॥

संवत्सरं निराहारोप्यायान् वृषभलीलया । ददृशे वृषभस्वामी नागरैर्जातसंमदैः ॥ २५० ॥

उत्थायोत्थाय धावित्वा धावित्वा च ससंभ्रमम् । पौरैर्देशांतरायातबंधुवत्स्वाम्यवेष्ट्यत ॥ २५१ ॥

कोप्युवाचैहि भगवन् गृहाण्यनुगृहाण नः । वसंतोत्सववद्देव चिरादसि निरीक्षितः ॥ २५२ ॥

कोप्यवादीदिदं सज्जं स्नानीनं वरानं जलम् । तैलं पिष्टातकश्चेति स्नाहि स्वामिन् प्रसीद नः ॥ २५३ ॥

कोप्यूचे स्वोपयोगेन स्वामिन् मम कृतार्थय । जात्यचंदनकर्पूरकस्तूरीयक्षकर्दमान् ॥ २५४ ॥

कोप्युवाच जगद्रत्न रत्नालंकरणानि नः । स्वांगाधिरोपणात्स्वामिन्नलंकुरु दयां कुरु ॥ २५५ ॥

एवं व्यज्ञपयत्कोपि गृहे समुपविश्य मे । स्वामिन्नंगानुकूलानि दुकूलानि पवित्रय ॥ २५६ ॥

कश्चिदप्यब्रवीदेवं देव देवांगनोपमाम् । प्रभो गृहाण नः कन्यां धन्याः स्मस्त्वत्समागमात् ॥ २५७ ॥

कोप्यूचे पादचारेण क्रीरूयापि कृतेन किम् । इममारोह शैलाभं कुंजरं राजकुंजरम् ॥ २५८ ॥

---

१ गोसहस्र किरणसहस्र । २ जातहर्षः । ३ स्नानोचित ।

प्राकारस्य द्वितीयस्यांतरे चोत्तरपूर्वतः । देवच्छंदं विचक्रुस्ते स्वामिविश्रामहेतवे ॥ ४४४ ॥
तत्र प्रथमवप्रस्य द्वास्थौ प्राग्द्वारि तस्थतुः । स्वर्णवर्णावुभयतो वैमानिकदिवौकसौ ॥ ४४५ ॥
तस्यैव दक्षिणद्वारे पार्श्वयोर्द्वारपालकौ । प्रतिबिंबे इवान्योऽन्यस्यास्थातां व्यंतरौ सितौ ॥ ४४६ ॥
अन्वितः पश्चिमद्वारं ज्योतिष्कौ द्वारपालकौ । रक्तवर्णौ वितष्ठाते सायमिंदुरवी इव ॥ ४४७ ॥
तस्थतुश्च प्रतीहारावुत्तरद्वारपार्श्वयोः । भवनाधिपती कृष्णौ मेघाविव समुन्नतौ ॥ ४४८ ॥
द्वितीयवप्रद्वारेषु प्राक्क्रमेण चतुर्ष्वपि । सर्वा अप्यभयपाशांकुशमुद्गरपाणयः ॥ ४४९ ॥
देव्यो जया च विजया चाजिता चापराजिता । तस्थुश्चंद्राश्मशोणाश्मस्वर्णनीलत्विषः क्रमात् ॥४५०॥
॥ युग्मम् ॥

अंत्यवप्रे प्रतिद्वारं तस्थौ द्वास्थस्तु तुंबरुः । खट्वांगी नृशिरःस्रग्वी जटामुकुटमंडितः ॥ ४५१ ॥
मध्ये समवसरणं चैत्यद्रुर्व्यंतरैः कृतः । क्रोशत्रयोदयो रत्नत्रयोदयमिवादिशत् ॥ ४५२ ॥
तस्याधो विविधैरत्नैः पीठं विदधिरे च ते । तस्योपरिच्छंदकं चाप्रतिच्छंदमणीमयम् ॥ ४५३ ॥
तन्मध्ये पूर्वदिग्भागे रत्नसिंहासनं ततः । सपादपीठं ते चक्रुः सारं सर्वश्रियामिव ॥ ४५४ ॥
तस्योपरि विचक्रेऽथ तैश्छत्रत्रयमुज्ज्वलम् । स्वामिनस्त्रिजगत्स्वाम्यचिह्नत्रयमिवोच्चकैः ॥ ४५५ ॥
यक्षाभ्यां तत्र दधाते पार्श्वयोश्चामरौ शुची । हृद्यमांतौ बहिर्भूतौ स्वामिभक्तिभराविव ॥ ४५६ ॥
ततः समवसरणद्वारे हेमांबुजस्थितम् । अत्यद्भुतप्रभाचक्रं धर्मचक्रं विचक्रिरे ॥ ४५७ ॥

१ वेदिकाकारमासनविशेष । २ सितौ उज्ज्वलौ । ३ खट्वांगायुधधारी । ४ मुण्डमाली । ५ अप्रतिममणिमय । ६ सुवर्णकमलस्थित ।

देशतो विरतिः पंचाणुव्रतानि गुणास्त्रयः । शिक्षाव्रतानि चत्वारि चेति द्वादशधा मताः ॥ १८८ ॥
तत्र स्थूलाहिंसासत्यास्तेयब्रह्मापरिग्रहाः । अणुव्रतानि पंचेति कीर्त्तितानि जिनेश्वरैः ॥ १८९ ॥
अथ दिग्विरतिर्भोगोपभोगविरतिस्तथा । अनर्थदंडविरतिश्चैवं गुणव्रतत्रयी ॥ १९० ॥
सामायकं च देशावकाशिकं पौषधस्तथा । अतिथीनां संविभागः शिक्षाव्रतचतुष्टयम् ॥ १९१ ॥
तदेषा देशविरतिः शुश्रूषादिगुणस्पृशाम् । यतिधर्मानुरक्तानां धर्मपथ्यादनार्थिनाम्[1] ॥ १९२ ॥
[2]शमसंवेगनिर्वेदानुकंपास्तिक्यलक्षणम् । सम्यक्त्वं प्रतिपन्नानां मिथ्यात्वविनिवार्त्तिनाम् ॥ १९३ ॥
महात्मनां सानुबंधक्रोधोदयविवर्जिनाम् । चारित्रमोहघातेन जायते गृहमेधिनाम् ॥ १९४ ॥
त्रिभिर्विशेषकम् ।
स्थूलानामितरेषां च हिंसादीनां विवर्जनम् । सि[3]द्धिसौधैकसरणिः सा सर्वविरतिस्तथा ॥ १९५ ॥
प्रकृत्याल्पकषायाणां भवसौख्यविरागिणाम् । विनयादिगुणरक्तानां सा मुनीनां महात्मनाम् ॥ १९६ ॥
यत्तापयति कर्माणि तत्तपः परिकीर्त्तितम् । यद्बाह्यमनशनादि प्रायश्चित्तादि चांतरम् ॥ १९७ ॥
अनशनमौनोदर्यं वृत्तेः संक्षेपणं तथा । रसत्यागस्तनुक्लेशो लीनतेति बहिस्तपः ॥ १९८ ॥
प्रायश्चित्तं वैयावृत्तं स्वाध्यायो विनयोऽपि च । व्युत्[4]सर्गोऽथ शुभध्यानं षोढेत्याभ्यंतरं तपः ॥ १९९ ॥
रत्नत्रयधरेष्वेका भक्तिस्तत्कार्यकर्म च । शुभैकचिंता संसारजुगुप्सा भावना भवेत् ॥ २०० ॥

---

१ धर्महितकृद्भोजनार्थिना ।   २ शमः शान्तिः संवेगो मोक्षाभिलाषः निर्वेद· ससारान्निवर्तनेच्छा अनुकम्पा करुणा आस्तिक्यमास्तातल्लक्षणं । ३ सिद्धिप्रासादैकसोपान । ४ व्युत्सर्गः तपोभेदः ।

उष्णर्त्तावुष्णकिरणकिरणैरतिदारुणैः । संतापं चानुभवति स्तंबेरम[1] इवाधिकम् ॥ ५०२ ॥
तदेवं सर्वकालेषु वनवासी निराश्रयः । पृथक्जन इवैकाकी वत्सो मे दुःखभाजनम् ॥ ५०३ ॥
तत्तद्दुःखाकुलं वत्सं पश्यंत्यग्रे दृशोरिव । वदंती नित्यमप्येवं हा त्वामपि दुनोम्यहम् ॥ ५०४ ॥
इति दुःखाकुलां देवीं मरुदेवीमुदंजलिः । वाचाऽवोचन्नवसुधासध्रीच्या[2] वसुधाधवः ॥ ५०५ ॥
स्थैर्याद्रेर्वज्रसारस्य महासत्वशिरोमणेः । तातस्य जननी भूत्वा किमेवं देवि ताम्यसि ॥ ५०६ ॥
तातस्तरीतुं सहसा संसाराम्भोधिमुद्यतः । कंठबद्धशिलाप्रायान् स्थाने तत्त्याज नः प्रभुः ॥ ५०७ ॥
वने विहरतो भर्तुः प्रभावाच्छ्वापदा अपि । नोपद्रवं कर्त्तुमलं पाषाणघटिता इव ॥ ५०८ ॥
क्षुत्पिपासातपप्राया दुःसहा ये परीषहाः । सहायाः खलु तातस्य ते कर्मद्विषिसूदने ॥ ५०९ ॥
न चेत्प्रत्येषि मद्वाचा प्रत्येष्यसि तथापि हि । तातस्य न चिराज्जातकेवलोत्सववार्त्तया ॥ ५१० ॥
अत्रांतरे महीभर्तुर्ज्ञापितौ वेत्रपाणिना । नाम्ना यमकशमकौ पुरुषावभ्युपेयतुः ॥ ५११ ॥
प्रणम्य यमकस्तत्र भरतेशं व्यजिज्ञपत् । दिष्ट्याऽद्य वर्धसे देवानया कल्याणवार्त्तया ॥ ५१२ ॥
पुरे पुरिमतालाख्ये कानने शकटानने । युगादिनाथपादानामुदपद्यत केवलम् ॥ ५१३ ॥
प्रणम्य शमकोऽप्युच्चैः स्वरमेवं व्यजिज्ञपत् । इदानीमायुधागारे चक्ररत्नमजायत ॥ ५१४ ॥
उत्पन्नकेवलस्तात इतश्चक्रमितोऽभवत् । आदौ करोमि कस्यार्चामिति दध्यौ क्षणं नृपः ॥ ५१५ ॥
क्व विश्वाभयदस्तातः क्व चक्रं प्राणिघातकम् । विमृश्येति स्वामिपूजाहेतोः स्वानादिदेश सः ॥ ५१६ ॥

---

१ स्तम्बेरमो हस्ती । २ नवसुधातुल्यया ।

चतुर्धा तदयं धर्मो निःसीमफलसाधनम् । साधनीयः सावधानैर्भवभ्रमणभीरुभिः ॥ २०१ ॥
धनोऽप्यूचे मया स्वामिन् धर्मोऽयं शुश्रुवे चिरात् । एतावंति दिनान्येष वंचितोऽस्मि स्वकर्मभिः ॥२०२॥
वंदित्वा गुरुपादाब्जद्वंद्वं शेषमुनीनपि । धन्यंमन्यो* निजावासं सार्थवाहस्ततो ययौ ॥ २०३ ॥
परमानंदनिर्मग्नो धर्मदेशनया तया । धनस्तां क्षपयामास क्षणदां[1] क्षणमात्रवत् ॥ २०४ ॥
सुप्तोत्थितस्य तस्याथ प्रातर्मंगलपाठकः । पपाठ शंखगंभीरमधुरध्वनिबंधुरः ॥ २०५ ॥
घनांधकारमलिना पद्मिनीलक्ष्मितस्करी । व्यवसायहरा नॄणां ययौ प्रावृडिव क्षपा ॥ २०६ ॥
तेजोऽभिमुखचंद्रांशुर्व्यवसायसुहृन्नृणाम् । शरत्काल इव प्रातःकालोऽयं जृंभतेऽधुना ॥ २०७ ॥
सरसामापगानां च प्रापुरापः प्रसन्नताम् । शरदा तत्वबोधेन मनांसीव मनीषिणाम् ॥ २०८ ॥
सूर्यांशुभिः शुष्कपंकाः पंथानः सुगमा भृशम् । आसन् ग्रंथा इवाचार्योपदेशाच्छिन्नसंशयाः ॥ २०९ ॥
कूलिन्यः कूलयोर्मध्ये वहंतीह शनैः शनैः । नेमिसीमंतयोरंतः[2] शकटश्रेणयो यथा ॥ २१० ॥
पक्वश्यामाकनीवारवालुंककुवलादिभिः[3] । अध्वन्यानामिहाध्वान आतिथ्यमिव कुर्वते ॥ २११ ॥
पवनांदोल्यमानेक्षुवणध्वानैरसौ शरत् । यानाभियोगसमयं शंसंतीवाभियोगिनाम्[4] ॥ २१२ ॥
पांथानां तप्यमानानां रुचिभिश्चंद्ररोचिषः । आतपत्रीभवंत्येते क्षणं शारदवारिदाः ॥ २१३ ॥
एते सार्थककुद्मंतः ककुदैर्भिदते स्थलीः । सुखयात्राकृते भंक्तुं वैषम्यमवनेरिव ॥ २१४ ॥

---

* 'धनो धन्यो' इति क्वचित्पुस्तके पाठः । १ क्षणदा रात्रिम् । २ नेमिश्चक्रधारा सीमन्तश्चक्रपद्धतिः तयोरन्तस्तयोर्मध्ये । ३ श्यामाकस्तृणधान्यविशेषः नीवारो धान्यविशेषः वालुककुवलादयोपि तृणधान्यविशेषास्तैः । ४ अभियोगिनां यात्रोन्मुखानाम् ।

तद्दुःखैर्दुःखितत्वं च तत्प्र[1]तीकारहेतुषु । यथाशक्ति प्रवृत्तिश्चेत्यनुकंपाभिधीयते ॥ ६१६ ॥ युग्मम् ॥
तत्वांतराकर्णनेऽपि या तत्वेष्वार्हतेषु तु । प्रतिपत्तिर्नि[2]राकांक्षा तदास्तिक्यमुदीरितम् ॥ ६१७ ॥
सम्यग्दर्शनमित्युक्तं प्रासावस्य क्षणादपि । मत्यज्ञानं पुराभूद्यत्तन्मतिज्ञानता व्रजेत् ॥ ६१८ ॥
जन्मिनो यच्छ्रुताज्ञानं तच्छ्रुतज्ञानतां व्रजेत् । विभंगज्ञानमवधिज्ञानभावं च गच्छति ॥ ६१९ ॥युग्मम्॥
सर्वसावद्ययोगानां त्यागश्चारित्रमिष्यते । कीर्त्तितं तदहिंसादिव्रतभेदेन पंचधा ॥ ६२० ॥
अहिंसासूनृतास्तेयब्रह्मचर्यापरिग्रहाः । पंचभिः पंचभिर्युक्ता भावनाभिर्विमुक्तये ॥ ६२१ ॥
न यत्प्रमादयोगेन जीवि[3]तव्यपरोपणम् । त्रसानां स्थावराणां च तदहिंसाव्रतं मतम् ॥ ६२२ ॥
प्रियं पथ्यं वचस्तथ्यं सूनृतव्रतमुच्यते । तत्तथ्यमपि नो तथ्यमप्रियं चाहितं च यत् ॥ ६२३ ॥
अनादानमदत्तस्याऽस्तेयव्रतमुदीरितम् । बाह्यप्राणा नृणामर्थो हरता [4]तं हृता हि ते ॥ ६२४ ॥
दिव्यौदारिककामानां कृतानुमतिकारितैः । मनोवाक्कायतस्त्यागो [5]ब्रह्माष्टादशधोदितम् ॥ ६२५ ॥
सर्वभावेषु मूर्च्छा[6]यास्त्यागः स्यादपरिग्रहः । यदसत्स्वपि जायेत मूर्च्छया चित्तविप्लवः ॥ ६२६ ॥
सर्वात्मना यतीन्द्राणामेतच्चारित्रमीरितम् । यतिधर्मानुरक्तानां देशतः स्यादगारिणाम् ॥ ६२७ ॥
सम्यक्त्वमूलानि पंचाणुव्रतानि गुणास्त्रयः । शिक्षापदानि चत्वारि व्रतानि गृहमेधि[7]नाम् ॥ ६२८ ॥
पंगुकुष्ठिकूणि[8]त्वादि दृष्ट्वा हिंसाफलं सुधीः । निरागस्त्रसजंतूनां हिंसां संकल्पतस्त्यजेत् ॥ ६२९ ॥

१ तदुपायकारणेषु । २ निष्कामा । ३ प्राणापहारण । ४ त अर्थ । ५ ब्रह्म ब्रह्मचर्य । ६ मोहस्य । ७ गृहस्थाना । ८ कूणित्व-मङ्गसङ्कोचनत्व ।

प्रत्येकाः साधारणाश्च द्विप्रकारा महीरुहः[1] । साधारणा अपि द्वेधा सूक्ष्मबादरभेदतः ॥ १६२ ॥
त्रसा द्वित्रिचतुष्पंचेंद्रियत्वेन चतुर्विधाः । तत्र पंचेंद्रिया द्वेधा संज्ञिनोऽसंज्ञिनोऽपि च ॥ १६३ ॥
शिक्षोपदेशालापान् ये जानते ते तु संज्ञिनः । संप्रवृत्त[2]मनःप्राणास्तेभ्योऽन्ये स्युरसंज्ञिनः ॥ १६४ ॥
स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रमितींद्रियम् । तस्य स्पर्शो रसो गंधो रूपं शब्दश्च गोचरः ॥ १६५ ॥
द्वींद्रियाः कृमयः शंखा गंडूपदजलौकसः । कपर्दिकाः शुक्तयश्च विविधाकृतयो मताः ॥ १६६ ॥
यूका मत्कुणमत्कोटलिक्ष्याद्यास्त्रींद्रिया मताः । पतंगमक्षिकाभृंगदंशाद्याश्चतुरिंद्रियाः ॥ १६७ ॥
तिर्यग्योनिभवाः शेषा जलस्थलखचारिणः । नारका मानवा देवाः सर्वे पंचेंद्रिया मताः ॥ १६८ ॥
तत्पर्यायक्षयाद्दुःखोत्पादात्संक्लेशतस्त्रिधा । वधस्य वर्जनं तेष्वभयदानं तदुच्यते ॥ १६९ ॥
ददात्यभयदानं यो दत्तेऽर्थान् सोऽखिलानपि । जीविते सति जायेत तत्पुमर्थ[3]चतुष्टयी ॥ १७० ॥
जीवितादपरं प्रेयो जंतोर्जायेत जातुचित् । न राज्यं न च साम्राज्यं दैवराज्यं[4] न चोच्चकैः ॥ १७१ ॥
इतोऽशुचिस्थस्य कृमेरितः स्वर्गसदो हरेः । प्राणापहारप्रभवं द्वयोरपि समं भयम् ॥ १७२ ॥
समग्रजगदिष्टायाभयदानाय सर्वथा । सर्वदाप्यप्रमत्तः सन् प्रवर्त्तेत ततः सुधीः ॥ १७३ ॥
भवेदभयदानेन जनो जन्मांतरेषु हि । कांतो दीर्घायुरारोग्यरूपलावण्यशक्तिमान् ॥ १७४ ॥
धर्मोपग्रहदानं तु जायते तत्र पंचधा । दायकग्राहकादेयकालभावविशुद्धितः ॥ १७५ ॥

---

१ महीरुहो वनस्पतिकायाः । २ सप्रवृत्तौ मनःप्राणौ येषा ते केवलमनःप्राणप्रवृत्तिवन्त इत्यर्थः । ३ पुमर्थचतुष्टयी पुमर्था धर्मार्थकाममोक्षास्तेषा चतुष्टयी । ४ दैवराज्यमिन्द्रत्वम् ।

## चतुर्थः सर्गः ।

इतश्च भरतश्चक्री विनीतामध्यवर्त्मना । प्रययावायुधागारं चक्रस्योत्कोऽतिथेरिव ॥ १ ॥
तदालोकनमात्रेऽपि प्रणनाम महीपतिः । मन्यंते क्षत्रिया ह्यस्त्रं प्रत्यक्षमधिदैवतम् ॥ २ ॥
रोमहस्तकमादाय भरतस्तदमार्जयत् । भक्तानां प्रक्रिया ह्येषा न रजो तादृशे रजः ॥ ३ ॥
स्नपयामास तत्तोयैः पावनैरवनीपतिः । उदयंतमिव प्राच्यसरित्पतिरहर्पतिम् ॥ ४ ॥
स्थासकान् स्थापयामास तत्र पूज्यत्वशंसिनः । पृष्ठे धुर्यगजस्येव राजा गोशीर्षचंदनैः ॥ ५ ॥
पुष्पैर्गंधैश्चूर्णवासैर्वासोभिर्भूषणैरपि । नृपस्तत्पूजयामास साक्षादिव जयश्रियम् ॥ ६ ॥
तस्याग्रे तंडुलै रौप्यैरालिखत् सोष्टमंगलीम् । पृथक् पृथग्मंगलाग्रेवेष्टचदष्टककुप्श्रियम् ॥ ७ ॥
पंचवर्णैश्च कुसुमैरुपहारं तदग्रतः । विचित्रवर्णामवनीं कुर्वाणमकरोन्नृपः ॥ ८ ॥
दिव्यचंदनकर्पूरप्रायं धूपमथोत्तमम् । नृपः प्रयत्नाच्चक्राग्रे द्विपद्यश इवादहत् ॥ ९ ॥
त्रिश्च प्रदक्षिणीचक्रे चक्रं चक्रधरस्ततः । पदान्यपागात्ससाष्टान्यवग्रहाङ्कुरोरिव ॥ १० ॥
वामजानुं समाकुंच्य दक्षिणं न्यस्य च क्षितौ । राजा चक्रं नमश्चक्रे तमिव प्रणयी जनः ॥ ११ ॥
तत्रैव च कृतावासश्चक्रस्याष्टाह्निकोत्सवम् । चकार साकार इव प्रमोदो मेदिनीपतिः ॥ १२ ॥

---

१ उत्क उत्कण्ठितः । २ रोमहस्तक मार्जनसाधनविशेष । ३ प्रक्रिया प्रक्रमः रीतिर्वा । ४ पूर्वसमुद्र । ५ स्थासकान् तिलकान् । ६ त राजान ।

तत्र दायकशुद्धं तन्न्याय्यार्थो[1] ज्ञानवान् सुधीः। निराशंसो[2]ऽननुतापी[3] दायकः प्रददाति यत् ॥ १७६ ॥
इदं चित्तमिदं वित्तमिदं पात्रं निरंतरम्। संजातं यस्य मे सोऽहं कृतार्थोऽस्मीति दायकः ॥ १७७ ॥
सावद्ययोगविरतो गौरव[4]त्रयवर्जितः। त्रिगुप्तः[5] पंचसमितो[6] रागद्वेषविनाकृतः ॥ १७८ ॥
निर्ममो नगरवसत्यंगोपकरणादिषु। ततोऽष्टादशशीलांगसहस्रधरणोद्धुरः ॥ १७९ ॥
रत्नत्रयधरो धीरः समकांचनलोष्टुकः। शुक्लध्यानद्वयस्थास्नुर्जितादृशः कुर्द्दिशंबलः ॥ १८० ॥
निरंतरं यथाशक्ति नानाविधतपः परः। संयमं सप्तदशधा धारयन्नविखंडितम् ॥ १८१ ॥
अष्टादशप्रकारं च ब्रह्मचर्यं समाचरन्। यत्रेदृक् ग्राहको दानं तत्स्याद् ग्राहकशुद्धिमत् ॥ १८२ ॥
देयं शुद्धं द्विचत्वारिंशद्दोषरहितं भवेत्। पानाशनखाद्यस्वाद्यवस्त्रसंस्तारकादिकम् ॥ १८३ ॥
कालं शुद्धं तु यत्किंचित्काले पात्राय दीयते। भावशुद्धं त्वनाशंसं श्रद्धया यत्प्रदीयते ॥ १८४ ॥
न देहेन विना धर्मो न देहोऽन्नादिकं विना। धर्मोपग्रहदानं तद्विदधीत निरंतरम् ॥ १८५ ॥
पात्रेभ्योऽशनपानादि धर्मोपग्रहदानतः। करोति तीर्थाव्युच्छित्तिं प्राप्नोति च परं पदम् ॥ १८६ ॥
शीलं सावद्ययोगानां प्रत्याख्यानं निगद्यते। द्विधा तद्देशविरतिसर्वविरतिभेदतः ॥ १८७ ॥

---

१ न्याय्यार्थो नीतिसंपादितार्थः। २ निराशंसोऽप्रत्याशः। ३ अननुतापी अपश्चात्तापकारकः। ४ रसगौरवं ऋद्धिगौरव सातागौरव इति गौरवत्रय। ५ मनोगुप्तिः वचोगुप्तिः कायगुप्तिः इति त्रिगुप्तः। ६ ईर्यासमितिः भाषासमितिः एषणासमितिः आदाननिक्षेपणसमितिः परिष्ठापनिकासमितिः इति पञ्चसमितयो जैनसिद्धान्ते प्रसिद्धाः। ७ जितेन्द्रियः। ८ उदरमात्रपाथेयः। ९ तीर्थस्य अव्युच्छित्तिं अविच्छेदं।

सर्वदाधिष्ठितं यक्षसहस्रेणाष्टकर्णिकम् । योजनानि द्वादशांधकारन्यक्कारकारणम् ॥ ३०६ ॥
अधिकरणीसंस्थानं सूर्यचन्द्रानलप्रभम् । नृपतिः काकिणीरत्नं चतुरंगुलमाददे ॥ ३०७ ॥
त्रिभिर्विशेषकम् ॥

गोमूत्रिकाक्रमात्तेन स गुहापार्श्वयोर्द्वयोः । योजनांते योजनांते मंडलान्यालिखन् ययौ ॥ ३०८ ॥
धनुःपंचाशतायामान्येकैकमेकयोजनम् । उद्योतकारीण्येकोनपंचाशत्तानि जज्ञिरे ॥ ३०९ ॥
तावत्स्थायीनि तान्यासन् गुहा चोद्घाटितानना । यावज्जीवति कल्याणी चक्रवर्ती महीतले ॥ ३१० ॥
मण्डलानां प्रकाशेन तेनाप्रस्खलिता चमूः । संचचार सुखं चक्ररत्नानुगनृपानुगा ॥ ३११ ॥
सा गुहा संचरंतीभिश्चमूभिश्चक्रवर्त्तिनः । असुरादिबलै रत्नप्रभामध्यमिवाबभौ ॥ ३१२ ॥
अंतः संचरता तेन चमूचक्रेण सा गुहा । आसीदुद्दामनिर्घोषा मंथानेनेव मंथिनी ॥ ३१३ ॥
रथैः सीमंतितैः सद्योऽश्वखुरैः क्षुण्णकर्करः । जज्ञे पुरीपथ इव स खिलोपि गुहापथः ॥ ३१४ ॥
अंतःस्थितेन सा तेन सेनालोकेन कंदरा । तिरश्चीनत्वगापन्ना लोकनालिरिवाबभौ ॥ ३१५ ॥
मध्यभागे तमिस्रायाः संव्यानेरशने इव । नृपः प्रापदथोन्मग्नानिमग्ने नाम निम्नगे ॥ ३१६ ॥
याम्योदग्भरतक्षेत्रार्द्धाभ्यामागच्छतां नृणाम् । आज्ञालेखे इव कृते ते नदीभ्यां तोऽद्रिणा ॥ ३१७ ॥
तुंबीफलमिवैकस्यामुन्मज्जति शिलापि हि । शिलेव तुंबीफलमप्यन्यस्यां तु निमज्जति ॥ ३१८ ॥
तमिस्रायाः पूर्वभित्तेर्निर्गते ते तु गच्छतः । भित्तेः प्रतीच्या मध्येन सिंधौ संगममापुतः ॥ ३१९ ॥

१ मन्थनदण्डेन । २ मन्थिनी कुम्भी । ३ सीमन्तयुक्तः कृतः । ४ सञ्चाररहितोपि । ५ अधोवस्त्रमेखले । ६ नद्यौ । ७ नदीमिषेण ।

गर्जंतः प्लावयंतः क्ष्मां पुरा ददृशिरे हि ये । नेशुर्मार्गवहास्तत्र प्रावृषेण्या घना इव ॥ २१५ ॥
वल्लीभिः फलनम्राभिः स्वच्छैस्तोयैः पदे पदे । पंथानोऽयत्नपाथेयाः पांथानामिह जज्ञिरे ॥ २१६ ॥
राजहंसा इवोत्साहबहलीकृतचेतसः । गंतुं देशांतराण्यत्र त्वरंते व्यवसायिनः ॥ २१७ ॥
तच्छ्रुत्वा सार्थवाहोऽपि प्रयाणसमयेऽमुना । विज्ञप्त इति विज्ञाय यात्राभेरीमवादयत् ॥ २१८ ॥
सार्थोपि रोदसी कुक्षिंभरेर्भेरीरवात्ततः । चचाल गोवृंदमिव गोपगोश्रृंगनादतः ॥ २१९ ॥
भव्याब्जबोधप्रवणैः साधुभिः परिवारितः । मरीचिभिः सूर इव सूरिरप्यचलत्ततः ॥ २२० ॥
अग्रतः पार्श्वतः पश्चादारक्षपुरुषैः स्वयम् । रक्षामासूत्र्य सार्थस्य प्रतस्थे सार्थपो धनः ॥ २२१ ॥
महाटवीं समुत्तीर्णे सार्थे सार्थपतिं ततः । अनुज्ञाप्याचार्यवर्या विहर्त्तुं ययुरन्यतः ॥ २२२ ॥
ततश्च सार्थवाहोऽपि निष्प्रत्यूहं वहन्पथि । पाथोधिमिव नद्योघो वसंतपुरमासदत् ॥ २२३ ॥
विक्रीणीते स्म भांडानि प्रतिभांडानि चाददे । कालेन कियताप्येष धीमंतो ह्याशुकारिणः ॥ २२४ ॥
परितो भरितस्तस्माद्वारिधेरिव वारिदः । क्षितिप्रतिष्ठं नगरं पुनरप्याययौ धनः ॥ २२५ ॥
कालेन तत्र पूर्णायुः कालधर्ममुपागतः । आस्थितैकांतसुखमेषूत्तरेषु कुरुष्वसौ ॥ २२६ ॥
सीतानद्युत्तरतटे जंबूवृक्षस्य पूर्वतः । उत्पेदे युग्मधर्मेण मुनिदानप्रभावतः ॥ २२७ ॥ युग्मं ।
तत्राष्टमस्य पर्यंते मर्त्या भोज्याभिलाषिणः । षट्पंचाशद्धतद्वयसंख्यपृष्टकरंडकाः ॥ २२८ ॥

---

१ मार्गवहा मार्गप्रवाहाः । २ व्यापारिण. । ३ आरक्षपुरुषैः रक्षकनरैः । ४ निर्विघ्न । ५ आस्थितैकान्तसुखमारेषु । ६ पट्पञ्चाशदधिकशतद्वयसङ्ख्याः पृष्टकरण्डकाः पृष्टस्थितसूक्ष्मगात्रावयवा येषा ते ।

उदग्दक्षिणयोः श्रेण्योर्भूमिग्रामपुराधिपाः । विचित्ररत्नाभरणा रत्नाकरसुता इव ॥ ४९८ ॥
अस्खलद्गतयो व्योम्नि सौपर्णेया इवाचलन् । समं नमिविनमिभ्यां तन्मूर्त्तय इवापराः ॥ ४९९ ॥ युग्मं ।
एयुर्विचित्रमाणिक्यप्रभोद्भासितदिग्मुखैः । विमानैः केप्यसंलक्ष्यभेदा वैमानिकामरैः ॥ ५०० ॥
गर्जद्भिः शीकरासारवर्षिभिर्गंधसिंधुरैः । पुष्करावर्त्तकांभोदसोदरैरपरेऽचलन् ॥ ५०१ ॥
आश्लिष्टैरिंदुमार्त्तंडप्रभृतिज्योतिषामिव । सुवर्णरत्नरचितैः स्यंदनैः केचिदापतन् ॥ ५०२ ॥
गगने वल्गु वल्गद्भिर्वेगातिशयशालिभिः । केपि प्रतस्थिरे वायुकुमारैरिव वाजिभिः ॥ ५०३ ॥
विहस्तहस्ताः शस्त्रौघैर्वज्रसन्नाहधारिणः । प्लवमानाः प्लवगवत्केचिदेयुः पदातयः ॥ ५०४ ॥
तावथोत्तीर्य वैताढ्याद्विद्याधरबलावृतौ । युयुत्समानौ संनद्धौ भरतेश्वरमीयतुः ॥ ५०५ ॥
कुर्वन् मणिविमानैर्द्यां बहुसूर्यमयीमिव । प्रज्वलद्भिः प्रहरणैस्तभिन्मालामयीमिव ॥ ५०६ ॥
उद्दामदुंदुभिध्वानैर्मेघघोषमयीमिव । विद्याधरनलं व्योमन्यपश्यद्भरतस्ततः ॥ ५०७ ॥ युग्मं ॥
दंडार्थिन् दंडमस्मत्तस्त्वं गृह्णासीति भाषिणौ । आहवायाह्वयेतां तौ विद्योद्धसौ महीपतिम् ॥ ५०८ ॥
अथ ताभ्यां ससैन्याभ्यां प्रत्येकं युगपच्च सः । युयुधे विविधैर्युद्धैर्युद्धार्ज्या यजायश्रियः ॥ ५०९ ॥
युधा द्वादशवार्षिक्या विद्याधरपती जितौ । प्रांजली प्रणिपत्यैवं भरताधीशमूचतुः ॥ ५१० ॥
रवेरुपरि किं तेजो वायोरुपरि को जवी । मोक्षस्योपरि किं सौख्यं कश्च शूरस्तवोपरि ॥ ५११ ॥
ऋषभो भगवान् साक्षादद्य दृष्टस्त्वमार्षभे । अज्ञानाद्बोधितोऽस्माभिः कुलस्वामिन् सहस्व नः ॥५१२॥

१ व्याकुलहस्ताः । २ युद्ध कर्त्तुमिच्छन्तौ । ३ विद्यामत्तौ । ४ युद्धेन अर्ज्या. सपादनीया. । ५ वेगवान् ।

तत्किं ते भ्रातरि गुरावारंभोयं भयंकरः । त्वत्तः संभाव्यते नैष पंचत्वममृतादिव ॥ ४८१ ॥
इयत्यपि गते कार्यं न विनष्टं मनागपि । तद्रणारंभसंरंभं खलमैत्रीमिव त्यज ॥ ४८२ ॥
संपरायैरयाद्वीरान्निवारय नरेश्वर । निजाज्ञया प्रसरतो मंत्रेणेव महोरगान् ॥ ४८३ ॥
भरते भ्रातरि गुरौ गत्वा भव वशंवदः । एवं च श्लाघ्यतेऽत्यंतशक्तो विनयभागिति ॥ ४८४ ॥
तदिदं भरतक्षेत्रं षट्खंडं भरतार्जितम् । भुंक्ष्व स्वोपार्जितमिव युवयोर्हि किमंतरम् ॥ ४८५ ॥
इत्युदित्वा विरतेषु तेषु दृष्ट्वा घनेष्विव । एवं बाहुबलिः स्माह स्मित्वा गंभीरया गिरा ॥ ४८६ ॥
आवयोर्विग्रहे हेतुमज्ञात्वा परमार्थतः । निजस्वच्छतया यूयमेवं वदथ हे सुराः ॥ ४८७ ॥
तातभक्ताः सदा यूयमावां तातस्य चात्मजौ । इति संबंधतोऽप्युक्तं युक्तं युष्माभिरीदृशम् ॥ ४८८ ॥
पुरा हि दीक्षासमये तातोऽर्थिभ्यो हिरण्यवत् । विभज्य देशानस्मभ्यमदत्त भरताय च ॥ ४८९ ॥
वयं सर्वेपि तिष्ठामः संतुष्टाः स्वस्वनीवृता । धनमात्रकृते हंत परद्रोहं करोति कः ॥ ४९० ॥
असंतुष्टस्तु भरतो जग्रसे भरतोदधौ । मत्स्यानिव महामत्स्या राज्यान्यखिलभूभुजाम् ॥ ४९१ ॥
राज्यैस्तैरप्यसंतुष्ट आद्यून इव भोजनैः । आचिच्छेद स राज्यानि स्वेषामवरजन्मनाम् ॥ ४९२ ॥
पितृदत्तानि राज्यानि भ्रातॄणामाच्छिनत्ति नः । गुरुत्वमात्मनस्तेन स्वयमेव निवारितम् ॥ ४९३ ॥
वयोमात्रेण न गुरुर्गुरुर्गुरुवदाचरन् । गुरुत्वं दर्शितं तेन भ्रातॄनिर्वासनादिदम् ॥ ४९४ ॥

---

१ पञ्चत्व मरण । २ युद्धवेगात् । ३ निजहृदयनैर्मल्येन । ४ स्वस्वदेशेन । ५ भरतक्षेत्रसमुद्रे । ६ आद्यूनः उदरपूरकः । ७ अवरजन्मना लघुभ्रातृणा । ८ बन्धुबहिष्करणात् ।

कलानिधिरिवाशेषकलापूर्णः शनैः शनैः । स बभूव महाभागो जनानां नयनोत्सवः ॥ २४३ ॥
स कन्यां विनयवतीं मूर्त्तां तु विनयश्रियम् । *समये समयज्ञाभ्यां पितृभ्यां परिणायितः ॥ २४४ ॥
निशातमस्त्रं[1] कामस्य कामिनीजनकार्मणम् । रतिलीलावनं सोऽथ यौवनं प्रत्यपद्यत ॥ २४५ ॥
क्रमौ[2] समतलौ तस्य क्रमात्कूर्मवदुन्नतौ । सिंहमध्याधरीकारधुरीणं[3] मध्यमप्यभूत् ॥ २४६ ॥
उरस्थलं चाकलयत् स्वर्णशैलशिलातुलाम् । उभ्भुरौ दधतुः स्कंधौ ककुद्मत्ककुदश्रियम्[4] ॥ २४७ ॥
भुजौ भुजंगमाधीशभोगशोभां च बिभ्रतुः । अर्द्धाभ्युदितराकेंदुलीलामलिकमाददे[5] ॥ २४८ ॥
रदैर्नखैर्मणिनिभैर्वपुषा कनकत्विषा । सकलां कलयामास मेरुलक्ष्मीं स्थिराकृतिः ॥ २४९ ॥
अपरेद्युः शतबलो विद्याधरपतिः सुधीः । महासत्वस्तत्वविज्ञश्चिंतयामासिवानिदम् ॥ २५० ॥
विधाय सहजाशौचमुपस्कारैर्नवं[6] नवम् । गोपनीयमिदं हंत कियत्कालं कलेवरम् ॥ २५१ ॥
सत्कृतोऽनेकशोप्येष सत्क्रियेत यदापि न । तदापि विक्रियां याति कायः खलु खलोपमः ॥ २५२ ॥
अहो बहिर्निष्पतितैर्विष्ठामूत्रकफादिभिः । दूणीयंते प्राणिनोऽमी कायस्यांतःस्थितैर्न किं ॥ २५३ ॥
रोगाः समुद्भवंत्यस्मिन्नत्यंतातंकदायिनः । दंदशूका[8] इव क्रूरा जरद्विटपकोटरे ॥ २५४ ॥
निसर्गाद्गत्वरश्चायं कायोब्द इव शारदः । दृष्टनष्टा च तत्रेयं यौवनश्रीस्तडिन्निभा ॥ २५५ ॥

---

* "समये समयाभिज्ञपित्रादेशादुपायत" इति क्वचित्पुस्तके पाठः । १ निशात तीक्ष्ण । २ क्रमौ चरणौ । ३ सिंहोदरस्य अधरीकारे तिरस्कारे धुरीणमग्रेसरं । ४ ककुद्मतो वृषस्य ककुदश्रिय पृष्ठाङ्गशोभा । ५ अर्द्धाभ्युदितराकेन्दुलीलां अर्द्धोदितपूर्णिमेन्दुलीला । ६ अलिकं ललाटं । ७ उपस्कारैः सस्कारैः । ८ दंदशूकाः सर्पाः ।

युद्धान्निषेधतैतस्माद्धयस्य हितकांक्षिणः । अयुध्यमानेनानेनाप्यहं युध्ये न जातुचित् ॥ ५०९ ॥
ऊर्जितं तद्वचस्तस्य पर्जन्यस्येव[1] गर्जितम् । आकर्ण्य विस्मयोत्कर्णास्ते भूयोप्येवमभ्यधुः ॥ ५१० ॥
इतो जल्पन् युद्धहेतुं चक्री चक्राप्रवेशनम् । न शक्योऽनुत्तरीकर्त्तुं निरोद्धुं गुरुणापि हि ॥ ५११ ॥
युद्ध्यमानेन युद्ध्येहमिति जल्पन् भवानपि । युद्धान्निरोद्धुं नियतं शक्रेणापि न शक्यते ॥ ५१२ ॥
द्वयोरप्यृषभस्वामिदृढसंसर्गशालिनोः । द्वयोरपि महाबुद्ध्योर्द्वयोरपि विवेकिनोः ॥ ५१३ ॥
द्वयोरपि जगत्त्रात्रोर्द्वयोरपि दयावतोः । भाग्यक्षयेण जगतां युद्धोत्पात उपस्थितः ॥ ५१४ ॥ युग्मम् ।
तथापि प्रार्थ्यसे वीर प्रार्थनाकल्पपादप । उत्तमेनैव युद्धेन युध्येथा माधमेन तु ॥ ५१५ ॥
अधमेन हि युद्धेन युवयोरुग्रतेजसोः । भूयिष्ठलोकप्रलयादकाले प्रलयो भवेत् ॥ ५१६ ॥
दृष्टियुद्धादिभिर्युद्धैर्योद्धव्यं साधु तेषु हि । आत्मनो मानसिद्धिः स्याल्लोकानां प्रलयो न च ॥ ५१७ ॥
आमेति तस्मिन् वदति नातिदूरे दिवौकसः । तस्थुर्द्रष्टुं तयोर्युद्धं नगर्यां नागरा इव ॥ ५१८ ॥
अथाज्ञया बाहुबलेः प्रतीहारो गजस्थितः । गर्जन् गज इवोर्जस्वी जगादेति स्वसैनिकान् ॥ ५१९ ॥
भोभो समस्तराजन्याश्चिरं चिंतयतां हि वः । उपस्थितं स्वामिकार्यमभीष्टं पुत्रलाभवत् ॥ ५२० ॥
परं वः स्वल्पपुण्यत्वाद्देवैर्देवोयमर्थितः । भरतेन सह द्वंद्वयुद्धहेतोर्महाभुजः ॥ ५२१ ॥
स्वतोपि द्वंद्वयुद्धेच्छुः किं पुनःप्रार्थितः सुरैः । स्वामी स्वाराजतुल्यौजाः[2] समराद्वो[3] निषेधति ॥ ५२२ ॥
हस्तिमल्ल[4] इवैकांगमल्लो युष्मान्निरेष तत् । युद्ध्यमानः प्रेक्षणीयस्तटस्थैरमरैरिव ॥ ५२३ ॥

---

१ मेघस्य । २ इन्द्रतुल्यपराक्रम । ३ समरात् युद्धात् । ४ हस्तिमल्ल हस्तिश्रेष्ठः ।

आयुः पताकाचपलं तरंगचपलाः श्रियः । भोगिभोगनिभा भोगाः संगमाः स्वप्नसंनिभाः ॥ २५६ ॥
कामक्रोधादिभिस्तापैस्ताप्यमानो दिवानिशम् । आत्मा शरीरांतःस्थोऽसौ पच्यते पुटपाकवत् ॥ २५७ ॥
विषयेष्वतिदुःखेषु सुखमानी मनागपि । नाहो विरज्यते जनोऽशुचिकीट इवाशुचौ ॥ २५८ ॥
दुरंतविषयास्वादपराधीनमना जनः । अंधोऽंधुमिव पादाग्रस्थितं मृत्युं न पश्यति ॥ २५९ ॥
आपातमात्रमधुरैर्विषयैर्विषसंनिभैः । आत्मा मूर्छित एवास्ते स्वहिताय न चेतति ॥ २६० ॥
तुल्ये चतुर्णां पौमर्थ्ये पापयोरर्थकामयोः । आत्मा प्रवर्त्तते हंत न पुनर्धर्ममोक्षयोः ॥ २६१ ॥
अस्मिन्नपारसंसारपारावारे शरीरिणाम् । महारत्नमिवानर्घं मानुष्यमिह दुर्लभम् ॥ २६२ ॥
मानुष्यकेऽपि संप्राप्ते प्राप्यंते पुण्ययोगतः । देवता भगवानर्हन् गुरवश्च सुसाधवः ॥ २६३ ॥
मानुष्यकस्य यद्यस्य वयं नाददाहे फलम् । मुषिताः स्मस्तदधुना चौरैर्वसति पत्तने ॥ २६४ ॥
तदद्य कवचहरे कुमारेऽस्मिन् महाबले । राज्यभारं समारोप्य कुर्महे स्वसमीहितम् ॥ २६५ ॥
विमृश्यैवं शतबलः समाहूय महाबलम् । विनीतं बोधयामास राज्यग्रहणहेतवे ॥ २६६ ॥
स राज्यभारमुद्वोढुं मेने पितृनिदेशतः । भवंति हि महात्मानो गुर्वाज्ञाभंगभीरवः ॥ २६७ ॥
ततः शतबलः सिंहासनेऽध्यास्य महाबलम् । अभिषिच्य स्वहस्तेन चक्रे तिलकमंगलम् ॥ २६८ ॥
स रराज नवो राजा कुंदसोदरकांतिना । चांदनेन तिलकेनोदयाचल इवेंदुना ॥ २६९ ॥

---

१ भोगिभोगनिभाः सर्पफणातुल्याः । २ पुटपाकः पुटपात्रेण औषधपाकस्तद्वत् । ३ अन्धु कूपम् । ४ पुरुषार्थत्वे । ५ वसति सति ।
६ कुन्दं माध्यकुसुमं तद्वत्कान्तिना ।

चक्रं चक्रभृतः पाणिं पुनरप्यापपात तत् । वासयष्टिं खग इव तुरंग इव मंदुराम्[१] ॥ ७२४ ॥
विषं विषधरस्येवामोघं मारणकर्मणि । इदमेवास्त्रसर्वस्वमस्य नान्यदतः परम् ॥ ७२५ ॥
मयि दंष्ट्रायुधे चक्रमोक्षादन्यायकारिणम् । तदेनमेष मृद्नामि सचक्रमपि मुष्टिना ॥ ७२६ ॥ युग्मम् ।
अमर्षाच्चिंतयित्वैवं सुनंदानंदनो दृढाम् । मुष्टिमुद्यम्य यमवद्भीषणः समधावत ॥ ७२७ ॥
करीवोन्मुद्गरकरः कृतमुष्टिकरो द्रुतम् । जगाम भरताधीशांतिकं[२] तक्षशिलापतिः ॥ ७२८ ॥
मर्यादोर्व्यामिवोदन्वां[३]स्तत्र तस्थौ रयादपि । एवं च स महासत्त्वश्चिंतयामास चेतसि ॥ ७२९ ॥
अहो राज्यस्य लुब्धेन लुब्धकादपि[४] पापिना । अमुनेव समारब्धो धिग्धिग् भ्रातृवधो मया ॥ ७३० ॥
यदादावपि हन्यंते भ्रातृभ्रातृव्यकादयः[५] । शाकिनीमंत्रवत्तस्य राज्यस्यार्थे यतेत कः ॥ ७३१ ॥
राज्यश्रिया प्राप्तयापि यथेच्छं भुक्तयापि च । सुरयेव सुरापस्य[६] पुंसस्तृप्तिर्न जायते ॥ ७३२ ॥
भवेदाराध्यमानापि प्राप्य स्तोकमपि छलम् ॥ राज्यलक्ष्मीः क्षणात् क्षुद्रदेवतेव पराङ्मुखी ॥ ७३३ ॥
राज्यलक्ष्मीरमावास्यारात्रिवद्भूरितामसा । तज्ञांचकार तृणवत्तातोऽप्येनां कुतोऽन्यथा ॥ ७३४ ॥
तस्य तातस्य पुत्रेण सताप्येषा मया चिरात् । दुर्वृत्तत्वेन विज्ञातां ज्ञास्यत्यन्यः कथं ह्यमुम् ॥ ७३५ ॥
सर्वथा त्यजनीयेयमिति निश्चित्य चेतसि । महामना बाहुबलिरित्यूचे चक्रवर्तिनम् ॥ ७३६ ॥
तितिक्षस्व क्षमानाथ राज्यमात्रकृतेपि यत् । विषण्णिव मया भ्रातरेवं त्वमसि खेदितः ॥ ७३७ ॥

१ मन्दुरा अश्वशाला । २ भरतसमीप । ३ उदन्वान् समुद्रः । ४ लुब्धकात् व्याधात् । ५ भ्रातृव्यको भ्रातुष्पुत्र । ६ सुरापस्य मदिरापानकारकस्य ।

पैतृकेणातपत्रेण हंसपत्रामलेन सः । शुशुभे शारदभ्रेण गिरिराज इवोच्चकैः ॥ २७० ॥
विरेजे प्रेंखता चारुचामरद्वितयेन सः । बलाकायुगलेनेव विमलेन बलाहकः ॥ २७१ ॥
तस्याभिषेके गंभीरतरोमंगल्यदुंदुभिः । दध्वान ध्वनयन्नाशाश्चंद्रोदय इवोदधेः ॥ २७२ ॥
समंतान्मंत्रिसामंतैः समेत्य सममन्यत । द्वैतीयीकः शतबल इव रूपांतरेण सः ॥ २७३ ॥
पुत्रं राज्ये निवेश्यैवं स्वयं शतबलस्ततः । आददे शमसाम्राज्यमाचार्यचरणांतिके ॥ २७४ ॥
सोऽसारान् विषयान् प्रोझ्झ्य सारं रत्नत्रयं दधौ । तथाप्यखंडा तस्यासीत्सर्वत्र समचित्तता ॥ २७५ ॥
मूलादुन्मूलयामास कषायान् स जितेंद्रियः । कूलंकषापूर इव कूलस्थितमहीरुहान् ॥ २७६ ॥
आत्मारामममना वाचंयमो नियतचेष्टितः । अधिसेहे महासत्वो दुःसहान् स परीषहान् ॥ २७७ ॥
मैत्र्यादिभिर्भावनाभिः प्रवृद्धध्यानसंततिः । सोऽमंदानंदनिर्मग्नस्तस्थौ मुक्ताविवानिशम् ॥ २७८ ॥
ध्यानेन तपसा चायुर्लीलयैवातिवाह्य सः । महात्मा सादयामास सदनं त्रिदिवौकसाम् ॥ २७९ ॥
महाबलोऽपि बलिभिः खेचरैः परिवारितः । आखंडल इवाखंडशासनः प्रशशास गाम् ॥ २८० ॥
रम्यास्वारामराजीषु स रेमे रमणीवृतः । मुदितः पंकरुहिणीखंडेष्विव सितच्छदः ॥ २८१ ॥
अभूवंस्तत्पुरो नित्यं संगीतप्रतिशब्दितैः । संगीतकानुवादिन्य इव वैताढ्यकंदराः ॥ २८२ ॥
अग्रतः पार्श्वयोः पश्चान्नारीभिः परिवेष्टितः । स चकासामास रसशृंगार इव मूर्त्तिमान् ॥ २८३ ॥

---

१ प्रेङ्खता चलता । २ कूलङ्कषा नदी तस्या पूर इव । ३ आखण्डलः इन्द्रः । ४ सितच्छदः हंस. । ५ सङ्गीतकानुवादिन्यः सङ्गीतस्य अनुकरणं कुर्वन्त्यः ।

मूलोत्तरगुणपृष्टं साधुधर्ममुपादिशत् । स्वयं च तदनाचारे पृष्टोऽशक्तिं जगाद सः ॥ २६ ॥

इति बोध्यागतान् भव्यान् परिविव्रजिषून् सतः । मरिचिः प्रेषयामास समीपे स्वामिपादयोः ॥ २७ ॥

प्रतिबुध्यागतानां च तेषां दीक्षां स्वयं ददौ । निष्कारणोपकारैकबंधुः स्वाम्यृषभध्वजः ॥ २८ ॥

मरिचेः स्वामिना सार्द्धं एवं विहरतोऽन्यदा । शरीरे रोग उत्पेदे काष्ठे घुणं इवोद्भवणः ॥ २९ ॥

प्रालंबभ्रष्टकपिवत् व्रतभ्रष्टो बहिःकृतः । स्वयूथ्यासंयतैर्नैव मरीचिः प्रत्यपाल्यत ॥ ३० ॥

अजातप्रतिचारोसौ बबाधे व्याधिनाधिकम् । इक्षुवाट इवारक्षवर्जितः शूकरादिना ॥ ३१ ॥

रोगे निपततो घोरे महारण्य इवासखा । एवं विचिंतयामास मरीचिर्निजचेतसि ॥ ३२ ॥

अहो मम भवेऽत्रैवोदीर्णं कर्म शुभेतरम् । मां यदेते परमिवोपेक्षंते स्वेपि साधवः ॥ ३३ ॥

यद्वा दिवाकरस्येवोलूकेऽनालोककारिणः । दोषो न कस्यापि मयि साधोरप्रतिचारिणः ॥ ३४ ॥

सावद्यविरतास्ते हि सावद्यनिरतस्य मे । वैयावृत्यं कथं कुर्युर्म्लेच्छस्येव महाकुलाः ॥ ३५ ॥

न तान् कारयितुं युक्तं वैयावृत्यं ममापि हि । व्रतभ्रंशोत्थपापस्य संतानाय हि यद्भवेत् ॥ ३६ ॥

तदात्मप्रतिचाराय मंदधर्माणमात्मवत् । अन्वेषयामि कमपि युज्यंते हि मृगैर्मृगाः ॥ ३७ ॥

मरीचिश्चिंतयन्नेवमुल्लाघः कथमप्यभूत् । कालादनूषरत्वं हि व्रजत्यूषरभूरपि ॥ ३८ ॥

अन्यदा स्वामिनः पादपद्मांते दूरभव्यकः । कुतोपि कपिलो नाम राजपुत्रः समाययौ ॥ ३९ ॥

---

१ मूलोत्तरगुणश्रेष्ठ । २ परिव्रजितुमिच्छून् । ३ घुणः कीटविशेष. । ४ असखा असहायः । ५ स्वेऽपि स्वकीया अपि । ६ उलूके घूके । ७ उल्लाघो रोगनिर्मुक्तः । ८ क्षारभूमिः ।

नैर्मल्याद्भासुरत्वाच्च नित्यमेव द्युसद्गणैः । स्नाप्यमानमिवांभोभिर्मृज्यमानमिवांशुकैः ॥ ८२ ॥
स्फटिकोपलकूलेषु निर्मलेष्वंगनाजनैः । उपलक्ष्यसरिद्वारिं वातोद्धूताब्जरेणुना ॥ ८३ ॥
शृंगाग्रभागविश्रांतविद्याधरमृगीदृशाम् । वैताढ्यकुटहिमवद्विस्मारणभवांतरम् ॥ ८४ ॥
आदर्शमिव रोदस्योर्दिशां हासमिवासमम् । ग्रहनक्षत्रनिर्माणमृत्स्नास्थलमिवाक्षयम् ॥ ८५ ॥
मध्यभागसमासीनक्रीडाश्रांतकुरंगकैः । शिखरैर्दर्शितानेकमृगलाञ्छनविभ्रमम् ॥ ८६ ॥
आमुक्तामलसंव्यानमिव निर्झरपंक्तिभिः । उत्पताकमिवोदंचदर्ककांतोपलांशुभिः ॥ ८७ ॥
तुंगनिर्मलशृंगाग्रसंक्रांतेन विवस्वता । मुग्धसिद्धपुरंध्रीणां दत्तोदयगिरिभ्रमम् ॥ ८८ ॥
अत्यार्द्रपत्रबहलैः संततच्छायमंघ्रिपैः । मयूरपत्ररचितैरातपत्रैरिवोरुभिः ॥ ८९ ॥
खेचरीभिर्लाल्यमानेष्वेणपोतेषु कौतुकात् । उत्प्रस्रवन्मृगीक्षीरसिच्यमानलतावनम् ॥ ९० ॥
कदलीपत्रसंव्यानशबरीलास्यमीक्षितुम् । श्रेणीकृताक्षिपत्राभिः पुरस्त्रीभिरधिष्ठितम् ॥ ९१ ॥
रतश्रांतोरगीपीतदरिङ्खितवनानिलम् । वनानिलनटक्रीडाप्रनर्त्तितलतावनम् ॥ ९२ ॥
किंनरस्त्रीरतारंभमंदिरीभूतकंदरम् । अप्सरोमज्जनभरोत्तरंगितसरोजलम् ॥ ९३ ॥
शारीद्यूतपरैः क्वापि पानगोष्ठीरतैः क्वचित् । क्वचनाबद्धपणितैर्यक्षैस्तुमुलितोदरम् ॥ ९४ ॥
क्वचिच्छबरनारीभिः किंनरीभिः क्वचित्पुनः । क्वचिद्विद्याधरस्त्रीभिः क्रीडाप्रक्रांतगीतिकम् ॥ ९५ ॥

१ द्युसद्गणैः देवसङ्घैः । २ उपलक्ष्य नदीजल । ३ द्यावाभूम्योः । ४ सूर्येण । ५ अङ्घ्रिपैः वृक्षैः । ६ मृगशिशुषु । ७ पाशफलकद्यूतपरैः । ८ आबद्धग्लहैः । ९ कोलाहलीकृतमध्य ।

आसेव्यमानस्तत्कालसुखोंतविरसः स्मरः । कंडूयमाना पामेव निकामं च प्रवर्द्धते ॥ २९८ ॥
कामोऽयं नरकदूतः कामो व्यसनसागरः । कामो विपल्लताकंदः कामः पापप्रसारणिः ॥ २९९ ॥
मदनेन मदेनेव जनः परवशीकृतः । सदाचारपथभ्रष्टः पतत्येव भवावटे ॥ ३०० ॥
अर्थं धर्मं च मोक्षं च वेश्मेव गृहमेधिनः । आसादितप्रवेशोऽयं खनत्याखुरिव स्मरः ॥ ३०१ ॥
दर्शनेन स्पर्शनेनोपभोगेन च निर्भरम् । व्यामोहायैव जायंते विषवल्ल्य इव स्त्रियः ॥ ३०२ ॥
निकाममेव कामिन्यः कामलुब्धकवागुराः । हरिणानामिव नृणां जायंतेऽनर्थहेतवे ॥ ३०३ ॥
ये नर्मसुहृदः खादाचामैकसुहृदो हि ते । स्वामिनश्चिंतयंत्येते परलोकहितं न यत् ॥ ३०४ ॥
स्त्रीकथाभिर्गीतनृत्यैर्नर्मोक्त्या मोहयंत्यमी । खिङ्गाः स्वस्वामिनमहो नीचाः स्वार्थैकतत्पराः ॥ ३०५ ॥
कुसंसर्गात्कुलीनानां भवेदभ्युदयः कुतः । कदली नंदति कियद्बदरीतरुसंनिधौ ॥ ३०६ ॥
तत्प्रसीद कुलस्वामिन् स्वयं विज्ञोऽसि मा मुह । विहाय व्यसनासक्तिं मनो धर्मे निधीयताम् ॥ ३०७ ॥
निश्छायेन द्रुमेणेव सरसेवापवारिणा । निर्गंधेनेव पुष्पेण विदंतेनेव दंतिना ॥ ३०८ ॥
रूपेणेवालवणिम्ना राज्येनेवापमंत्रिणा । अदेवेनेव चैत्येन रजन्येवेन्दुहीनया ॥ ३०९ ॥
यतिनेवाचरित्रेण सैन्येनेवापशस्त्रिणा । मुखेनेवाक्षिहीनेन निर्धर्मेण नरेण किम् ॥ ३१० ॥

त्रिभिर्विशेषकम् ।

---

१ पामा कण्डूतिः । २ भवावटे संसारगर्त्ते । ३ आखुर्मूषकः । ४ काम एव लुब्धको निषादस्तस्य वागुराः पाशरज्जवः । ५ खादाचामैकसुहृदः खानपानैकमित्राणि । ६ खिङ्गाः शठाः ।

व्यंतरास्तत्र कालिंदीवीचिश्रीतस्करान् व्यधुः । द्रुदलैस्तोरणानार्द्रैः ककुप्सु चतसृष्वपि ॥ १०९ ॥
तोरणान्यन्वितः स्तंभेष्वराजन्मकराकृतिः । सिंधूभयतटस्थास्तुमकरश्रीविडंबिनीः ॥ ११० ॥
तेषु श्वेतातपत्राणि चत्वारि च चकाशिरे । दिग्देवीनां चतसृणां राजता इव दर्पणाः ॥ १११ ॥
रेजुर्ध्वजपटास्तेषु समीरणतरंगिताः । आकाशगंगातरलतरंगभ्रांतिदायिनः ॥ ११२ ॥
अधोऽधस्तोरणान्यासन्मौक्तिकस्वस्तिकादयः । जगतो मंगलमिहेत्यालेख्यलिपिविभ्रमाः ॥ ११३ ॥
तत्रोर्व्यां रचिते पीठे वप्रं वैमानिकाः सुराः । रत्नाकरश्रीसर्वस्वमिव रत्नमयं व्यधुः ॥ ११४ ॥
तैश्चक्रे तत्र माणिक्यकपिशीर्षपरंपरा । चंद्रचंद्रांशुमालेव मानुषोत्तरसीमनि ॥ ११५ ॥
वलयीकृत्य हेमाद्रिशृंगमेकमिवामलम् । प्राकारं मध्यमं ज्योतिष्पतयः कांचनं व्यधुः ॥ ११६ ॥
चक्रिरे कपिशीर्षाणि तत्र रत्नमयानि ते । सचित्राणीव रुचिरं प्रेक्षकप्रतिबिंबितैः ॥ ११७ ॥
विदधुर्भवनाधीशा रौप्यं वप्रमधस्तनम् । कुंडलीभूतशेषाहिभोगभ्रमविधायिनम् ॥ ११८ ॥
चक्रुस्ते कांचनीं तत्र कपिशीर्षपरंपराम् । क्षीरोदतीरनीरस्थसुपर्णश्रेणिविभ्रमाम् ॥ ११९ ॥
वप्रे वप्रे च चत्वारि चक्रिरे गोपुराणि तैः । तदा विनीतानगरीप्राकारे गुह्यकैरिव ॥ १२० ॥
गोपुरेषु च माणिक्यतोरणान्यक्रियंत तैः । प्रसारिभिः शतगुणानीव स्वैरेव रश्मिभिः ॥ १२१ ॥

---

१ कालिन्दी यमुना । २ माणिक्यप्राकाराग्रपरपरा । ३ मण्डलीकृत्य । ४ क्षीराब्धितटजलस्थगरुडपङ्क्तिविभ्रमा । ५ गुह्यकैः यक्षैः । ६ रश्मिभिः किरणैः ।

यत्रैकोपि यतिः सिध्येत् तीर्थं तदपि पावनम् । किं पुनर्यत्र तावंतः सिषिधुस्ते महर्षयः ॥ ४४७ ॥
अथ शत्रुंजयगिरौ चैत्यं रत्नशिलामयम् । अकारयन्मेरुचूलाप्रस्पर्द्धि भरतेश्वरः ॥ ४४८ ॥
पुंडरीकप्रतिमया सहितां प्रतिमां प्रभोः । चेतनामिव चेतोऽतस्तन्मध्येऽस्थापयन्नृपः ॥ ४४९ ॥
नानादेशेषु विहरन् भविनो भगवानपि । अन्वग्रहीद्बोधिदानाच्चक्षुर्दानादिवांधलान् ॥ ४५० ॥
प्रभोराकेवलज्ञानाच्छ्रमणानां तु जज्ञिरे । चतुरशीतिसहस्राः साध्वीलक्षत्रयं तथा ॥ ४५१ ॥
स पंचाशत्सहस्रं च श्राद्धलक्षत्रयं तथा । श्राद्धीलक्षाः पंच सार्द्धाश्चतुःसहस्रसंयुताः ॥ ४५२ ॥
सहस्राणि तु चत्वारि तथा सप्तशतानि च । पंचाशदधिकान्यासन् श्रीचतुर्दशपूर्विणाम् ॥ ४५३ ॥
अवधिज्ञानिसाधूनां सहस्राणि नवाभवन् । केवलज्ञानिसाधूनां सहस्राणि तु विंशतिः ॥ ४५४ ॥
जातवैक्रियलब्धीनां श्रमणानां महात्मनाम् । षट्शतान्यधिकान्यासन् सहस्राणि तु विंशतिः ॥ ४५५ ॥
पृथक् पृथक् वादिनां च मनःपर्ययिणां तथा । द्वादशासन् सहस्राणि सपंचाशच्च षट्शती ॥ ४५६ ॥
अनुत्तरविमानोपपातिनां च महात्मनाम् । द्वाविंशतिसहस्राणि चाभवन् भुवनप्रभोः ॥ ४५७ ॥
एवं चतुर्विधं संघं भगवानादितीर्थकृत् । धर्मे संस्थापयामास व्यवहार[2] इव प्रजाः ॥ ४५८ ॥
दीक्षाकालात्पूर्वलक्षं क्षपयित्वा ततः प्रभुः । ज्ञात्वा स्वमोक्षकालं च प्रतस्थेऽष्टापदं प्रति ॥ ४५९ ॥
शैलमष्टापदं प्राप क्रमेण स परिच्छदः । निर्वाणसौधसोपान[3]मिवारोहच्च तं प्रभुः ॥ ४६० ॥
समं मुनीनां दशभिः सहस्रैः प्रत्यपद्यत । चतुर्दशेन तपसा पादपोपगमं प्रभुः ॥ ४६१ ॥

१ मेरुचूलासमानामित्यर्थः । २ लोकव्यवहारे । ३ मोक्षप्रासादसोपान ।

साधु साधु स्वयंबुद्ध स्वामिनो हितकाम्यसि । यदाहार श्वोज्ञारैर्गिरा भावोऽनुमीयते ॥ ३२५ ॥
ऋजोः सदा प्रसन्नस्य स्वामिनः सुखहेतवे । वदंत्येवं कुलामात्यास्त्वादृशा एव नापरे ॥ ३२६ ॥
निसर्गकठिनः कस्त्वामुपाध्यायोऽध्यजीगपत् । अकाण्डाशनिपाताभं प्रभोर्यदिदमब्रवीः ॥ ३२७ ॥
स्वयं भोगार्थिभिः स्वामी सेव्यते सेवकैरिह । मा भुंक्थास्त्वं तु भोगानित्युच्यते स कथं नु तैः॥ ३२८॥
त्यक्त्वा यदैहिकान् भोगान् परलोकाय यत्यते । हित्वा हस्तगतं लेह्यं कूर्परालेहनं हि तत् ॥ ३२९ ॥
परलोकफलो धर्मः कीर्त्यते तदसंगतम् । परलोकोऽपि नास्त्येवाभावतः परलोकिनः ॥ ३३० ॥
पृथ्व्यप्तेजःसमीरेभ्यः समुद्भवति चेतना । गुरुपिष्टोदकादिभ्यो मदशक्तिरिव स्वयम् ॥ ३३१ ॥
शरीरान्न पृथक् कोपि शरीरी हंत विद्यते । परित्यज्य शरीरं यः परलोकं गमिष्यति ॥ ३३२ ॥
निःशंकमुपभोक्तव्यं ततो वैषयिकं सुखम् । स्वात्मा न वंचनीयोऽयं स्वार्थभ्रंशो हि मूर्खता ॥ ३३३ ॥
धर्माधर्मौ च नाशंक्यौ विघ्नहेतू सुखेषु तत् । तावेव नैव विद्येते यतः खरविषाणवत् ॥ ३३४ ॥
स्नपनेनांगरागेण माल्यैर्वस्त्रविभूषणैः । यदेकः पूज्यते ग्रावा पुण्यं तेन व्यधायि किम् ॥ ३३५ ॥
अन्यस्य चोपरि ग्राण्ण आसित्वा मूत्र्यते जनैः । क्रियते च पुरीषादि पापं तेन व्यधायि किम् ॥३३६॥
उत्पद्यंते विपद्यंते कर्मणा यदि जंतवः । उत्पद्यंते विपद्यंते बुद्बुदाः केन कर्मणा ॥ ३३७ ॥
तदस्ति चेतनो यावत् चेष्ट्यते तावदिच्छया । चेतनस्य विनष्टस्य विद्यते न पुनर्भवः ॥ ३३८ ॥

१ भावश्चित्ताभिप्राय. । २ अकाण्डाशनिपाताभ अनवसरे वज्रपाततुल्य । ३ कूर्परो हस्तमध्यभागः "कोणी"ति प्रसिद्धो लोके । ४ खरशृङ्गवत् । ५ ग्रावा पाषाणः ।

य एव म्रियते जंतुः स एवोत्पद्यते पुनः । इत्येतदपि वाङ्मात्रं सर्वथाऽनुपपत्तितः॥ ३३९ ॥
शिरीषकल्पे तल्पे रूपलावण्यचारुभिः । रमणीभिः समं स्वामी रमतामविशंकितम् ॥ ३४० ॥
भोज्यान्यमृतरूपाणि पेयानि च यथारुचि । स्वाद्यंतां स्वामिना स्वैरं स वैरी यो निषेधति ॥ ३४१ ॥
कर्पूरागरुकस्तूरीचंदनादिभिरंचितः* । एकसौरभ्यनिष्पन्न इव तिष्ठ दिवानिशम् ॥ ३४२ ॥
उद्यानयानजगतीचित्रशालादिशालि यत् । तत्तत् क्षितीश प्रेक्षस्व चक्षुःप्रीत्यै प्रतिक्षणम् ॥ ३४३ ॥
वेणुवीणामृदंगानुनादिभिर्गीतनिःस्वनैः । दिवानिशं तव स्वामिन्नस्तु कर्णरसायनम् ॥ ३४४ ॥
यावज्जीवेत्सुखं जीवेत् तावद्वैषयिकैः सुखैः । न ताम्येद्धर्मकार्याय धर्माधर्मफलं क्वचित् ॥ ३४५ ॥
स्वयंबुद्धस्ततोऽवादीन्नास्तिकैः स्वपरारिभिः । अंधैरंधा इवाकृष्य पात्यंते धिगहो जनाः ॥ ३४६ ॥
स्वसंवेदनवेद्योयमात्मास्ति सुखदुःखवत् । निषेधितुं बाधाभावाच्छक्यते नहि केनचित् ॥ ३४७ ॥
सुखितोहं दुःखितोहमिति कस्यापि जातुचित् । जायते प्रत्ययो नैव विनात्मानमबाधितः ॥ ३४८ ॥
स्वशरीरे स्वसंवित्तेरेवमात्मनि साधिते । अस्त्येव परकीयेऽपि शरीरे सोऽनुमानतः ॥ ३४९ ॥
निश्चीयते शरीरेऽस्ति परकीयेऽपि चेतनः । सर्वत्र बुद्धिपूर्वायाः क्रियाया उपलंभतः ॥ ३५० ॥
य एव म्रियते जंतुः स एवोत्पद्यते पुनः । अस्त्येवं परलोकोऽपि चेतनस्य न संशयः ॥ ३५१ ॥
यात्येकमेव चैतन्यं जन्मतोऽन्यत्र जन्मनि । शैशवादिव तारुण्ये तारुण्यादिव वार्द्धके ॥ ३५२ ॥

१ अनुपपत्तितः असिद्धितः । २ शिरीषकल्पे शिरीषकुसुमतुल्ये । ३ तल्पे शय्यायां । ४ सौगन्ध्योत्पन्नः । ५ कर्णामृतम् । ६स्वानुभववेद्यः । ७ प्रत्ययो विश्वासः । ८ अबाधित इति प्रत्ययविशेषणम् । ९ स्वसवित्तेः स्वानुभवात् । १० उपलम्भतः प्राप्तेः । ११ वृद्धावस्थायां ।
* क्वचित्पुस्तके राचित इत्यपि पाठः ।

विना हि पूर्वचैतन्यानुवृत्तिं जातमात्रकः । अशिक्षितः कथं बालो मुखमर्पयति स्तने ॥ ३५३ ॥
अचेतनेभ्यो भूतेभ्यश्चेतनो जायते कथम् । कारणस्यानुरूपं हि कार्यं जगति दृश्यते ॥ ३५४ ॥
प्रत्येकं युगपद्वा स्याद्भूतेभ्यश्चेतनो ननु । आद्यपक्षो यदि तदा तावंतश्चेतना न किम् ॥ ३५५ ॥
अथ द्वितीयः पक्षः स्यात् तदा भिन्नस्वभावकैः । भूतैरेकस्वभावोयं जन्यते चेतनः कथम् ॥ ३५६ ॥
रूपगंधरसस्पर्शगुणा तावद्वसुंधरा । प्रत्यक्षमेतदापोऽपि रूपस्पर्शरसात्मिकाः ॥ ३५७ ॥
रूपस्पर्शगुणं तेज एकस्पर्शगुणो मरुत् । अमीषामेवमावाभ्यं व्यक्ता भिन्नस्वभावता ॥ ३५८ ॥
तोयादिभ्यो विसदृशां मुक्तानां जन्मदर्शनात् । भूतेभ्योऽचेतनेभ्योऽपि चेतनः संभवीति चेत् ॥३५९॥
तन्न युक्तं यतस्तोयं मौक्तिकादिषु दृश्यते । एवं पौद्गलिकं रूपं वैसदृश्यं ततः कथम् ॥ ३६० ॥
किं च पिष्टोदकादिभ्यो मदशक्तिरचेतना । अचेतनेभ्यो जातेति दृष्टांतश्चेतने कथम् ॥ ३६१ ॥
न च देहात्मनोरैक्यमिति वाच्यं कदाचन । यद्देहे तदवस्थेऽपि चेतना नोपलभ्यते ॥ ३६२ ॥
यच्चैकः पूज्यते ग्रावा मूत्राद्यैर्लिप्यतेऽपरः । तदसत्सुखदुःखादि कुतस्त्यमपचेतने ॥ ३६३ ॥
ततो देहाद्विभिन्नोऽयमात्मास्ति परलोकवान् । विद्यते परलोकोऽपि धर्माधर्मनिबंधनम् ॥ ३६४ ॥
अंगनालिंगनादग्नितापादिव समंततः । विलीयते मनुष्याणां विवेको नवनीतवत् ॥ ३६५ ॥
निरर्गलं बहुरसांस्तांस्तानाहारपुद्गलान् । भुंजानो नैव जानाति मत्तः पशुरिवोचितम् ॥ ३६६ ॥
चंदनागरुकस्तूरीघनसारादिगंधतः । आक्रामति नरं सद्यो दंदशूक इव स्मरः ॥ ३६७ ॥

१ विलक्षणाना । २ ग्रावा पाषाणः । ३ निरर्गलमुच्छृङ्खलम् । ४ घनसारः कर्पूर ।

पुमान् रामादिरूपेषु विलग्नेनेह चक्षुषा । वृतिलग्नोपसंव्यानांचलेनेव[1] स्खलत्यहो ॥ ३६८ ॥
मुहूर्त्तसुखदानेन मोहयंती मुहुर्मुहुः । धूर्त्तमैत्रीव संगीतिः कुशलाय न सर्वथा ॥ ३६९ ॥
तत्पापस्यैकसुहृदो धर्मस्यैकविरोधिनः । नरकस्याकृष्टिपातान् विषयान् मुंच दूरतः ॥ ३७० ॥
यत्प्रेष्य एको भवति स्वामी भवति चापरः । एकः प्रार्थयते भिक्षामपरश्च प्रयच्छति ॥ ३७१ ॥
वाहनं च भवत्येकस्तमन्यस्त्वधिरोहति । अभयं याचते चैको द्वितीयस्तु ददाति तत् ॥ ३७२ ॥
इत्यादि सम्यगेवेह धर्माधर्मफलं महत् । पश्यन्नपि न मन्येत यस्तस्मै स्वस्ति धीमते ॥ ३७३ ॥
तदसद्वागिवाऽधर्मो हेयो दुःखनिबंधनम् । स्वामिन् सद्वागिवादेयो धर्मः शर्मैककारणम् ॥ ३७४ ॥
ऊचे ततः शतमतिर्नात्मा कश्चिदिहापरः । पदार्थविषयज्ञानात् प्रतिक्षणविभंगुरात् ॥ ३७५ ॥
यद्वस्तुषु स्थिरत्वे धीर्वासना तत्र कारणम् । पूर्वापरक्षणानां तदेकत्वं वास्तवं ननु ॥ ३७६ ॥
अथोवाच स्वयंबुद्धो वस्तु नास्ति निरन्वयम्[2] । अंभस्तृणादि हि गवां हंत दुग्धाय कल्पते ॥ ३७७ ॥
आकाशपुष्पवत्कूर्मरोमवच्च निरन्वयम् । नैव वस्तु भवत्यत्र तद्वृथा क्षणभंगधीः ॥ ३७८ ॥
वस्तु चेत्क्षणविध्वंसि संतानः क्षणिको न किम् । संतानस्य च नित्यत्वे समस्तं क्षणिकं कुतः ॥ ३७९ ॥
सर्वभावेष्वनित्यत्वे निहित[3]प्रतिमार्गणम् । स्मरणं प्रत्यभिज्ञा[4] च कथं नामोपपद्यते ॥ ३८० ॥
जन्मानंतरनाशित्वे द्वितीयक्षणसंभवी । पित्रोर्न पुत्रः पितरौ न पुत्रस्येत्यसंगतिः ॥ ३८१ ॥
विवाहसमयादूर्ध्वं दंपत्योः क्षणनाशिनोः । न जायायाः पतिः पत्युर्न जायेत्यसमंजसम् ॥ ३८२ ॥

---

१ वृतिसङ्क्रान्तोत्तरीयाञ्चलेन। २ निरन्वय नि सतान। ३ निहितस्य न्यासीकृतस्य प्रतिमार्गण प्रतियाचन। ४ प्रत्यभिज्ञान उपलक्षण।

इह कृत्वाऽशुभं कर्म स नाऽमुत्राश्नुते फलम् । भुंक्तेऽन्यः किंतु तदिति कृतनाशाकृतागमौ ॥ ३८३ ॥

तुर्योऽप्युवाच मायासौ तत्वतो नास्ति किंचन । दृश्यमानमपि स्वप्नमृगतृष्णादिसन्निभम् ॥ ३८४ ॥

गुरुः शिष्यः पिता पुत्रो धर्मोऽधर्मो निजः परः । इत्यादि दृश्यते यत्स व्यवहारो न तात्विकम् ॥ ३८५ ॥

विहाय जंबुको मांसं तीरे मीनाय धावितः । मीनोऽपि प्राविशत् तोये मांसं गृध्रोऽहरद्यथा ॥ ३८६ ॥

तथैवैहिकसुखं त्यक्त्वा परलोकाय धाविताः । आत्मानमुभयभ्रष्टा वंचयंते हि ते नराः ॥ ३८७ ॥

पाखंडिनामलीकाज्ञां[1] श्रुत्वा नरकभीरवः । दंडयंति निजं देहमहो मोहाद्व्रतादिना ॥ ३८८ ॥

यथा क्ष्मापातशंक्यैकांघ्रिणा नृत्यति लावकः[2] । तथाभिशंक्य नरकपातं जंतुस्तपस्यति ॥ ३८९ ॥

स्वयंबुद्धोऽब्रवीद्वस्तु न सच्चेदर्थकृत्कथम् । माया चेदीदृशी तर्हि स्वप्नेभः किं न कार्यकृत् ॥ ३९० ॥

कार्यकारणभावं चेद्वस्तूनां पारमार्थिकम् । न मन्यते तदा किं त्वं बिभेषि पततोऽशनेः ॥ ३९१ ॥

एवं सति न त्वं नाहं न वाच्यं न च वाचकः । तदेष्टप्रतिपत्तिः स्याद्व्यवहारकरी कथम् ॥ ३९२ ॥

वितंडापंडितैरेभिः स्वयं विषयगृध्नुभिः[3] । देव प्रतार्यसे नित्यं शुभोदर्कपराङ्मुखैः[4] ॥ ३९३ ॥

ततो विवेकमालंब्य विषयान् त्यज दूरतः । धर्ममेवाश्रय स्वामिन्नत्राऽमुत्र च शर्मणे ॥ ३९४ ॥

अथ राजाब्रवीदेवं प्रसादसुभगाननः । स्वयंबुद्ध महाबुद्धे साधु साधूक्तवानदः ॥ ३९५ ॥

युक्तं धर्म उपादेयो न धर्मद्वेषिणो वयम् । उपादीयेत कालेऽसौ मंत्रास्त्रमिव संगरे[5] ॥ ३९६ ॥

चिरादभ्यागतं मित्रमिव को नाम यौवनम् । उपेक्षेत तदुचितां प्रतिपत्तिमकल्पयन् ॥ ३९७ ॥

---

१ असत्याज्ञा । २ पक्षीविशेषः । ३ विषयलोलुपैः । ४ शुभोत्तरकालविमुखैः । ५ युद्धे ।

धर्मोपदेशस्तदयं त्वया नावसरे कृतः । वीणायां वाद्यमानायां वेदोद्गारो न राजते ॥ ३९८ ॥
परलोको हि धर्मस्य फलं संदिग्धमेव तत् । तदैहिकसुखास्वादमकांडे किं निषेधसि ॥ ३९९ ॥
अथ विज्ञापयामास स्वयंबुद्धः कृतांजलिः । आवश्यके धर्मफले मा शंकिष्ठाः कदाचन ॥ ४०० ॥
किं त्वं स्मरसि बालत्वे यदावां नंदने वने । अपश्याव गतावेकं कांतिरूपधरं सुरम् ॥ ४०१ ॥
सप्रसादो जगादैवं स देवस्त्वां तदा नृप । अहं ह्यतिबलो नाम भवतोऽस्मि पितामहः ॥ ४०२ ॥
क्रूरमित्रादिवोद्विग्नोऽमुष्माद्वैषयिकात्सुखात् । राज्यं तृणमिव त्यक्त्वा त्रिरत्नीमहमाददे[1] ॥ ४०३ ॥
व्रतप्रासादकलशः संन्यासोऽन्तक्षणे मया । जगृहे तत्प्रभावेन जातोऽहं लांतकाधिपः ॥ ४०४ ॥
प्रमद्वरेण[2] न स्थेयं तत्त्वयापीत्युदीर्य सः । विद्योतितवियद्[3] विद्युदिव सोऽथ तिरोदधे ॥ ४०५ ॥
मन्यस्व परलोकं तद्वचः पैतामहं स्मरन् । प्रत्यक्षेऽपि प्रमाणे किं प्रमाणांतरकल्पना ॥ ४०६ ॥
राजाप्यूचे स्मारितोऽस्मि साधु पैतामहं वचः । परलोकमहं मन्ये धर्माधर्मनिबंधनम् ॥ ४०७ ॥
मिथ्यादृग्वाक्पांशुपुंजजलदः सोऽथ मंत्रिराट् । लब्धावकाशः सानंदमिति वक्तुं प्रचक्रमे ॥ ४०८ ॥
तव वंशेऽभवत्पूर्वं कुरुचंद्रो नरेश्वरः । जाया कुरुमती तस्य हरिचंद्रश्च नंदनः ॥ ४०९ ॥
नृपतिः स तु कौलो[4]ऽभूत् महारंभपरिग्रहः । धुर्योऽनार्येषु कृत्येषु कृतांत इव निर्दयः ॥ ४१० ॥
दुराचारोऽपि रौद्रोऽपि स राज्यं बुभुजे चिरम् । पूर्वोपार्जितपुण्यानां फलमप्रतिमं खलु ॥ ४११ ॥
तस्यावसानसमये जज्ञे धातुविपर्य्ययः । आसन्ननरकक्लेशवर्णिकामात्रसंनिभः ॥ ४१२ ॥

---

१ ज्ञानदर्शनचारित्ररूपा त्रिरत्नीं । २ प्रमादिना । ३ प्रकाशिताकाशः । ४ कौलः क्रूरकर्मा ।

आसीत्कंटकशय्येव तूलशय्याऽस्य दुःखदा । निंबवद्विरसान्यासन् भोज्यानि सरसान्यपि ॥ ४१३ ॥
चंदनागरुकर्पूरकस्तूर्यः पूतयोऽभवन् । शत्रुवत्पुत्रमित्राद्या दृशोरुद्वेगहेतवः ॥ ४१४ ॥
कर्णक्लेशाय गीतानि खरोष्ट्रक्रोष्टुनादवत् । पुण्यच्छेदेऽथवा सर्वं प्रयाति विपरीतताम् ॥ ४१५ ॥
सुखेतरैस्तं विषयोपचारै रतिदैः क्षणम् । कुरुमतीहरिचंद्रौ प्रच्छन्नं प्रत्यजागृताम् ॥ ४१६ ॥
चुंब्यमान इवांगारैः प्रत्यंगं दाहविह्वलः । रौद्रध्यानपरः प्रापदवसानं स भूपतिः ॥ ४१७ ॥
तस्यौर्ध्वदेहिकं कृत्वा हरिचंद्रस्तदात्मजः । अशिषद्विधिवद्राज्यं सदाचारपथोऽध्वगः ॥ ४१८ ॥
सोऽत्रापि दृष्टाघफलं दृष्ट्वा तन्मरणं पितुः । धर्ममेव पुमर्थेषु तुष्टावार्कं ग्रहेष्विव ॥ ४१९ ॥
सुबुद्धिं बालसुहृदं श्रावकं सोऽन्यदादिशत् । धर्मवक्त्रयोऽन्वहं धर्मः श्रुत्वाशंस्यस्त्वया मम ॥ ४२० ॥
सुबुद्धिर्विदधे नित्यं तत्तथात्यंततत्परः । अनुकूलनिदेशो हि सतामुत्साहकारणम् ॥ ४२१ ॥
प्रत्यहं हरिचंद्रोऽपि धर्मं तत्कथितं भृशम् । श्रद्दधे पापभीतः सन् रोगभीत इवौषधम् ॥ ४२२ ॥
अन्यदा बहिरुद्याने शीलंधरमहामुनेः । उत्पन्ने केवलज्ञानेऽभीयुर्देवास्तमर्चितुम् ॥ ४२३ ॥
सुबुद्धिनैवं कथिते श्रद्धोल्लिखितमानसः । स राजा तुरगारूढस्तं मुनींद्रमुपाययौ ॥ ४२४ ॥
नमस्कृत्योपविष्टे च तस्मिन् राज्ञि महामुनिः । विदधे कुमतध्वांतकौमुदीं[3] धर्मदेशनाम् ॥ ४२५ ॥
देशनांते स भूपालस्तं पप्रच्छ कृतांजलिः । स्वामिन् मम पिता मृत्वा कां गतिं समपद्यत ॥ ४२६ ॥
उवाच सोऽथ भगवान् महाराज पिता तव । सप्तमं नरकं प्राप स्थानं नान्यत्र तादृशाम् ॥ ४२७ ॥

---

१ दुर्गन्धमय्यः । २ दृष्टपापफल । ३ कुमतध्वान्तकौमुदी कुमतान्धकारचन्द्रिका ।

तदाकर्ण्य समुद्भूतसंवेगः[1] स महीपतिः । वंदित्वा मुनिमुत्थाय ययौ निजनिकेतनम् ॥ ४२८ ॥
राज्यं सूनोरर्प्पयित्वा सुबुद्धिमिदमभ्यधात् । प्रव्रजिष्याम्यहं धर्म्मे मयीवास्मिन् सदादिशेः ॥ ४२९ ॥
सोप्यूचे प्रव्रजिष्यामि भवंतमनु भूपते । त्वत्सुते मत्सुतो धर्मं वक्ष्यत्यहमिव त्वयि ॥ ४३० ॥
कर्माद्रिभेदकुलिशं[2] व्रतं तौ राजमंत्रिणौ । आददाते सुचिरं च पालयित्वेयतुः शिवम् ॥ ४३१ ॥
युष्मद्वंशेऽपरश्चासीद्दंडको नाम पार्थिवः । प्रचंडशासनो दंडधरः साक्षादिवारिषु ॥ ४३२ ॥
बभूव तनयस्तस्य मणिमालीति विश्रुतः । अंशुमालीव तेजोभिरभिव्याप्तदिगंतरः ॥ ४३३ ॥
पुत्रमित्रकलत्रेषु रत्नस्वर्णधनेषु च । प्राणेभ्योप्यत्यभीष्टेषु मूर्छावान्[3] दंडकोऽभवत् ॥ ४३४ ॥
आर्त्तध्यानपरः कालाद्दंडकः प्राप पंचताम् । भांडागारे निजे सोऽजगरोऽजायत दुर्धरः ॥ ४३५ ॥
तत्रागारे प्रविवेश यो यस्तं तं स जग्रसे । दारुणात्मा सर्वभक्षी हुताशन इवोद्यतः ॥ ४३६ ॥
अन्यदा ददृशे तेन मणिमाली गृहं विशन् । प्राग्जन्मस्मरणाच्चात्मसूनुरित्युपलक्षितः ॥ ४३७ ॥
प्रशांतां दर्शयन्मूर्तिं सस्नेहो मूर्तिमानिव । प्राग्जन्मबंधुर्नः कोऽपीत्यज्ञायि मणिमालिना ॥ ४३८ ॥
मुनीनां ज्ञानिनां पार्श्वाज्ज्ञात्वा तं पितरं निजम् । उपविश्य पुरस्तस्य जैनं धर्मं शशंस सः ॥ ४३९ ॥
सोऽवबुध्यार्हतं धर्मं संन्यासं[4] प्रत्यपद्यत । शुक्लध्यानपरो मृत्वा देवभूय[5]मियाय च ॥ ४४० ॥
पुत्रप्रेम्णा दिवोऽभ्येत्य स हारं मणिमालिने । दिव्यमुक्तामयमदात्सोयमद्यापि ते हृदि ॥ ४४१ ॥
हरिश्चंद्रान्वयेऽभूस्त्वं सुबुद्धेरन्वये त्वहम् । क्रमागतासद्भावेन ततो धर्मे प्रवर्त्त्यसे ॥ ४४२ ॥

१ सप्राप्तवैराग्यः । २ कर्मरूपपर्वतविदारणे वज्रं । ३ मूर्च्छावान् मोहवान् । ४ सन्यासं त्यागं । ५ देवभूयं देवत्वम् ।

किमेतद्गीतनृत्यादि मामुद्दिश्य प्रवर्तते । अयं लोको विनीतः किं मह्यं नाथाय तिष्ठते ॥ ४७१ ॥
इदं श्रीमदिदं रम्यमिदं सेव्यमिदं प्रियम् । इदमानंदसदनं सदः किमिदमासदम् ॥ ४७२ ॥
स्फूर्जद्वि[१]तर्कसंपर्कं तमके[२]र्कशया गिरा । इति विज्ञपयामास प्रतीहारः कृतांजलिः ॥ ४७३ ॥
अद्य नाथ वयं धन्याः सनाथाः स्वामिना त्वया । कुरु प्रसादं नम्रेषु पीयूषसदृशा दृशा ॥ ४७४ ॥
स्वामिन्नीशानकल्पोयं यथासंकल्पितप्रदः । अनल्पानश्वरश्रीकः सदा सुखनिकेतनम् ॥ ४७५ ॥
अमुष्मिन्देवलोके यत्त्वया पुण्यैरुपार्जितम् । विमानं श्रीप्रज्ञमिदं साध्वलंकुरुपेऽधुना ॥ ४७६ ॥
त्वत्सन्नामंकनममी तव सामानिकाः सुराः । एकोप्यनेक इव यैर्विमानेऽस्मिंस्त्वमीक्ष्यसे ॥ ४७७ ॥
त्रयस्त्रिंशा अमी स्वामिन् पु[३]रोधोमंत्रितास्पदम् । त्वदादेशमपेक्षंते यथासमयमादिशेः ॥ ४७८ ॥
पारिषद्याः सुराश्चैते नर्मसाचिव्यकारिणः । लीलाविलासगोष्ठीषु रमयिष्यंति ते मनः ॥ ४७९ ॥
सदा सं[४]वर्म्मितास्तीक्ष्णाः षड्त्रिंशच्छस्त्रधारिणः । स्वामिरक्षामहादक्षाश्चात्मरक्षा अमी तव ॥ ४८० ॥
लोकपाला अमी च त्वत्पुररक्षाधिकारिणः । अनीकपतयश्चैते त्वदनीकधुरंधराः ॥ ४८१ ॥
पौरजानपदप्रायाः प्रकीर्णकसुरा इमे । देव त्वदाज्ञानिर्माल्यं धारयिष्यंति मूर्द्धनि ॥ ४८२ ॥
अ[५]भियोग्याश्चा[६]नभियोग्याः सेवंते त्वामितस्त्वया । सुराः किल्बिषिकाश्चैते म्लेच्छकर्मकृतस्तव ॥ ४८३ ॥
तवैते रम्यरमणीरमणीयतरांगणाः । मनःप्रसादजननाः प्रासादा रत्ननिर्मिताः ॥ ४८४ ॥

---

१ स्फुरद्विकल्पसंपर्क । २ अकर्कशया कोमलया । ३ पुरोहितमत्रित्वस्थान । ४ सवर्म्मिताः कवचिनः । ५ अभियोग्या देवविशेषाः ।
६ अभियोग्याः त्वया अभियोक्तु योग्याः ।

यद्विज्ञसमकांक्षे तु श्रूयतां तत्र कारणम् । यदद्य नंदनेऽद्राक्षं चारणश्रमणावहम् ॥ ४४३ ॥
जगत्प्रकाशजनकौ महामोहतमश्छिदौ । एकत्र मिलितौ साक्षात् सूर्याचंद्रमसाविव ॥ ४४४ ॥
कुर्वंतौ देशनां तत्र ज्ञानातिशयशालिनौ । तौ मया समये पृष्टौ प्रमाणं भवदायुषः ॥ ४४५ ॥
ताभ्यां तु भवतो मासमात्रमायुर्निवेदितम् । अतस्त्वां त्वरयाम्यद्य धर्मायैव महामते ॥ ४४६ ॥
महाबलोऽथाभिदधे स्वयंबुद्ध धियांनिधे । त्वमेवैकोऽसि मे बंधुर्यन्मत्कार्याय ताम्यसि ॥ ४४७ ॥
आक्रम्यमाणं विषयैर्निद्रालुं मोहनिद्रया । मामजागरयः साधु शाधि किं साधयाम्यतः ॥ ४४८ ॥
आयुष्यल्पेऽधुना धर्मः साधनीयः कियान्मया । कीदृशं कूपखननं सद्योलग्ने प्रदीपने ॥ ४४९ ॥
स्वयंबुद्धोप्युवाचैवं मा विषीद दृढीभव । परलोकैकसुहृदं यतिधर्मं समाश्रय ॥ ४५० ॥
अप्येकं दिवसं जीवः परिव्रज्यामुपेयिवान् । अपवर्गमपि प्राप्नोत्येव स्वर्गस्य का कथा ॥ ४५१ ॥
आमेत्युदित्वा स्वसुतं स्वे पदे प्रत्यतिष्ठपत् । महाबलस्तदाचार्यः प्रासादे प्रतिमामिव ॥ ४५२ ॥
दीनानाथजनेभ्योऽथ दयादानमदत्त सः । तथा यथा न कोप्यासीद्याच्ञादीनो जनः पुनः ॥ ४५३ ॥
विचित्रवस्त्रमाणिक्यसुवर्णकुसुमादिभिः । स चक्रे सर्वचैत्येषु पूजां शक्र इवापरः ॥ ४५४ ॥
ततश्च क्षमयित्वा स्वजनं परिजनं तथा । दीक्षां मुनींद्रपादांतेऽग्रहीन्मोक्षश्रियःसखीम् ॥ ४५५ ॥
सर्वसावद्ययोगानां विरत्या सममेव सः । चक्रे चतुर्विधाहारप्रत्याख्यानं महामनाः ॥ ४५६ ॥
असौ समाधिपीयूषह्रदमग्नो निरंतरम् । अंभोजिनीखंड इव नहि मम्लौ मनागपि ॥ ४५७ ॥

---

१ शिक्षय । २ प्रदीपने अग्नौ । ३ अपवर्गं मोक्ष । ४ सर्वसावद्ययोगाना सर्वसदोषयोगानाम् ।

भुंजान इव भोज्यानि पेयान्यपि पिबन्निव । सोऽक्षीणकांतिरभवन्महासत्वशिरोमणिः ॥ ४५८ ॥
समाहितः स्मरन्पंचपरमेष्ठिनमस्क्रियाम् । द्वाविंशतिदिनान् कृत्वाऽनशनं स व्यपद्यत ॥ ४५९ ॥
स स्वयं संभृतैः पुण्यैर्दिव्यैरिव तुरंगमैः । ईशानकल्पं तत्कालमाससाद दुरासदम् ॥ ४६० ॥
विमाने श्रीप्रभेऽथोपपादे शयनसंपुटे । विद्युत्पुंज इवांभोदगर्भे समुपपादि सः ॥ ४६१ ॥
दिव्याकृतिः सुसंस्थानः सप्तधातूज्झितांगकः । शिरीषसुकुमारांगः कांतिक्रांतदिगंतरः ॥ ४६२ ॥
वज्रकायो महोत्साहः पुण्यलक्षणलक्षितः । कामरूपोऽवधिज्ञानी सर्वविज्ञानपारगः ॥ ४६३ ॥
अणिमादिगणोपेतो निर्दोषोऽचिंत्यवैभवः । ललितांग इति ख्यातः स यथार्थाभिधोऽभवत् ॥ ४६४ ॥
त्रिभिर्विशेषकम् ।

पादयो रत्नकटके कटिसूत्रं कटीतटे । हस्तयोः कंकणद्वंद्वं भुजयोरंगदद्वयम् ॥ ४६५ ॥
वक्षःस्थले हारयष्टिः कंठे ग्रैवेयकं तथा । कुंडले कर्णलतयोः स्रक्किरीटौ च मूर्द्धनि ॥ ४६६ ॥
इत्यादिभूषणग्रामो दिव्यानि वसनानि च । सर्वांगभूषणं तस्य यौवनं च सहाऽभवत् ॥ ४६७ ॥
त्रिभिर्विशेषकम् ।

ननाद नादयन्नाशाः प्रतिनादेन दुंदुभिः । पेठुर्जय जगन्नंदेत्यादि मंगलपाठकाः ॥ ४६८ ॥
गीतवादित्रनिर्घोषबंदिकोलाहलाकुलम् । तद्विमानं जगर्जेव नाथागमभवा मुदा ॥ ४६९ ॥
सोऽथ सुप्तोत्थित इव पश्यन्नेवं व्यतर्कयत् । किमिंद्रजालं किं स्वप्नः किं माया किमिवेदृशम् ॥ ४७० ॥

१ अणिमादयः सिद्धयस्तासां गणेनोपेतः । २ ग्रैवेयकं ग्रीवाभरणम् । ३ नाथागमभवा स्वामिसमागमजनितया ।

नितांतसुकुमारांघ्रिपाणिनेत्राननच्छलात् । लावण्यसिंधुमध्यस्थारविंदवनिकामिव ॥ ४९९ ॥
आनुपूर्व्येण पृथुलौ वृत्तावूरू च बिभ्रतीं । न्यासीकृताविव निजौ तूणीरौ[1] पुष्पधन्वनः ॥ ५०० ॥
राजमानां नितंबेन विपुलेनाछवाससा । कलहंसकलालीढपुलिनेनेव निम्नगाम् ॥ ५०१ ॥
राजंतीमुदरेणातिक्षामेण पविमध्यवत्[2] । पीनोन्नतकुचद्वंद्वभारप्रोद्वहनादिव ॥ ५०२ ॥
भ्रांतीं रेखात्रयांकेण कंठेन कलनादिना । कंबुनेव स्मरनृपस्योच्चैर्विजयशंसिना ॥ ५०३ ॥
अधरीकृतबिंबाभ्यामधराभ्यां चकासतीम् । नासया नेत्रनलिननाललीलाजुषापि च ॥ ५०४ ॥
अर्धीकृतपार्वणेंदुलक्ष्मीसर्वस्वहारिणा । हारिणा[3] चित्तहरिणीं स्निग्धगंडालिकेन[4] च ॥ ५०५ ॥
कर्णौ रतिपतेः क्रीडादोलालीलामलिम्लुचौ[5] । भ्रूयुगं च स्मरधनुर्यष्टिश्रीहारि बिभ्रतीम् ॥ ५०६ ॥
शोभमानां कबर्या[6] च स्निग्धकज्जलकांतया । वदनांभोरुहस्यानुसारिण्येवालिमालया ॥ ५०७ ॥
सर्वांगीणं[7] च विन्यस्तरत्नाभरणसंपदा । जंगमीभावभाक्कल्पलताविभ्रमधारिणीम् ॥ ५०८ ॥
मनोज्ञमुखपद्माभिरप्सरोभिः सहस्रशः । परितः परिकरितां सरिद्भिरिव जाह्नवीम् ॥ ५०९ ॥
देवीं स्वयंप्रभां नाम प्रभाभिन्नाचिरप्रभाम्[8] । प्रभूतप्रमदस्तत्र ददर्श श्रीप्रभप्रभुः ॥ ५१० ॥

द्वादशभिः कुलकम् ।

कृताभ्युत्थानया[9] दूरात् स्नेहातिशययुक्तया । तया सहैकपर्यंके निषसादामराग्रणीः ॥ ५११ ॥

---

१ तूणीरौ इषुधी । २ वज्रमध्यवत् । ३ हारिणा मनोहरेण । ४ स्निग्धं मसृण यत् गण्डालिकं आभरणविशेषं तेन । ५ मलिम्लुचौ चौरौ । ६ कबर्या केशपाशेन । ७ सर्वाङ्गीणं सर्वाङ्गेषु । ८ प्रभाभिः भिन्ना अचिरप्रभा विद्युत् यया सा । ९ कृताभ्युतथानया कृतसम्मुखोत्थानया ।

एकत्र च निषण्णौ तौ चकासामासतुर्भृशम् । एकालवालमध्यस्थौ[1] लताविटपिनाविव ॥ ५१२ ॥
परस्परमनूचेतस्तयोर्लीनं निरंतरम् । निगडेनेव[2] रागेण निबिडेन नियंत्रितम् ॥ ५१३ ॥
रममाणस्तया सार्द्धमछिन्नप्रेमसौरभः । गमयामास भूयासं कालमेकां कलामिव ॥ ५१४ ॥
दलं वृक्षादिव दिवस्ततोच्योष्ट स्वयंप्रभा । आयुःकर्मणि हि क्षीणे नेन्द्रोऽपि स्थातुमीश्वरः ॥ ५१५ ॥
आक्रांतः पर्वतेनेव कुलिशेनेव ताडितः । प्रियाच्यवनदुःखेन ललितांगोऽथ मूर्छितः ॥ ५१६ ॥
लब्धसंज्ञः क्षणेनाथ विललाप मुहुर्मुहुः । विमानं श्रीप्रभमपि प्रतिशब्दैर्विलापयन् ॥ ५१७ ॥
प्राप नोपवने प्रीतिं न वाप्यामपि निर्ववौ[3] । क्रीडाशैलेऽपि न स्वस्थान्नानंदन्नंदनेऽपि सः ॥ ५१८ ॥
हा प्रिये हा प्रिये क्वासि क्वासीति विलपन्नसौ । स्वयंप्रभामयं विश्वं पश्यन् बभ्राम सर्वतः ॥ ५१९ ॥
इतश्च स्वामिमरणोत्पन्नवैराग्यवासनः । स्वयंबुद्धोप्यात्तदीक्षः श्रीसिद्धाचार्यसंनिधौ ॥ ५२० ॥
सुचिरं निरतीचारं[4] पालयित्वा व्रतं सुधीः । ऐशाने दृढधर्माख्य इंद्रसामानिकोऽभवत् ॥ ५२१ ॥

संदानितकम् ॥

स पूर्वभवसंबंधाद् बंधुवत्प्रेमवंधुरः[5] । आश्वासयितुमित्यूचे ललितांगमुदारधीः ॥ ५२२ ॥
किं मुह्यसि महासत्व महिलामात्रहेतवे । धीराः प्राणावसानेऽपि नहि यांतीदृशीं दशाम् ॥ ५२३ ॥
ललितांगोप्युवाचेति बंधो किमिदमुच्यते । प्राणांतः सुसहः कांताविरहस्तु सुदुःसहः ॥ ५२४ ॥

---

१ एकालवालमध्यस्थौ एकालवालान्तरस्थौ । २ निगडे न शृङ्खलया । ३ ननिर्ववौ न शान्तिं जगाम । ४ निरतीचार अतीचारा व्रतदोपास्तै रहित । ५ प्रेमवन्धुरः प्रेमोन्नतः ।

एकैव ननु संसारे सारं सारंगलोचना। या विना नूनमीदृश्योप्यसाराः सर्वसंपदः ॥ ५२५ ॥
तद्दुःखदुःखितः सोपीशानसामानिकः सुरः। दत्वोपयोगमवधिज्ञानाज्ज्ञात्वाब्रवीदिति ॥ ५२६ ॥
मा विषीद महाभाग भव स्वस्थोऽधुना ननु। मया मृगयमाणेन प्राप्तास्ति भवतः प्रिया ॥ ५२७ ॥
पृथिव्यां धातकीखंडे प्राग्विदेहेषु विद्यते। नंदिग्रामे गृहपतिर्नागिलो नाम दुर्गतः[1] ॥ ५२८ ॥
पूरणायोदरस्यापि भ्रमन् प्रेत इवान्वहम्। क्षुधितस्तृषितः शेते चोत्तिष्ठति च तादृशः ॥ ५२९ ॥
दारिद्र्यस्य बुभुक्षेव तस्यास्ति सहचारिणी। नागश्रीरित्यभिधया मंदभाग्यशिरोमणिः ॥ ५३० ॥
उपर्युपरि कन्यां षट् कन्यास्तत्रास्य जज्ञिरे। पामनस्येव[2] पिटिका[3] अधोऽधः पिटिकां तनौ ॥ ५३१ ॥
प्रकृत्या बहुभक्षिण्यः कुरूपा विश्वगर्हिताः। बभूवुस्तास्तयोः पुत्र्यो ग्रामसूकरयोरिव ॥ ५३२ ॥
आपन्नसत्वा[4] पत्न्यासीत् पुनरप्यस्य कालतः। प्रायेण हि दरिद्राणां शीघ्रगर्भभृतः स्त्रियः ॥ ५३३ ॥
सोऽथैतांचिंतयामास कस्येदं कर्मणः फलम्। यदहं मर्त्यलोकेऽपि प्राप्नोमि नरकव्यथाम् ॥ ५३४ ॥
अमुना जन्मसिद्धेन दुश्चिकित्स्येन भूयसा। उपदेहिकयेव[5] क्षुद्दारिद्र्येणाऽस्मि विद्रुतः ॥ ५३५ ॥
इतः साक्षादलक्ष्मीभिरिव निर्लक्षमूर्तिभिः। कन्यकाभिः पूर्वजन्मवैरिणीभिरिवार्दितः ॥ ५३६ ॥
अधुना यदि भूयोऽपि दुहिता प्रसविष्यते। तदा देशांतरं यास्याम्युज्झित्वैव कुटुंबकम् ॥ ५३७ ॥
एवं चिंतां प्रपन्नस्य सुषुवे तस्य गेहिनी। कर्णसूचीप्रवेशाभं सुताजन्म च सोऽश्रृणोत् ॥ ५३८ ॥
ययावूर्ध्वमुखः सोऽथ कुटुंबं प्रोज्झ्य नागिलः। पर्यस्य भारं सहसा बलीवर्द इवाधमः ॥ ५३९ ॥

१ दुर्गतो दुरवस्थः। २ पामनस्य पामायुक्तस्य। ३ पिठिका स्फोटः। ४ सगर्भा। ५ उपदेहिकया उधै इति प्रसिद्धया।

तस्याः प्रसवजे दुःखे पतिप्रवसनव्यथा । समजायत तत्कालं क्षारक्षेप इव क्षते ॥ ५४० ॥
नामापि तस्या नागश्रीर्नाकार्षीदतिदुःखिता । निर्नामिकेति नाम्नासौ ततो लोकैरुदीरिता ॥ ५४१ ॥
सापालयन्न तां सम्यगवार्द्धिष्ट तथापि सा । जंतोर्वज्राहतस्यापि मृत्युर्नात्रुटितायुषः ॥ ५४२ ॥
अत्यंतदुर्भगा मातुरप्युद्वेगविधायिनी । सा कालं गमयत्यन्यगृहे दुष्कर्म कुर्वती ॥ ५४३ ॥
एकस्मिन्नुत्सवेन्येद्युराढ्यबालकपाणिषु । ईक्षित्वा मोदकान् सापि ययाचे मातरं निजाम् ॥ ५४४ ॥
दंतैर्दंतान् घर्षयंती तामम्बापीदमब्रवीत् । याचसे मोदकान्युक्तं मोदकादी पितापि ते ॥ ५४५ ॥
यदि मोदकलिप्सुस्त्वं रज्जुमादाय गच्छ तत् । शैलमंबरतिलकं दारुभारकृते हले ॥ ५४६ ॥
करीषाग्निसोदरया दह्यमाना तया गिरा । रुदती रज्जुमादाय तं पर्वतमियाय सा ॥ ५४७ ॥
अद्रेस्तस्य शिरस्येकरात्रिकप्रतिमाजुषः । केवलज्ञानमुत्पेदे युगंधरमुनेस्तदा ॥ ५४८ ॥
तस्याथ सन्निहिताभिर्देवताभिः प्रचक्रमे । तत्कालं केवलज्ञानमहिमाख्यो महोत्सवः ॥ ५४९ ॥
पर्वतासन्ननगरग्रामवासी ततो जनः । अहंपूर्विकया तत्र तं वंदितुमुपाययौ ॥ ५५० ॥
तत्र यांतं जनं दृष्ट्वा नानाभरणभूषितम् । तस्थौ निर्नामिका चित्रलिखितेवातिविस्मिता ॥ ५५१ ॥
सा परंपरया ज्ञात्वा लोकागमनकारणम् । दारुभारं दुःखभारमिवोत्सृज्याचलत्ततः ॥ ५५२ ॥
जनेन सह तेनाथ सापि निर्नामिका गिरिम् । तमारुरोह तीर्थानि सर्वसाधारणानि यत् ॥ ५५३ ॥
कल्पपादपवत्पादौ मन्यमाना महामुनेः । सा सानंदमवंदिष्ट मतिर्गत्यनुसारिणी ॥ ५५४ ॥

१ आढ्यबालकपाणिषु धनिबालककरेषु । २ मोदकादी मोदकभक्षकः ।

लोकमाह्लादयन्नब्द इव गंभीरया गिरा । मुनिर्विश्वजनीनो[1]ऽथ विदधे धर्मदेशनाम् ॥ ५५५ ॥
आमसूत्रव्यूतखट्वाधिरोहणसहोदरम्[2] । भवभूमौ निपाताय नृणां विषयसेवनम् ॥ ५५६ ॥
एकग्रामकृतावाससुप्तपांथजनोपमः । पुत्रमित्रकलत्रादिसंगमः सर्वदेहिनाम् ॥ ५५७ ॥
लक्षेषु चतुरशीतौ योनिषु भ्रमतामिह । अनंतो दुःखसंभारः स्वकर्मपरिणामजः ॥ ५५८ ॥
अथ निर्नामिकाऽवोचद्भगवंतं कृतांजलिः । तुल्यो राज्ञि च रंके च यत्त्वं विज्ञप्यसे यतः ॥ ५५९ ॥
संसारो दुःखसदनं भगवद्भिः प्रकीर्त्तितः । अस्ति किं कश्चिदप्यत्र मत्तोप्यधिकदुःखितः ॥ ५६० ॥
भगवानप्युवाचैवं दुःखं दुःखितमानिनि । भवत्याः कीदृशं भद्रे दुःखितानपरान् शृणु ॥ ५६१ ॥
स्वकर्मपरिणामेनोत्पद्यंते नरकावनौ । भैदिकाः[3] छैदिकाः[4] शैर्पच्छेद्याश्चापि शरीरिणः ॥ ५६२ ॥
तिलपीलं निपीड्यंते यंत्रैस्तत्र हि केचन । दारुदारं विदार्यंते क्रकचैः केऽपि दारुणैः ॥ ५६३ ॥
शूलतूलिकशय्यासु शाय्यंते केऽपि संततम् । असुरैर्वस्त्रवत्केचिदास्फाल्यंते शिलातले ॥ ५६४ ॥
कुट्यंते केप्ययसपात्राणीव[5] लोहघनैर्घनैः । खंड्यंते शाकपर्णिका[6] इव केचन खंडशः ॥ ५६५ ॥
भूयोऽपि मिलितांगास्ते भूयो भूयस्तथैवहि । तद्दुःखमनुभाव्यंते क्रंदंतः करुणस्वरम् ॥ ५६६ ॥
पिपासिताश्च पाय्यंते तप्तत्रपुरसं[7] मुहुः । छायार्थिनो निषाद्यंते चासिपत्रतरोस्तले[8] ॥ ५६७ ॥
मुहूर्त्तमपि न स्थातुं लभंते वेदनां विना । नरके नारकाः कर्म स्मार्यमाणाः पुराकृतम् ॥ ५६८ ॥

---

१ विश्वजनीनः विश्वहितकर्त्ता । २ आमसूत्रैरपक्वसूत्रैर्व्यूता या खट्वा तस्यामधिरोहणसदृश । ३ भैदिका भेदनीयाः । ४ छैदिकाः छेदनीयाः । ५ अयसपात्राणि लोहपात्राणि । ६ शाकपर्णिकाः शाकावयवाः । ७ तप्तं यत् त्रपु तस्य रसं । ८ असिपत्रतरोर्वृक्षविशेषस्य ।

अस्मिन्नसारे संसारे निसर्गेणातिदारुणे । अवधिर्न हि दुःखानां यादसामिव[1] वारिधौ ॥ ५८४ ॥
संसारे दुःखनिलये जैनो धर्मः प्रतिक्रिया[2] । मंत्राक्षरमिव स्थाने भूतप्रेतादिसंकुले ॥ ५८५ ॥
जातु हिंसा न कर्त्तव्या हिंसया हि शरीरिणः । पोता[3] इवातिभारेण मज्जंति नरकार्णवे ॥ ५८६ ॥
असत्यं सर्वथा त्याज्यं असत्यवचनेन यत् । चिरं भ्रमति संसारे जंतुस्तृण्य[4]येव वात्यया ॥ ५८७ ॥
अदत्तं नाददीतार्थमदत्तादानतो यतः । कपिकछूफलस्पर्शादिव जातु सुखं नहि ॥ ५८८ ॥
अब्रह्म परिहर्त्तव्यमब्रह्मचरणेन हि । धृत्वा गले रंक इव नीयते नरके जनः ॥ ५८९ ॥
परिग्रहो न कर्त्तव्यः परिग्रहवशेन यत् । दुःखपंके जनो मज्जत्यतिभारेण गौरिव ॥ ५९० ॥
पंचाप्यमूनि हिंसादीन्युत्सृजेद्देशतोऽपि यः । उत्तरोत्तरकल्याणसंपदां सोऽपि भाजनम् ॥ ५९१ ॥
अथ सा सादयामास संवेगमतिशायिनम् । अयोगोले[5] इवाभेद्यः कर्मग्रंथिरभिद्यत ॥ ५९२ ॥
महामुनेः पुरः साथ सम्यक् सम्यक्त्वमाददे । प्रतिपेदे जिनोपज्ञं गृहिधर्मं च भावतः ॥ ५९३ ॥
अहिंसादीनि पंचापि तदैवाणुव्रतानि सा । परलोकाध्वपाथेयभूतानि प्रत्यपद्यत ॥ ५९४ ॥
मुनिनाथं प्रणम्याथ गृहीत्वा दारुभारकम् । जगाम कृतकृत्येव मुदिता सा स्वमालयम् ॥ ५९५ ॥
ततः प्रभृति सा तेपे तपो नानाविधं सुधीः । स्वनामेवाविस्मरंती युगंधरमुनेर्गिरं ॥ ५९६ ॥
न हि कश्चिदुपायंस्त दुर्भगां यौवनेऽपि ताम् । कटुतुंब्याः पक्वमपि फलमश्नाति कोऽथवा ॥ ५९७ ॥
ततो विशिष्टसंवेगात्तत्राद्रावेयुषः पुनः । युगंधरमुनेरग्रे सास्त्यात्तानशनाऽधुना ॥ ५९८ ॥

---

१ जलजन्तूना । २ प्रतिक्रिया प्रतीकारः । ३ पोता नावः । ४ तृण्या तृणसमूहः । ५ अयोगोलो लोहगोलः ।

ततः स्वयंप्रभावोचदपराद्धं न किं मया । वैमनस्कतया देव यदेवमुपलक्ष्यसे ॥ ६१४ ॥
ललितांगोप्युवाचैवं नापराद्धं प्रिये त्वया । अपराद्धं मया सुभ्रु यदल्पं प्राकृतं तपः ॥ ६१५॥
भोगेषु जागरूकोहं धर्मे सुप्त इवानिशम् । पूर्वजन्मन्यभूवं हि विद्याधरनरेश्वरः ॥ ६१६ ॥
मद्भाग्यप्रेरितेनेव स्वयंबुद्धेन मंत्रिणा । धर्मं प्रबोधितो जैनमायुःशेषेहमाददे ॥ ६१७ ॥
इयत्कालं च तद्धर्मप्रभावाच्छ्रीप्रभे प्रभुः । बभूवाहमतश्चयोष्ये नालभ्यं लभ्यते क्वचित् ॥ ६१८ ॥
एवमाभाषमाणस्य तस्यादिष्टो बिडौजसा । दृढधर्माभिधो देवो जगादैवमुपेत्य तम् ॥ ६१९ ॥
जिनेंद्रप्रतिमापूजां कर्तुं नंदीश्वरादिषु । यास्यत्यैशानकल्पेंद्रस्त्वमप्येहि तदाज्ञया ॥ ६२० ॥
अहोभाग्यवशात्कालोचितं मे स्वामिशासनम् । इति प्रमुदितोऽचालील्ललितांगः सवल्लभः ॥ ६२१ ॥
गत्वा नंदीश्वरे सोर्हत्प्रतिमाः शास्वतीस्ततः । आनर्च्च विस्मृतासन्नच्यवनः परया मुदा ॥ ६२२ ॥
ततोप्यन्येषु तीर्थेषु गच्छन्स्वच्छेन चेतसा । सोऽगादभावं क्षीणायुः क्षीणतैलप्रदीपवत् ॥ ६२३ ॥
जंबूद्वीपे ततः पूर्वविदेहेषूपसागरम् । महानद्याश्च सीताभिधानाया उत्तरे तटे ॥ ६२४ ॥
विजये पुष्कलावत्यां लोहार्गलमहापुरे । राज्ञः सुवर्णजंघस्य लक्ष्म्यां पत्न्यां सुतोऽभवत् ॥ ६२५ ॥
अथ कंदलितानंदावमुष्मिन् दिवसे शुभे । वज्रजंघ इति प्रीतौ पितरौ नाम चक्रतुः ॥ ६२६ ॥
स्वयंप्रभाऽपि दुःखार्त्ता कालेन कियताप्यथ । धर्मकर्मणि संलीना व्यच्योष्ट ललितांगवत् ॥ ६२७ ॥
नगर्यां पुंडरीकिण्यां विजयेत्रैव चक्रिणः । वज्रसेनस्य भार्यायां गुणवत्यां सुताऽभवत् ॥ ६२८ ॥

१ बिडौजसा इन्द्रेण ।

सर्वलोकातिशायिन्या श्रियाऽसौ संयुता ततः । श्रीमतीत्यभिधानेन पितृभ्यामभ्यधीयत ॥ ६२९ ॥
लतेवोद्यानपालीभिर्धात्रीभिर्लालिता सती । मृद्वंगी विलसत्पाणिपल्लवा ववृधे क्रमात् ॥ ६३० ॥
स्निग्धया पल्लवयंतीमिव कांत्या नभस्तलम् । तां यौवनमलंचक्रे रत्नं स्वर्णोर्मिकामिव ॥ ६३१ ॥
अन्येद्युः सर्वतोभद्रं नाम प्रासादमुच्चकैः । शैलं संध्याभ्रलेखेव क्रीडयाध्यारुरोह सा ॥ ६३२ ॥
ततो मनोरमोद्याने सुस्थितस्य महामुनेः । उत्पन्ने केवलज्ञाने ददर्शागच्छतः सुरान् ॥ ६३३ ॥
दृष्टपूर्वं मया क्वेदमित्यूहापोहकारिणी । जन्मांतराणि पूर्वाणि निशास्वप्नमिवास्मरत् ॥ ६३४ ॥
हृदये प्राग्भवज्ञानभारं वोढुमिवाक्षमा । क्ष्मातले क्षणादेव मूर्छिता निपपात सा ॥ ६३५ ॥
चंदनाद्युपचारेण सखीभिः कल्पितेन सा । लब्धसंज्ञा समुत्तस्थौ चित्ते चैवमचिंतयत् ॥ ६३६ ॥
पूर्वजन्मपतिर्मे स ललितांगो दिवश्च्युतः । क्व संप्रत्यवतीर्णोऽस्तीत्यज्ञानं हा दुनोति मां ॥ ६३७ ॥
तस्मिन् हृदयसंक्रांते नान्यो मे हृदयेश्वरः । कर्पूरभांडे कोनाम लवणं विनिवेशयेत् ॥ ६३८ ॥
स च प्राणाधिनाथो मे न चेद्वचनगोचरः । आलप्यालं तदन्येनेत्याददे मौनमेव सा ॥ ६३९ ॥
आधिदैविकदोषाभिशंकया तत्सखीजनैः । अकारि मंत्रतंत्रादिरुपचारो यथोचितम् ॥ ६४० ॥
सा मुमोच न मूकत्वमुपचारशतैरपि । व्याधेरन्यस्य न ह्यन्यदौषधं जातु शांतिकृत् ॥ ६४१ ॥
प्रयोजने परिजनं स्वं नियोजयति स्म सा । अक्षराणि लिखित्वा भ्रूहस्तादेरथ संज्ञया ॥ ६४२ ॥
अन्येद्युः श्रीमती क्रीडोद्याने यातवती सती । एकांते समयं प्राप्य धात्र्योचे पंडिताख्यया ॥ ६४३ ॥

१ सङ्कल्पविकल्पादिकारिणी ।

मम प्राणा इवासि त्व मातवास्मि तवाप्यहम् । [illegible] ॥ ६४४ ॥
मौनमालंबसे पुत्रि हेतुना केन शंस तम् । तद्दुःखसंविभागं मे दत्वा दुःखं लघूकुरु ॥ ६४५ ॥
ज्ञात्वा दुःखं यतिष्येऽहं तत्प्रतीकारकर्मणे । न ह्यज्ञातस्य रोगस्य चिकित्सा जातु युज्यते ॥ ६४६ ॥
पंडितायाः स्ववृत्तांतं सापि प्राग्जन्मसंभवम् । यथावदब्रवीत्प्रायश्चित्तार्थी सद्गुरोरिव ॥ ६४७ ॥
पटे वृत्तांतमालेख्य श्रीमत्यास्तं च पंडिता । उपायपंडिता मंक्षु[1] बहिर्दर्शयितुं ययौ ॥ ६४८ ॥
चक्रिणो वज्रसेनस्य वर्षग्रंथिरभूत्तदा । प्रस्तावादाययुस्तत्र भूयांसो वसुधाधवाः ॥ ६४९ ॥
पंडिता राजमार्गेऽथ तमालेख्य पटं स्फुटम् । विस्तार्य तस्थौ श्रीमत्या मनोरथमिवालघुम् ॥ ६५० ॥
तत्रागमविदः केऽपि स्वर्गनंदीश्वरादिकम् । आगमार्थाविसंवादि लिखितं परितुष्टुवुः ॥ ६५१ ॥
इतरे तु महाश्रद्धा धूनयंतः शिरोधराम् । प्रत्येकं वर्णयामास बिंबानि श्रीमदर्हताम् ॥ ६५२ ॥
कुशिताक्षमभीक्ष्णं केऽपीक्षमाणाः प्रतिक्षणम् । रेखाशुद्धिं प्रशशंसुः कलाकौशलशालिनः ॥ ६५३ ॥
इतरे त्वसितश्वेतपीतनीलारुणादिकान् । संध्याभ्राभीकृतपटान्वर्णकानित्यवर्णयन् ॥ ६५४ ॥
अत्रांतरे च तनयो दुर्दर्शनमहीपतेः । यथार्थनामा दुर्दांत इति तत्र समाययौ ॥ ६५५ ॥
स क्षणं तं पटं प्रेक्ष्य प्रेक्षावान् मूर्छया क्षितौ । अलीकयाऽपतदथ लब्धसंज्ञ इवोत्थितः ॥ ६५६ ॥
मूर्छायाः कारणं पृष्ट उत्थितश्च जनेन सः । कथयामास वृत्तांतं कृत्वा कपटनाटकम् ॥ ६५७ ॥
मम प्राग्जन्मचरितं पटे केनाप्यलेख्यत । जातिस्मरणमुत्पेदे हंत तद्दर्शनादिह ॥ ६५८ ॥

---

१ मङ्क्षु शीघ्रं ।

ललितांगोऽस्म्यहं देवो मम देवी स्वयंप्रभा । इत्यादि संवदत्येव यदत्र लिखितं पटे ॥ ६५९ ॥
पप्रच्छ पंडिता चाथ यद्येवं भद्र तद्वद । संनिवेशः पटे कोऽयमंगुल्या दर्शय स्वयम् ॥ ६६० ॥
स ऊचे मेरुरेषोऽद्रिः पूरियं पुंडरीकिणी । पुनः पृष्टो मुनेर्नामाब्रवीन्नामास्य विस्मृतम् ॥ ६६१ ॥
भूयोऽपि पृष्टः को नाम नृपोऽयं मंत्रिभिर्वृतः । तपस्विनी च कान्वेषेत्याख्यदाख्यां न वेद्म्यहम् ॥ ६६२ ॥
मायावीति च संज्ञातः सोपहासं तयोदितः । पुत्रेदं संवदत्येव प्राग्जन्मचरितं तव ॥ ६६३ ॥
ललितांगोऽसि देव त्वं त्वत्पत्नी तु स्वयंप्रभा । नंदिग्रामे कर्मदोषात् पंगूभूतास्ति संप्रति ॥ ६६४ ॥
संजातजातिस्मरणादालिख्य चरितं निजम् । पटो मे धातकीखंडगताया अर्पितस्तया ॥ ६६५ ॥
तस्याः पंग्वाः करुणया त्वं मयासि गवेषितः । तदेहि धातकीखंडे त्वां नयामि तदंतिके ॥ ६६६ ॥
वराकी त्वद्वियोगे सा दुःखं जीवति पुत्रक । समाश्वासयतां सद्यः प्राग्जन्मप्राणवल्लभां ॥ ६६७ ॥
एवमुक्त्वा पंडितायां तूष्णीकायां[1] स मायिकः । इत्थं वयस्यैः स्वैरेव सोपहासमभाष्यत ॥ ६६८ ॥
कलत्ररत्नाधिगमादहो पुण्योदयस्तव । अभिगम्या च पोष्या च सा पंगूः सर्वथा तव ॥ ६६९ ॥
ततो वैलक्ष्यदीनास्यः स दुर्दांतः कुमारकः । विक्रीयमाणेभ्य[2] इवाऽवशिष्टः क्वचिदप्यगात् ॥ ६७० ॥
लोहार्गलपुराद्वज्रजंघोपि हि तदाययौ । चरित्रं चित्रलिखितं तद्ददर्श मुमूर्छ च ॥ ६७१ ॥
व्यजनैर्वीजितो नीरैरुक्षितोऽथ स उत्थितः । जातजातिस्मृतिरभूत्सद्यः स्वर्गादिवागतः ॥ ६७२ ॥
पटलेख्यमिदं दृष्ट्वा किं कुमारोऽसि मूर्छितः । इति पंडितया पृष्टो वज्रजंघोऽब्रवीदिदम् ॥ ६७३ ॥

१ तूष्णीकाया मौनस्थिताया । २ विक्रयमाणेभ्यो वस्तुभ्योऽवाशिष्टवस्तुवत् वैलक्ष्ययान् इत्यर्थः ।

चरित्रं सकलत्रस्य मम प्राग्भवसंभवम् । इदं हि लिखितं भद्रे तद्दृष्ट्वा मूर्छितोऽस्म्यहं ॥ ६७४ ॥
श्रीमानीशानकल्पोऽयं विमानं श्रीप्रभं त्विदम् । एषोहं ललितांगाख्यः प्रियासौ मे स्वयंप्रभा ॥ ६७५ ॥
इतश्च धातकीखंडे नंदीग्रामेऽवतीर्य च । गृहे महादरिद्रस्य जाता निर्नामिकेत्यसौ ॥ ६७६ ॥
शैलमंबरतिलकमध्यारूढास्ति सा त्विह । गृहीतानशनाऽमुष्य युगंधरमुनेः पुरः ॥ ६७७ ॥
आत्मसंदर्शनायास्या आगतोहमिहास्मि च । मयि रक्ता मृता जज्ञे पुनरेव स्वयंप्रभा ॥ ६७८ ॥
इह नंदीश्वरे जैनबिंबार्चनपरोऽस्म्यहम् । गच्छन्नितोऽन्यतीर्थेषु च्यवमानोहमस्म्ययम् ॥ ६७९ ॥
इह च च्यवमानेयं मन्ये सैव मम प्रिया । इह चैकाकिनी दीना वराकीयं स्वयंप्रभा ॥ ६८० ॥
सास्तीह मन्ये लिखितं जातिस्मृत्या तया त्वदः । अन्यानुभूतं नह्यन्यो जनो जानाति जातुचित् ॥६८१॥
आमेति पंडिताप्युक्त्वा श्रीमत्याः पार्श्वमेत्य च । तत्सर्वमाख्यत् हृदयविशल्यकरणौषधम् ॥ ६८२ ॥
श्रीमती दयितोदंतगिरा[1] रोमांचिताऽभवत् । अभ्रोदध्वनिना रत्नांकुरितेव विदूरभूः[2] ॥ ६८३ ॥
पितुर्व्यज्ञपयत्तच्च श्रीमती पंडितामुखात् । अस्वातंत्र्यं कुलस्त्रीणां धर्मो नैसर्गिको यतः ॥ ६८४ ॥
तद्गिरा मुदितः सद्यः स्तनितेनेव बर्हिणः । वज्रसेननृपो वज्रजंघमाजूहवत्ततः ॥ ६८५ ॥
कुमारमूचे भूपालो मत्पुत्री श्रीमतीत्यसौ । भवत्विदानीं भवतो गृहिणी पूर्वजन्मवत् ॥ ६८६ ॥
तथेति प्रतिपन्ने च कुमारेणोदवाहयत् । श्रीमतीं भूपतिः प्रीतो हरिणेवोदधिः[3] श्रियम् ॥ ६८७ ॥
ज्योत्स्नाचंद्राविव युतौ तौ सितक्षौमवाससौ । लोहार्गलपुरं राज्ञाऽनुज्ञातौ जग्मतुस्ततः ॥ ६८८ ॥

---

१ प्रियवृत्तान्तगिरा । २ विदूरभूः विदूराख्यपर्वतभूः । ३ हरिणा विष्णुना ।

सोदर्यौ[1] तौ मुनी ज्ञात्वा विशेषमुदितो नृपः । उवास तत्रैव वने वनमालीव वारिधौ ॥ ७०४ ॥
कुर्वाणौ देशनां तत्र तौ वृतौ देवपर्षदा । भक्तिभारादिवानम्रः सत्कार्यः सोऽभ्यवंदत ॥ ७०५ ॥
देशनांते च पानान्नवस्त्रोपकरणादिभिः । तौ प्रत्यलाभयद्राजा चिंतयामास चेतसा ॥ ७०६ ॥
धन्यावेतौ निःकषायौ निर्ममौ निष्परिग्रहौ । सौंदर्यभावे सामान्येऽप्यहो नास्म्यहमीदृशः ॥ ७०७ ॥
आत्तव्रतस्य तातस्य सत्पथेनानुगामिनौ । एतावेवौरसौ पुत्रौ पुत्रः क्रीत इवास्म्यहम् ॥ ७०८ ॥
एवं स्थितेऽपि मे किंचिन्नायुक्तं प्रव्रजामि चेत् । प्रव्रज्या दीपिकेवात्तमात्रापि हि तमश्छिदे ॥ ७०९ ॥
तदिदानीं पुरीं गत्वा दत्वा राज्यं च सूनवे । हंसस्येव गतिं हंसः श्रयिष्येऽहं पितुर्गतिम् ॥ ७१० ॥
संवादिन्या[2] व्रतादानेऽनुस्यूतमनसेव सः । सहितः श्रीमतीदेव्या प्राप लोहार्गलं पुरम् ॥ ७११ ॥
राज्यलुब्धस्तदा त्वस्य पुत्रः प्रकृतिमंगलम् । धनैरभेदयत्तैर्हि किं नाभेद्यं जलैरिव ॥ ७१२ ॥
प्रातः स्वयं व्रतादानं राज्यदानं सुतस्य च । चिंतयंतौ सुषुपतुर्निशायां श्रीमतीनृपौ ॥ ७१३ ॥
विषधूपं व्यधात्पुत्रस्तयोस्तु सुखसुप्तयोः । कस्तं निषेद्धुमीशः स्याद्गृहादग्निमिवोत्थितम् ॥ ७१४ ॥
तद्धूपधूमैरधिकैर्जीवाकर्षांकुटैरिव[3] । घ्राणप्रविष्टैस्तैः सद्यो दंपती मृत्युमापतुः ॥ ७१५ ॥
अथोत्तरकुरुष्वेतावुत्पन्नौ युग्मरूपिणौ । एकचिंताविपन्नानां गतिरेका हि जायते ॥ ७१६ ॥
क्षेत्रानुरूपमायुश्च पूरयित्वा तथा युतौ । तौ विपद्योदपद्येतां सौधर्मे स्नेहलौ सुरौ ॥ ७१७ ॥
वज्रजंघस्य जीवोऽथ भोगान् भुक्त्वा निरंतरम् । आयुःक्षयात्ततोऽच्योष्ट हिमग्रंथिरिवातपात् ॥ ७१८ ॥

१ सोदर्यौ सहोदरौ । २ अनुसारिण्या । ३ जीवाकर्षांकुटैः जीवाकर्षणे अङ्कुटैस्तदाख्याकर्षकशस्त्रविशेषैः ।

सरिदोघ इव ग्रीष्मातपेन तपसा कृशः । कृमिकुष्ठाभिभूतश्च सोऽकालापथ्यभोजनात् ॥ ७३४ ॥
सर्वांगीणकृमिकुष्ठाधिष्ठितोऽपि स भेषजम् । ययाचे न क्वचित्कायानपेक्षा हि मुमुक्षवः ॥ ७३५ ॥
गोमूत्रिकाविधानेन गेहाद्गेहं परिभ्रमन् । षष्ठस्य पारणे दृष्टः स तैर्निजगृहांगणे ॥ ७३६ ॥
महीधरकुमारेण स किंचित्परिहासिना । जीवानंदो निजगदे जगदेकभिषक् ततः ॥ ७३७ ॥
अस्ति व्याधेः परिज्ञानं ज्ञानमस्त्यौषधस्य च । चिकित्साकौशलं चास्ति नास्ति वः केवलं कृपा ॥ ७३८ ॥
सदा संस्तुतमप्यार्त्तमपि प्रार्थकमप्यहो । वेश्या इव विना द्रव्यं यूयं नाक्ष्णापि पश्यथ ॥ ७३९ ॥
तथाप्येकांततो नार्थलुब्धैर्भाव्यं विवेकिभिः । धर्ममप्युररीकृत्य कृत्यं क्वापि चिकित्सितम् ॥ ७४० ॥
चिकित्सायां निदाने च धिक् ते सर्वपरिश्रमम् । आयातमीदृशं पात्रं सरोगं यदुपेक्षसे ॥ ७४१ ॥
जीवानंदोऽपि विज्ञानरत्नरत्नाकरोऽब्रवीत् । साधु साधु महाभाग त्वया विस्मापितोऽस्म्यहम् ॥ ७४२ ॥
ब्राह्मणज्ञातिरद्विष्टो वणिग्जातिरवंचकः । प्रियजातिरनीर्ष्यालुः शरीरी च निरामयः ॥ ७४३ ॥
विद्वान् धनी गुणयगर्वः स्त्रीजनश्चापचापलः । राजपुत्रः सुचरित्रः प्रायेण न हि दृश्यते ॥ ७४४ ॥
॥ संदानितकं ॥
चिकित्सनीय एवाहो महामुनिरयं मया । औषधानामसामग्री किं तु यात्यंतरायताम् ॥ ७४५ ॥
तत्रैकं लक्षपाकं मे तैलमस्तीह नास्ति तु । गोशीर्षचंदनं रत्नकंबलश्चानयंतु तत् ॥ ७४६ ॥
आनेष्यामो वयमिति प्रोच्य पंचापि तत्क्षणम् । ते ययुर्विपणिश्रेणीं स्वस्थानं सोऽप्यगान्मुनिः ॥ ७४७ ॥

१ सर्वाङ्गेषु । २ गोमूत्रधारावद्वक्रत्वेन । ३ सस्तुत परिचित । ४ अन्तरायता विघ्नत्व ।

रत्नकंबलगोशीर्षे मूल्यमादाय यच्छ नः । इत्युक्तास्तैर्वणिग्वृद्धास्ते ददानोऽब्रवीदिदम् ॥ १४८ ॥
दीनाराणां लक्षमेकं प्रत्येकं लक्षमेतयोः । गृह्णीत ब्रूत वस्तुभ्यां किमाभ्यां वः प्रयोजनम् ॥ १४९ ॥
तेप्यूचुर्मूल्यमादत्स्व दत्स्व गोशीर्षकंबले । एताभ्यां हि महासाधुचिकित्सा नः प्रयोजनम् ॥ १५० ॥
श्रुत्वा तद्वचनं श्रेष्ठी विस्मयोत्तानलोचनः । रोमाञ्चसूचितानंदश्चेतस्येवमचिन्तयत् ॥ १५१ ॥
क्वैषां यौवनमुन्मादप्रमोदमदनोन्मदम् । मतिर्विवेकवसतिर्वयोवृद्धोचिता क्व च ॥ १५२ ॥
जराजर्जरकायाणां मादृशां योग्यमीदृशं । कुर्वत्यमी यत्तदहोऽदम्यैर्भारोऽयमुह्यते ॥ १५३ ॥
चिंतयित्वेति सोऽवोचदिमौ गोशीर्षकंबलौ । गृह्येतामस्तु वो भद्रं भद्रा द्रव्येण वास्तु वः ॥ १५४ ॥
अनयोर्वस्तुनोर्मूल्यमादास्ये धर्ममक्षयम् । धर्मभागीकृतः साधु युष्माभिः सोदरैरिव ॥ १५५ ॥
श्रेष्ठिश्रेष्ठोऽर्पयित्वाथ तेषां गोशीर्षकंबलौ । भावितात्मा प्रवव्राज वव्राज च परं पदम् ॥ १५६ ॥
आदायौषधसामग्रीमग्रिमास्ते महात्मनाम् । जीवानंदेन सहिताः प्रययुर्येन तं मुनिम् ॥ १५७ ॥
न्यग्रोधपादपस्याधस्तत्पादमिव निश्चलम् । कायोत्सर्गेण तिष्ठंतं तं नत्वा ते बभाषिरे ॥ १५८ ॥
धर्मविघ्नं करिष्यामश्चिकित्साकर्मणाऽद्य वः । भगवन्ननुजानीहि पुण्येनानुगृहाण नः ॥ १५९ ॥
मुनिमेवमनुज्ञाप्य तेऽथ गोमृतकं नवम् । आनिन्युर्विचिकित्संति न हि जातु चिकित्सकाः ॥ १६० ॥
मुनेः प्रत्यंगमभ्यंगं तेन तैलेन ते व्यधुः । उद्यानमिव कुल्याम्भः शरीरांतस्तदानशे ॥ १६१ ॥
तैलेनाऽत्युष्णवीर्येण जज्ञे निःसंज्ञको मुनिः । योग्यमुग्रस्य हि व्याधेः शांत्यामत्युग्रमौषधम् ॥ १६२ ॥

---

१ न्यग्रोधपादपस्य वटवृक्षस्य । २ सरणिजल ।

आकुलास्तेन तैलेन कृमयस्तत्कलेवरात् । तस्थुर्बहिर्जलेनेव वामलूरात्[1]पिपीलिकाः ॥ ७६३ ॥
जीवानंदस्ततो रत्नकंबलेन समंततः । मुनिमाछादयामास शशीव ज्योत्स्नया नभः ॥ ७६४ ॥
कृमयोऽथ विलीयंते शीतत्वाद्रत्नकंबले । शैवले ग्रीष्ममध्याह्नतप्ताः शर्फरिका[2] इव ॥ ७६५ ॥
मंदमांदोलयन् वैद्यः कंबलं गोशवोपरि । कृमीनपातयदहो सर्वत्राद्रोहता सताम् ॥ ७६६ ॥
जंतुजीवातु[3]भिर्जीवानंदोऽमृतरसैरिव । मुनिमाश्वासयामास ततो गोशीर्षचंदनैः ॥ ७६७ ॥
कृमयस्त्वग्गता एव अमी निरसरन्निति । तैलाभ्यंगं मुनेर्भूयो जीवानंदोऽथ निर्ममे ॥ ७६८ ॥
तेनाभ्यंगेन भूयोऽपि भूयांसो मांसगा अपि । निरीयुः कृमयो वातेनोदानेन रसा इव ॥ ७६९ ॥
तथैवाछादने रत्नकंबले कृमयोऽलगन् । अलक्तकपुटे दध्नस्त्रिं[4]द्व्यहस्येव जंतवः ॥ ७७० ॥
तस्मिन् गोमृतके भूयस्तान् कृमीन् रत्नकंबलात् । तथैवापातयदहो भिषजो बुद्धिकौशलम् ॥ ७७१ ॥
गोशीर्षचंदनरसासारैराप्याययन्मुनिम् । जीवानंदोंऽभोद इव वृष्ट्या ग्रीष्मार्दितं द्विपः ॥ ७७२ ॥
भूयोऽभ्यंगेन निरयुः कृमयोऽस्थिगता अपि । न वज्रपंजरेप्यस्ति स्थानं रुष्टे बलीयसि ॥ ७७३ ॥
रत्नकंबललग्नांस्तान् पुनर्गोमृतके कृमीन् । स चिक्षेपाऽधमस्थानमधमानां हि युज्यते ॥ ७७४ ॥
गोशीर्षचंदनरसैर्विलिलेप मुनिं पुनः । भक्त्या परमया देवमिव सद्यो भिषग्वरः ॥ ७७५ ॥
संरोपणौषधैर्जातनवत्वक्कांतिमान् मुनिः । चकासामास निर्मृष्टकांचनप्रतिमेव सः ॥ ७७६ ॥
तैर्भक्तिदक्षैः क्षमितः स क्षमाक्षमणस्ततः । ययौ विहर्तुमन्यत्र नास्था क्वापि हि तादृशाम् ॥ ७७७ ॥

---

१ वल्मीकात् । २ शफरिकाः मत्स्याः । ३ जन्तुजीवनप्रदैः । ४ त्रिद्व्यहस्य द्वित्रिदिनपर्युषितस्य ।

ततोऽवशिष्टगोशीर्षचंदनं रत्नकंबलम् । तत्र विक्रीय जगृहुस्ते स्वर्णं बुद्धिशालिनः ॥ ७७८ ॥
तेन स्वर्णेन ते चैत्यं सुवर्णेन स्वकेन च । कारयामासुरुत्तुंगं मेरुशृंगमिवार्हतम् ॥ ७७९ ॥
जिनार्चामर्चयंतस्ते गुरूपासनतत्पराः । कर्मवत्क्षपयामासुः कियत्कालं महाशयाः ॥ ७८० ॥
ते षडप्येकदा जातसंवेगाः साधुसन्निधौ । धीमंतो जगृहुर्दीक्षां मर्त्यजन्मतरोः फलम् ॥ ७८१ ॥
ते विजहुः पुरि पुरो ग्रामे ग्रामाद्वने वनात् । तिष्ठंतो नियतं कालं राशौ राशेरिव ग्रहाः॥ ७८२ ॥
शाणैरिव तपोभिस्ते तूर्यषष्ठाष्टमादिभिः । चारित्ररत्नं विदधुर्निर्मलं निर्मलादपि ॥ ७८३ ॥
अपीडयंतो दातारं प्राणधारणकारणात् । पारणे जगृहुर्भिक्षां ते मधुव्रतवृत्तयः ॥ ७८४ ॥
अवलम्बितधैर्यास्ते क्षुत्पिपासातपादिकान् । परीषहान् सहंते स्म प्रहारान् सुभटा इव ॥ ७८५ ॥
सेनांगानीव चत्वारि मोहराजस्य सर्वतः । चतुरोऽपि कषायांस्ते जिग्युरस्त्रैः क्षमादिभिः॥ ७८६ ॥
कृत्वा संलेखनामादौ द्रव्यतो भावतश्च ते । भेजिरेऽनशनं कर्मशैलनिर्नाशनाऽशनिम् ॥ ७८७ ॥
समाधिभाजस्ते पंच परमेष्ठिनमस्क्रियाम् । स्मरंतस्तत्यजुर्देहं न हि मोहो महात्मनाम् ॥ ७८८ ॥
षडपि द्वादशे कल्पेऽच्युतनामनि तेऽभवन् । शक्रसामानिकास्तादृङ् न सामान्यफलं तपः ॥ ७८९ ॥
आयुस्ते पूरयित्वा द्वाविंशतिं सागरोपमान् । ततोऽच्यवंताऽच्यवनं न हि मोक्षं विना क्वचित् ॥७९०॥
जंबूद्वीपाभिधे द्वीपे विदेहेषु च पूर्वतः । विजये पुष्कलावत्यां महांभोनिधिसन्निधौ ॥ ७९१ ॥
नगर्यां पुंडरीकिण्यां वज्रसेनस्य भूपतेः । धारिण्यां जज्ञिरे राज्ञ्यां तेषु पंच क्रमात्सुताः॥ ७९२ ॥

तत्र वैद्यस्य जीवोऽभूद्वज्रनाभोऽभिधानतः । चतुर्दशमहास्वप्नसूचितः प्रथमः सुतः ॥ ७९३ ॥
राजपुत्रस्य जीवस्तु द्वितीयो बाहुसंज्ञया । मंत्रिपुत्रस्य जीवोऽपि सुबाहुरिति नामतः ॥ ७९४ ॥
नाम्ना पीठमहापीठौ श्रेष्ठिसार्थेशपुत्रयोः । जीवौ जीवः केशवस्य सुयशा राजपुत्रकः ॥ ७९५ ॥
सुयशाः शिश्रिये वज्रनाभं बाल्यात्प्रभृत्यपि । स्नेहः प्राग्भवसंबद्धो ह्यनुबध्नाति बंधुताम् ॥ ७९६ ॥
तेऽवर्द्धत क्रमाद्राजसूनवः सुयशाः स च । नरभावमिवापन्नाः षट्वर्षधरपर्वताः ॥ ७९७ ॥
वाहयंतो मुहुर्वाहान् वाह्याल्यां ते महौजसः । विभ्रांचक्रिरेऽनेकरूपरेवंतविभ्रमम् ॥ ७९८ ॥
कलाभ्यासे कलाचार्योऽभूत्तेषां साक्षिमात्रकः । प्रादुर्भवन्ति महतां स्वयमेव यतो गुणाः ॥ ७९९ ॥
शैलानपि शिलातोलं तेषां तोलयतां भुजैः । अपूर्यत बलक्रीडा न केनापि मनागपि ॥ ८०० ॥
अथ लोकांतिकैर्देवैरंतिकीभूय भूपतिम् । वज्रसेनो व्यज्ञपीदं स्वामिंस्तीर्थं प्रवर्त्तय ॥ ८०१ ॥
वज्रसेनस्ततो वज्रनाभं वज्रसमौजसम् । राज्ये निवेशयामास स्वमिवापरमूर्त्तितः ॥ ८०२ ॥
सांवत्सरिकदानेन प्रीणयामास मेदिनीम् । अंभोधर इवांभोभिर्वज्रसेननृपस्ततः ॥ ८०३ ॥
देवासुरनृदेवैश्च कृतनिःक्रमणोत्सवः । गत्वोद्यानमलंचक्रे स व्योमेव हिमद्युतिः ॥ ८०४ ॥
स्वयंबुद्धः स भगवांस्तत्र दीक्षामुपाददे । उदपद्यत च ज्ञानं मनःपर्यायसंज्ञकम् ॥ ८०५ ॥
आत्मारामः साम्यधनो निर्ममो निष्परिग्रहः । प्रावर्त्तत विहर्त्तुं क्ष्मां स नानाभिग्रहः प्रभुः ॥ ८०६ ॥
भ्रातृभ्यो वज्रनाभोऽपि प्रत्येकं विषयान् ददौ । लोकपालैरिवेन्द्रोऽभात् स च तैर्नित्यसेवकैः ॥ ८०७ ॥

१ रेवन्तः सूर्यपुत्रविशेषः ।

क्षत्ता[1]ऽभूत्तस्य सुयशा अरुणस्तरणेरिव । आत्मानुरूपः कर्त्तव्यः सारथिर्हि महारथैः ॥ ८०८ ॥
उत्पेदे वज्रसेनस्य घातिकर्ममलक्षयात् । उद्योतो दर्पणस्येव केवलज्ञानमुत्तमम् ॥ ८०९ ॥
तदा च वज्रनाभस्य प्रविवेश महीपतेः । चक्रमायुधशालायामधरीकृतभास्करम् ॥ ८१० ॥
त्रयोदश च रत्नानि तस्यासन्नपराण्यपि । संपद्भि पुष्यमानेनांभोमानेनेव पद्मिनी ॥ ८११ ॥
नवापि निधयस्तस्याभवन् सेवाविधायिनः । आकृष्टाः प्रबलैः पुण्यैर्गंधैरिव मधुव्रताः ॥ ८१२ ॥
सोऽशेषं साधयामास विजयं पुष्कलावतीम् । चक्रे च चक्रवर्त्तित्वाभिषेकोऽस्याखिलैर्नृपैः ॥ ८१३ ॥
भुंजानस्याप्यस्य भोगान् धर्मे धीरधिकाधिकम् । वयसो वर्द्धमानस्य स्पर्द्धयेव व्यवर्द्धत ॥ ८१४ ॥
क्रमादस्य प्रभवंत्या भववैराग्यसंपदा । वृंहिष्ठा धर्मधीरासीद्वल्लीवाबालवारिणा ॥ ८१५ ॥
एकदा विहरंस्तत्र वज्रसेनजिनेश्वरः । परमानंदजननः साक्षान्मोक्ष इवाययौ ॥ ८१६ ॥
स्वामी समवसरणे ततश्चैत्यतरोस्तले । कर्णामृतप्रपां धर्मदेशनामुपचक्रमे ॥ ८१७ ॥
सवंधुर्वज्रनाभोऽपि जगद्बंधोर्जिनप्रभोः । राजहंस इवाभ्यागादुपपादांबुजं मुदा ॥ ८१८ ॥
स त्रिः प्रदक्षिणीकृत्य प्रणम्य च जगत्पतिम् । अनुजन्मेव शक्रस्य पृष्ठतः समुपाविशत् ॥ ८१९ ॥
स बोधिमुक्ताजननीं भव्यमानसशुक्तिषु । देशनां स्वातिवृष्ट्याभां[2] शुश्राव श्रावकाग्रणीः ॥ ८२० ॥
गिरं भगवतः शृण्वन् मृगो गीतिमिवोन्मनाः । हर्षाद्विचिंतयामास स एवं भूमिवासवः ॥ ८२१ ॥
असावपारसंसारः सरस्वानिव[3] दुस्तरः । तस्यापि तारकस्तातो दिष्ट्याऽसौ विष्टपाधिपः ॥ ८२२ ॥

---

१ क्षत्ता सारथिः । २ स्वातिवृष्ट्याभा स्वातिनक्षत्रवृष्टितुल्या । ३ सरस्वान् समुद्रः ।

अंधकार इवात्यंतं मोहांधकरणो नृणाम् । तस्यायमभितो भेत्ता भगवान् भानुमानिव ॥ ८२३ ॥
चिरकालभवश्चायं महाव्याधिरिवोल्बणः । अचिकित्स्यः कर्मराशिस्तातस्तस्य चिकित्सकः ॥ ८२४ ॥
यद्वा किमन्यत् सर्वेषां दुःखानामेव नाशनः । सुखानामेकजननः करुणामृतसागरः ॥ ८२५ ॥
स्वामिन्येवंविधेऽप्यस्मिन्नहो मोहप्रमद्वरैः । अस्माभिरात्मनैवात्मा वंचितोऽसौ कियच्चिरम् ॥ ८२६ ॥
चक्रवर्त्ती ततो धर्मचक्रवर्त्तिनमागतम् । इति विज्ञपयामास भक्तिगद्गदया गिरा ॥ ८२७ ॥
अर्थप्रसाधनपरैर्नीतिशास्त्रैश्चिरं मम । मतिः कदर्थिता नाथ क्षेत्रभूः कुशिकैरिव ॥ ८२८ ॥
तथा विषयलोलेन नित्यं नेपथ्यकर्मभिः । अयमात्मा नटेनेव चिरं विनटितो मया ॥ ८२९ ॥
इदं हि मम साम्राज्यमर्थकामनिबंधनम् । चिंत्यते यस्तु धर्मोत्र स स्यात् पापानुबंधकः ॥ ८३० ॥
तातस्य पुत्रो भूत्वाऽपि भवांभोधौ भ्रमामि चेत् । तत्कः पुरुषकारः स्यादन्यसाधारणस्य मे ॥ ८३१ ॥
अपालयमिदं राज्यं युष्मद्दत्तमहं यथा । तथा संयमसाम्राज्यं पालयिष्यामि देहि मे ॥ ८३२ ॥
कृत्वा च पुत्रसाम्राज्यं निजान्वयनभोरविः । व्रतं भगवतः पार्श्वे प्रपेदे चक्रवर्त्त्यथ ॥ ८३३ ॥
बाह्वादयोऽपि जगृहुस्तत्सोदर्यास्तदा व्रतम् । पित्रा ज्येष्ठेन चोपात्तं तद्धि तेषां क्रमागतम् ॥ ८३४ ॥
सुयशाः सारथिः सोपि पादांते धर्मसारथेः । अनुस्वामि प्रवव्राज भृत्याः स्वाम्यनुगामिनः ॥ ८३५ ॥
श्रुतसागरपारीणो वज्रनाभोऽभवत् क्षणात् । प्रत्यक्षा द्वादशांगीव जंगमैकांगतां गता ॥ ८३६ ॥
एकादशांग्यां पारीणा जाता बाह्वादयोऽपि ते । क्षयोपशमवैचित्र्याच्चित्रा हि गुणसंपदः ॥ ८३७ ॥

१ कुशिकैर्दर्भैः ।

वपुर्महत्तरीकर्त्तुं शक्तिस्तेषां बभूव सा । यया सुमेरुशैलोपि जानुदघ्नो व्यधीयत ॥ ८५३ ॥
तेषां वपुर्लघीयस्त्वसामर्थ्यं तदजायत । समुल्ललंघे तद्येन मारुतस्यापि लाघवम् ॥ ८५४ ॥
वपुर्गरिमशक्तिश्च वज्रादप्यतिशायिनी । साभूत्तेषां न या सह्या शक्राद्यैस्त्रिदशैरपि ॥ ८५५ ॥
प्राप्तिशक्तिरभूत्तेषां भूस्थानां स्पर्शनं यया । अंगुल्यग्रेण मेर्वग्रग्रहादेर्वृक्षपत्रवत् ॥ ८५६ ॥
साऽभूत्प्राकाम्यशक्तिश्च भुवीवाप्सु यया गतिः । निमज्जनोन्मज्जने च पानीय इव भुव्यपि ॥ ८५७ ॥
आसीत्तेषां तदैश्वर्यं प्रभवंति स्म येन ते । चक्रभृत्त्रिदशाधीशऋद्धिमाधातुमात्मनः ॥ ८५८ ॥
तेषां वशित्वसामर्थ्यं तदपूर्वमजायत । भेजिरे वशितां येन स्वतंत्राः क्रूरजंतवः ॥ ८५९ ॥
तेषामप्रतिघातित्वशक्तिः साभूद्यया खलु । अद्रिमध्येऽपि निःसंगगमनं रंध्रमध्यवत् ॥ ८६० ॥
तदंतर्धानसामर्थ्यमभूत्तेषामनाहतम् । नभस्वतामिवादृश्यरूपता येन सर्वतः ॥ ८६१ ॥
प्रावीण्यं कामरूपित्वे[1] तत्तेषामुल्ललास च । अलं पूरयितुं लोकं नानारूपैर्यथा निजैः ॥ ८६२ ॥
तेषामाविरभूद्बीजबुद्धिता सातिशायिनी । एकार्थबीजतोऽनेकार्थबीजानां प्ररोहिणी ॥ ८६३ ॥
ते कोष्टबुद्धयोऽभूवन् कोष्टे[2]प्रक्षिप्तधान्यवत् । विना स्मरणमर्थानां प्राक् श्रुतानां यथास्थितेः ॥ ८६४ ॥
आद्यादंतान्मध्यमाद्वा श्रुतादेकपदादपि । सर्वार्थग्रंथबोधात्तेऽभूवन् पदानुसारिणः ॥ ८६५ ॥
एवं वस्तु समुद्धृत्यांतर्मुहूर्त्ताच्छ्रुतोदधेः । अवगाहनसामर्थ्यात्ते मनोबलिनोऽभवन् ॥ ८६६ ॥
अंतर्मुहूर्त्तमात्रेण मातृकामात्रलीलया । गुणयंतः श्रुतं सर्वमासन् वाग्बलिनश्च ते ॥ ८६७ ॥

---

१ कामरूपित्वे स्वेच्छारूपित्वे । २ कोष्ट कुशूलम् ।

प्रपद्यपाना: प्रतिमां चिरकालमपि स्थिरां । श्रमक्लमाभ्यां रहितास्ते कायबलिनोऽभवन् ॥ ८६८ ॥
अभूवन्नमृतक्षीरमध्वाज्याश्रविणश्च ते । पात्रस्थस्य कदन्नस्याप्यमृतादिरसागमात् ॥ ८६९ ॥
दुःखार्दितेष्वमृतादिपरिणामाङ्गिरां च ते । अमृतक्षीरमध्वाज्यश्रविणः साधु जज्ञिरे ॥ ८७० ॥
अन्नस्य पात्रपतितस्याल्पस्याप्यतिदानतः । अक्षयेणाक्षीणमहानसर्द्धयश्च तेऽभवन् ॥ ८७१ ॥
तीर्थकृत्पर्षदीवाल्पदेशेऽपि प्राणिनां सुखम् । असंख्यानां स्थितेरासंस्ते चाक्षीणमहालयाः ॥ ८७२ ॥
एकेनापींद्रियेणान्येंद्रियार्थस्योपलंभनात् । ते बभूवुश्च संभिन्नश्रोतोलब्धिमहर्द्धयः ॥ ८७३ ॥
जंघाचारणलब्धिश्च तेषामजनि सा यया । रुचकद्वीपमेकेनोत्पातेन प्राप्तुमीश्वराः ॥ ८७४ ॥
वलंतो रुचकद्वीपादेकेनोत्पतनेन ते । नंदीश्वरेऽलमायातुं द्वितीयेन यतो गताः ॥ ८७५ ॥
ते चोर्ध्वगत्यामेकेन समुत्पतनकर्मणा । उद्यानं पांडकं गंतुमलं मेरुशिरःस्थितम् ॥ ८७६ ॥
ततस्ते वलिता एकेनोत्पातेन तु नंदनम् । अलं गंतुं द्वितीयेन प्रथमोत्पातभूमिकाम् ॥ ८७७ ॥
ते विद्याचारणर्ध्यामुमेकेनोत्पातकर्मणा । मानुषोत्तरमन्येन द्वीपं नंदीश्वरं क्षमाः ॥ ८७८ ॥
एकोत्पातात्ततश्चामुं पूर्वोत्पाते महातलम् । तिर्यग्यानक्रमेणोर्ध्वमप्यलं ते गतागते ॥ ८७९ ॥
आसीदाशीविषर्द्धिश्च निग्रहानुग्रहक्षमा । तेषामन्या अप्यभूवन् बहुलं बहुलब्धयः ॥ ८८० ॥
लब्धीनामुपयोगं ते जगृहुर्न कदाचन । मुमुक्षवो निराकांक्षा वस्तुषूपस्थितेष्वपि ॥ ८८१ ॥
इतश्च तीर्थकृन्नामगोत्रकर्मार्जितं दृढम् । स्वामिना वज्रनाभेन विंशत्या स्थानकैरिति ॥ ८८२ ॥
तत्रैकमर्हतामर्हत्प्रतिमानां च पूजया । अवर्णवाद[1]व्यापेधैः सद्भूतार्थस्तवैरपि ॥ ८८३ ॥

१ अवर्णवादोऽपवादस्तस्य व्यापेधैर्निषेधैः ।

सिद्धानां सिद्धिस्थानेषु प्रतिजागरणोत्सवैः । यथाऽवस्थितसिद्धत्वकीर्त्तनाच्च द्वितीयकम् ॥ ८८४ ॥
बालकग्लानशैक्षादि यतीनां यस्त्वनुग्रहः । प्रवचनस्य[1] वात्सल्यं स्थानकं तु तृतीयकम् ॥ ८८५ ॥
आहारौषधवस्त्रादिदानादंजलियोजनात् । गुरूणामतिवात्सल्यकरणं तु तुरीयकम् ॥ ८८६ ॥
विंशत्यब्दपर्यायाणां षष्टिवर्षायुषां तथा । समवायभृतां भक्तिः स्थविराणां च पंचमम् ॥ ८८७ ॥
अर्थव्यपेक्षया स्वस्माद्बहुश्रुतभृतां सदा । अन्नवस्त्रादिदानेन षष्ठं वात्सल्यनिर्मितिः ॥ ८८८ ॥
सुविकृष्टतपःकर्मनिर्माणानां तपस्विनाम् । भक्तिर्विश्रामणादानैर्वात्सल्यमिति सप्तमम् ॥ ८८९ ॥
द्वादशांगे श्रुते प्रश्नवाचनादिभिरन्वहम् । सूत्रार्थोभयगो ज्ञानोपयोगो यस्तदष्टमम् ॥ ८९० ॥
शंकादिदोषरहितं स्थैर्यादिगुणभूषितम् । शमादिलक्षणं सम्यग्दर्शनं नवमं पुनः ॥ ८९१ ॥
ज्ञानदर्शनचारित्रोपचारैश्च चतुर्विधः । कर्मणां विनयनतो विनयो दशमं पुनः ॥ ८९२ ॥
इच्छामिथ्याकरणादियोगेष्वावश्यकेष्वलम् । अतीचारपरीहारो यत्नादेकादशं तु तत् ॥ ८९३ ॥
अहिंसादिसमित्यादिमूलोत्तरगुणेषु या । प्रवृत्तिर्निरतीचारा स्थानकं द्वादशं हि तत् ॥ ८९४ ॥
शुभध्यानस्य करणं क्षणे क्षणे लवे लवे । प्रमादपरिहारेण स्थानमेतत् त्रयोदशम् ॥ ८९५ ॥
अनाबाधेन मनसो वपुषश्च निरंतरम् । यथाशक्ति तपःकर्म स्थानमेतच्चतुर्दशम् ॥ ८९६ ॥
अन्नादीनां संविभागो यथाशक्ति तपस्विषु । मनोवाक्कायशुद्ध्याऽयं स्थानं पंचदशं हि तत् ॥ ८९७ ॥
आचार्यादीनां दशानां भक्तपानासनादिभिः । वैयावृत्त्यस्य करणं स्थानकं षोडशं तु तत् ॥ ८९८ ॥
चतुर्विधस्य संघस्य सर्वापाय[2]निषेधनात् । मनःसमाधिजननं स्थानं सप्तदशं हि तत् ॥ ८९९ ॥

१ प्रवचनस्य दर्शनस्य । २ सर्वोपद्रवनिषेधनात् ।

अन्वहं यदुपादानं स्थानमष्टादशं तु तत् ॥ ९०० ॥
सूत्रस्यार्थस्योजयस्याप्यपूर्वस्य प्रयत्नतः । श्रुतज्ञानस्य जक्तिस्तत्स्थानमेकोनविंशकम् ॥ ९०१ ॥
श्रद्धानेनोद्भासनेनावर्णवादच्छिदादिना । प्रज्ञावना शासनस्य तद्विंशतितमं पुनः ॥ ९०२ ॥
विद्यानिमित्तकवितावादधर्मकथादिजिः । मध्यादेज्यः स जगवान् सर्वैरपि बबन्ध तत् ॥ ९०३ ॥
अप्येकं तीर्थकृन्नाम कर्मणो बंधकारणम् । चक्रवर्त्तिजोगफलं कर्मोपार्जितमात्मनः ॥ ९०४ ॥
बाहुनाऽपि च साधूनां वैयावृत्यं वितन्वता । सुबाहुना बाहुबलं लोकोत्तरमुपार्जितम् ॥ ९०५ ॥
विश्रामणां महर्षीणां कुर्वाणेन तपोजुषाम् । इति बाहुसुबाहू तौ वज्रनाजस्तदाऽस्तवीत् ॥ ९०६ ॥
अहो धन्याविमौ वैयावृत्यविश्रामणाकरौ । उपकारकरो यो हि स एवेह प्रशस्यते ॥ ९०७ ॥
तौ तु पीठमहापीठौ पर्यचिंतयतामिति । को नौ प्रशंसत्वथवा कार्यकृद्गृह्यको जनः ॥ ९०८ ॥
आगमाध्ययनध्यानरतावनुपकारिणौ । मायामिथ्यात्वयुक्ताज्यां कर्म स्त्रीत्वफलं कृतम् ॥ ९०९ ॥
ताज्यामनालोचयज्ञ्यामितीर्ष्याकृतदुष्कृतम् । प्रव्रज्यां पालयामासुः पूर्वलक्षांश्चतुर्दश ॥ ९१० ॥
ते षरुप्यनतीचारां खड्गधारासहोदरां । संलेखनाद्वयपुरःसरमेकधीरास्ते पादपोपगमनानशनं प्रपद्य ।
सर्वार्थसिद्धिमधिगम्य दिवं त्रयस्त्रिंशाब्ध्यायुषः सुरवराः षडपि ह्यजूवन् ॥ ९११ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये प्रथमे पर्वणि धनादिद्वादशभववर्णनो नाम प्रथमः सर्गः समाप्तः ॥ १ ॥

# द्वितीयः सर्गः ।

इतश्च जंबूद्वीपस्य विदेहेष्वपरेषु पूः । नाम्ना पराजितेत्यस्ति द्विषद्भिरपराजिता ॥ १ ॥
तस्यां वसुमतीनाथो विक्रमाक्रांतविष्टपः । ईशानचंद्र इत्यासीदीशानेंद्र इव श्रिया ॥ २ ॥
तत्र श्रेष्ठी श्रिया श्रेष्ठः प्रेष्ठो धर्मैकशालिनाम् । नाम्ना चंदनदासोऽभूज्जगदानंदचंदनः ॥ ३ ॥
जगतो नयनानंदनिदानं तस्य नंदनः । नाम्ना सागरचंद्रोऽभूत्सागरस्येव चंद्रमाः ॥ ४ ॥
ऋजुशीलः सदैवासौ धर्मकर्मा विवेकवान् । नगरस्याखिलस्यापि बभूव मुखमंडनम् ॥ ५ ॥
सोऽन्यदेशानचंद्रस्य राज्ञो दर्शनहेतवे । सेवोपनतसामंताकुलं राजकुलं ययौ ॥ ६ ॥
स तदासनतांबूलदानादिप्रतिपत्तितः । महास्नेहेन ददृशे पित्रेव पृथिवीभुजा ॥ ७ ॥
अत्रांतरे पराभूतशंखध्वनितया गिरा । राजद्वारे कश्चिदेत्याऽपाठीन्मंगलपाठकः ॥ ८ ॥
उद्यतोद्यानपालीव त्वदुद्यानेऽद्य भूपते । सज्जीकृतानेकपुष्पा वसंतश्रीर्विजृंभते ॥ ९ ॥
विकासिकुसुमामोदसुरभीकृतदिग्मुखम् । संभावय तदुद्यानं महेंद्र इव नंदनम् ॥ १० ॥
राजाप्याज्ञापयद्द्वाःस्थं यत्प्रातरखिलैर्जनैः । गंतव्यमस्मदुद्यानमेवमाघोष्यतां पुरे ॥ ११ ॥
त्वयाप्येतव्यमुद्यानमिति श्रेष्ठिसुतं नृपः । स्वयमादिशदेवं हि प्रसन्नस्वामिलक्षणम् ॥ १२ ॥
ततो राज्ञा विसृष्टोऽसौ हृष्टः स्वावसथं[2] ययौ । मित्रायाशोकदत्ताय तां नृपाज्ञां जगाद च ॥ १३ ॥

१ प्रेष्ठः अग्रणीः । २ स्वावसथं स्वावास ।



द्वितीयेऽह्नि ययौ राजाप्युद्यानं सपरिच्छदः । पौरलोकोऽप्यगात्तत्र प्रजा राजानुयायिनी ॥ १४ ॥
वसंत इव मलयानिलेन श्रेष्ठिसूरपि । सुहृदाऽशोकदत्तेन सहोद्यानं जगाम च ॥ १५ ॥
पुष्पावचयसंदर्भगीतनृत्यादिभिस्ततः । प्रवृत्तः क्रीडितुं लोकः स्थितः कामस्य शासने ॥ १६ ॥
स्थाने स्थाने कृतास्थानाः पौराः क्रीडाविधायिनः । आवासितस्मरनृपस्कंधावारधुरं दधुः ॥ १७ ॥
पदे पदे संप्रवृत्तगीतातोद्यमहाध्वनौ । जयायान्येन्द्रियार्थानामिवाऽभ्यधिकमुत्थिते ॥ १८ ॥
प्रत्यासन्नादथैकस्मादकस्मात्तरुगह्वरात् । त्रायध्वं त्रायध्वमिति त्रस्तस्त्रीध्वनिरुत्थितः ॥ १९ ॥ युग्मम् ।
तथा स्वमाकृष्ट इव गिरा कर्णप्रविष्टया । किमेतदिति संभ्रांतः सागरः समधावत ॥ २० ॥
श्रेष्ठिनः पूर्णभद्रस्य कन्यकां प्रियदर्शनाम् । स बंदिभिर्धृतां तत्राऽपश्यदेणीं वृकैरिव ॥ २१ ॥
एकस्य बंदिनो हस्तमामोट्याथाददे क्षुरीम् । श्रेष्ठिसूनुर्विपक्षतो ग्रीवां भंक्त्वा मणीमिव ॥ २२ ॥
तस्येति विक्रमं दृष्ट्वा बंदिनस्ते विदुद्रुवुः । व्याघ्रा अपि पलायंते ज्वलज्ज्वलनदर्शनात् ॥ २३ ॥
इति सागरचंद्रेण बंदिभ्यः प्रियदर्शना । एधोहारिभ्यो माकंदलतेव परिमोचिता ॥ २४ ॥
परोपकारव्यसनी क एष पुरुषाग्रणीः । आगादिह समाकृष्टो दिष्ट्या मद्भाग्यसंपदा ॥ २५ ॥
स्मररूपाधरीकर्त्ता भर्त्ता भाव्ययमेव मे । चिंतयंतीति स्वं धाम जगाम प्रियदर्शना ॥ २६ ॥
अनुस्यूतामिव वहन् हृदये प्रियदर्शनाम् । अशोकदत्तसहितः श्रेष्ठिपुत्रोऽप्यगाद्गृहम् ॥ २७ ॥
अथ चंदनदासेन स परंपरयाऽखिलः । अबाबुध्यत वृत्तांतः केन छाद्येत तादृशम् ॥ २८ ॥

१ सपरिवारः । २ वनश्वानैः । ३ काष्ठहारिभ्यः ।

स दध्याविति युक्तोऽस्य रागोऽधिप्रियदर्शनाम् । अजर्यं पंकजिन्या हि राजहंसस्य युज्यते ॥ २९ ॥
इयमुन्नटताऽकारि यत्तदा तन्न सांप्रतं । कार्यं सपौरुषेणापि वणिजा न हि पौरुषम् ॥ ३० ॥
संगः किं च [1]ऋजोरस्याशोकदत्तेन मायिना । न साधुर्जातु बदरीद्रुणेव कदलीतरोः ॥ ३१ ॥
विचिंत्येति चिरं श्रेष्ठी स समाहूय सागरम् । भद्रद्विपं [2]निषादीव साम्नारभत शासितुम् ॥ ३२ ॥
सर्वशास्त्रानुसारेण व्यवहारेण च स्वयम् । वत्स सम्यगभिज्ञोऽसि तथापि ज्ञाप्यसे मया ॥ ३३ ॥
वयं हि वणिजस्तात कलाकौशलजीविनः । अनुद्भटाश्चारुवेषाः संतो गर्ह्यामहे न हि ॥ ३४ ॥
भवितव्यं यौवनेऽपि भवद्भिर्गूढविक्रमैः । वणिजो लोकसामान्येऽप्यर्थे साशंकवृत्तयः ॥ ३५ ॥
संपदो विषयक्रीडा दानं च छन्नमेव नः । अलं भवति शोभायै शरीरमिव योषिताम् ॥ ३६ ॥
आत्मजातेरनुचितं क्रियमाणं न शोभते । चरणे करभस्येव बद्धं कनकनूपुरम् ॥ ३७ ॥
ततो निजकर्मौचित्यव्यवहारपरायणैः । दातव्यः प्रहरो वत्स गुणानामिव संपदाम् ॥ ३८ ॥
त्याज्योऽसतां च संसर्गो निसर्गानृजुचेतसाम् । सोऽ[3]लर्कविषवत्कालेनापि यात्येव विक्रियाम् ॥ ३९ ॥
अयं चाशोकदत्तस्त्वां मित्रं [4]श्वित्रं तनूमिव । अवासप्रसरो वत्स सर्वथा दूषयिष्यति ॥ ४० ॥
मनस्यन्यद्वचस्यन्यत्क्रियायामन्यदेव हि । गणिकाया इवामुष्यात्यंतमायाजुषः सदा ॥ ४१ ॥
आदरादुपदिश्यैवं श्रेष्ठिश्रेष्ठे स्थिते सति । इति सागरचंद्रोऽपि चिंतयामास चेतसि ॥ ४२ ॥
कन्याबंदिव्यतिकरस्तातेन सकलोऽपि सः । विज्ञात इति मन्येऽहमुपदेशदिशाऽनया ॥ ४३ ॥

१ ऋजोः सरलस्य । २ महामात्रः । ३ अलर्काख्यरोगविषवत् । ४ श्वित्र कुष्ठ ।

असावशोकदत्तश्च तातस्याऽत्रान्न संगतः ।-मंदभाग्यतया पुंसां गुरवः स्युरनीदृशाः ॥ ४४ ॥
भवत्वेवं तथापीति विमृश्य मनसि क्षणम् । ऊचे सागरचंद्रोऽपि प्रश्रयाश्रितया[1] गिरा ॥ ४५ ॥
यदादिशति तातस्तत् कर्तव्यं सूनुरस्मि ते । कृतं तेन कृतेनापि गुर्वाज्ञा यत्र लंघ्यते ॥ ४६ ॥
किंतु दैवादकांडेऽपि कृत्यं तदुपतिष्ठते । नालोच[2]कालहरणं सहते यन्मनागपि ॥ ४७ ॥
आलोचं कुर्वतोऽत्येति कालः कार्यस्य कस्यचित् । पर्ववेलेव जिह्मस्य[3] पादशौचं वितन्वतः ॥ ४८ ॥
ईदृशेप्यागते काले प्राप्तेऽपि प्राणसंशये । तदेवाहं करिष्यामि तव लज्जाकरं न यत् ॥ ४९ ॥
तातेनाशोकदत्तस्य यच्च तादृगुदीरितम् । तद्दोषेण न दोष्यस्मि न गुणी तद्गुणेन वा ॥ ५० ॥
यन्ममाशोकदत्तेन मैत्री तत्रेति कारणम् । सहवासः सहपांशुक्रीडनं दर्शनं मुहुः ॥ ५१ ॥
समा जातिः समा विद्या समं शीलं समं वयः । परोक्षेऽप्युपकारित्वं सुखदुःखविभागिता ॥ ५२ ॥
अस्मिंश्च कैतवमहं न पश्यामि मनागपि । मृषा तातस्य कोप्याख्यत्खलाः सर्वंकषाः[4] खलुः ॥ ५३ ॥
अस्तु वा तादृशो मायाव्येष मे किं करिष्यति । एकत्र विनिवेशेऽपि काचः काचो मणिर्मणिः ॥ ५४ ॥
इत्युक्तः सूनुना श्रेष्ठी तमूचे बुद्धिमानसि । तथापि ह्यभिधातव्यं दुर्लक्षा हि पराशयाः ॥ ५५ ॥
सोऽथ स्वसूनोर्भावज्ञस्तदर्थं प्रियदर्शनाम् । शीलादिभिर्गुणैः पूर्णां पूर्णभद्रादयाचत ॥ ५६ ॥
असावुपकृतिक्रीती[5] त्वत्सुतेन सुता मम । अग्रेऽपीति वदन् पूर्णभद्रोऽमन्यत तद्वचः ॥ ५७ ॥

---

१ प्रश्रयो विनयस्तदाश्रितया । २ आलोचो विचारस्तस्य कालहरण कालप्रतीक्षणं । ३ जिह्मस्य दीर्घसूत्रिणः । ४ सर्वंकषाः सर्वक्षोभकारकाः । ५ उपकारक्रीता ।

ततः सागरदत्तस्य प्रियदर्शनया सह । विवाहोऽकारि पितृभिः शुभे लग्ने शुभे दिने ॥ ५८ ॥
विचिंतिताया दुंदुभ्याः पतनेनेव तौ ततः । मनीषितविवाहेन[1] मुमुदाते वधूवरौ ॥ ५९ ॥
समानमानसतया तयोरेकात्मनोरिव । परस्परमवर्द्धिष्ट प्रीतिः सारसयोरिव ॥ ६० ॥
रेजे सागरचंद्रेण सा चंद्रेणेव चंद्रिका । सदोदयवती सौम्यदर्शना प्रियदर्शना ॥ ६१ ॥
तयोः शीलभृतो रूपवतोरार्जवशालिनोः । अनुरूपोऽभवद्योगश्चिराद् घटयतो विधेः ॥ ६२ ॥
अविश्रंभो[2] न जात्वासीदन्योऽन्यप्रत्ययात्तयोः । विपरीतं न शंकंते कदापि सरलाशयाः ॥ ६३ ॥
अथ सागरचंद्रस्य बहिर्गतवतो गृहे । अशोकदत्तोऽभ्यायासीदूचे च प्रियदर्शनाम् ॥ ६४ ॥
श्रेष्ठिनो धनदत्तस्य वध्वा मंत्रयते रहः । नित्यं सागरचंद्रोऽयं तत्र किं स्यात्प्रयोजनम् ॥ ६५ ॥
निसर्गऋज्वी[3] साप्यूचे जानात्येतत्सुहृत्तव । द्वितीयं हृदयं तस्य त्वं वा जानासि सर्वदा ॥ ६६ ॥
रहःसूचितकार्याणि महतां व्यवसायिनाम् । को जानात्यथ जानाति स कथं कथयेद्गृहे ॥ ६७ ॥
उवाचाशोकदत्तोऽपि त्वत्पतेर्यत्तया सह । मंत्रे प्रयोजनं वेद्मि तत्परं कथ्यते कथम् ॥ ६८ ॥
प्रियदर्शनया किं तदित्युक्तः सोऽब्रवीदिति । त्वया प्रयोजनं यन्मे सुभ्रु तस्यापि तत्तया ॥ ६९ ॥
तद्भावाविज्ञया ऋज्वा प्रियदर्शनया पुनः । मया प्रयोजनं ते किमित्युक्तः सोऽवदत्पुनः ॥ ७० ॥
पुंसो रसांतरविदः कस्य न स्यात्सचेतसः । त्वया प्रयोजनं सुभ्रु तमेकं त्वत्प्रियं विना ॥ ७१ ॥
आकर्ण्य कर्णसूच्याभं[4] दुरीहासूचि तद्वचः । सकोपाऽधोमुखीभूय सा साक्षेपमभाषत ॥ ७२ ॥

---

१ मनीषितविवाहेन मनोभीष्टविवाहेन । २ अविश्रभोऽविश्वासः । ३ स्वभावसरला । ४ कर्णसूचीसदृशम् ।

सागरोऽपि जगादैवं [1]मामकिन्नाम संप्रति । संकटे न्यपतः कस्या अप्युरग्या इव स्त्रियाः ॥ ८८ ॥
प्रत्यूचेऽशोकदत्तोऽपि नाटयन् कृत्रिमां त्रपाम् । [2]असमंजसमूचे मां चिरं हि प्रियदर्शना ॥ ८९ ॥
लज्जिता स्वयमप्येषा कदापि स्थास्यतीत्यहो । मया सलज्जं सावज्ञं सेयत्कालमुपेक्षिता ॥ ९० ॥
दिने दिने परमसावसतीत्वोचितोक्तिभिः । मां वदंती न विरमत्यहो स्त्रीणामसद्ग्रहाः ॥ ९१ ॥
अद्य त्वावसथे युष्मदन्वेषणकृते गतः । बंधो निरुद्धोऽस्मि तया राक्षस्येव छलज्ञया ॥ ९२ ॥
तंतुबंधादिव करी कथंचिदपि तद्गृहात् । आत्मानं मोचयित्वाहमिहागममतिद्रुतम् ॥ ९३ ॥
ततश्चाचिंतयमहं जीवंतं मां न मोक्ष्यति । असाविति तदात्मानमद्यव्यापादयामि किम् ॥ ९४ ॥
यद्वा न मर्तुमुचित्तं मन्मित्रस्य यदीदृशम् । कथयिष्यत्यन्यथासौ मत्परोक्षे तु तत्तथा ॥ ९५ ॥
अथवा कथयाम्येतत्सर्वं स्वसुहृदः स्वयम् । अथाऽस्यां कृतविश्वासो नापायमुपयात्यसौ ॥ ९६ ॥
नादोऽपि युक्तं यन्नास्या मयाऽपूरि मनोरथः । दौःशील्यकथनेनाथ क्षते क्षारं क्षिपामि किम् ॥ ९७ ॥
एवं विचिंतयन्नत्र त्वया दृष्टोऽस्मि संप्रति । उद्वेगकारणं चेदं मम जानीहि बांधव ॥ ९८ ॥
इत्याकर्ण्य वचः [3]पीतहालाहल इव क्षणम् । निःस्पंदः सागरोऽथाभून्निवात इव सागरः ॥ ९९ ॥
सागरो व्याजहारैवं युज्यते योषितामिदम् । क्षारत्वमूषरमहीनिपानपयसामिव ॥ १०० ॥
आसादय विषादं मा व्यवसाये शुभे भव । स्थातव्यं स्वास्थ्यमास्थाय स्मरणीयं न तद्वचः ॥ १०१ ॥
यादृशी तादृशी वापि साऽस्तु किं वस्तुतस्तया । माभून्मनो[4]र्मलिनिमा केवलं भ्रातरावयोः ॥ १०२ ॥

---

१ हेमामकिन् हेमामक । २ असमञ्जसम् अयुक्त । ३ पीतहालाहल. पीतविषः । ४ मनोमलिनिमा मनोमालिन्य ।

तत्रारे प्रथमे मर्त्याः पल्यत्रितयजीविनः । गव्यूतित्रितयोच्छ्रायाश्चतुर्थदिनभोजिनः ॥ ११८ ॥
चतुरस्रसुसंस्थानाः सर्वलक्षणलक्षिताः । वज्रऋषभनाराचसंहननाः सदासुखाः ॥ ११९ ॥
अपक्रोधा गतमाना निर्माया लोभवर्जिताः । सर्ववारं स्वभावेनाप्यधर्मपरिहारिणः ॥ १२० ॥
प्रायच्छंस्तत्र तेषां तु वांछितानि दिवानिशम् । मद्यांगाद्याः कल्पवृक्षा दशोत्तरकुरुष्विव ॥ १२१ ॥
स्वादुमद्यानि मद्यांगा ददुः सद्योऽपि याचिताः । भाजनादीनि भृंगाश्च तद्भांडागारिका इव ॥ १२२ ॥
तेनुस्तूर्यांगास्तूर्याणि तूर्यत्रयकराणि तु । उद्योतमसमं दीपशिखा ज्योतिषिका अपि ॥ १२३ ॥
विचित्राणि सुचित्रांगा माल्यानि समढौकयन् । सूदा[1] इव चित्ररसा भोज्यानि विविधानि तु ॥ १२४ ॥
यथेच्छमर्पयामासुर्मण्यंगा भूषणानि तु । गेहाकाराः सुगेहानि गंधर्वपुरवत्क्षणात् ॥ १२५ ॥
अनग्नेच्छमनग्नास्तु वासांसि समपादयन् । एते प्रत्येकमन्यानप्यर्थान् ददुरनेकशः ॥ १२६ ॥
तदा च भूमयस्तत्र स्वादवः शर्करा इव । सुधामाधुर्यधुर्याणि धुन्यादिषु[2] पयांस्यपि ॥ १२७ ॥
अतिक्रामत्यरे तत्र त्वायुः संहननादिकम् । कल्पद्रुमप्रभावाश्च न्यूनं न्यूनं शनैः शनैः ॥ १२८ ॥
द्वितीये त्वरके मर्त्याः पल्यद्वितयजीविनः । गव्यूतिद्वितयोच्छ्रायास्तृतीयदिनभोजिनः ॥ १२९ ॥
किंचिन्न्यूनप्रभावाश्च तत्र कल्पमहीरुहः । किंचिन्माधुर्यतो हीना आपो भूशर्करा अपि ॥ १३० ॥
अस्मिन्नप्यरके कालात्पूर्वारक इवाखिलं । न्यूनं न्यूनतरं स्थौल्यं स्तंबेरमकरे[3] यथा ॥ १३१ ॥
अरके तु तृतीयेऽस्मिन्नेकपल्यायुषो नराः । एकगव्यूतकोच्छ्राया द्वितीयदिनभोजिनः ॥ १३२ ॥

---

१ सूदाः पाचकाः । २ धुन्यादिषु नद्यादिषु । ३ स्तम्बेरमकरे हस्तिशुण्डाया ।

कालेन गछता तत्र प्रभावः कल्पभूरुहाम् । मंदीबभूव चारित्रभ्रष्टानां यतिनामिव ॥ १४८ ॥
मद्यांगा विरसं मद्यं ददुः स्तोकं विलंबितम् । दुर्दैवेन परावृत्य समानीता इवापरे ॥ १४९ ॥
दीयतां मा दीयतां चेत्यामर्शविवशा इव । सविलंबं भाजनानि भृंगा अभ्यर्थिता ददुः ॥ १५० ॥
आतोद्यादि न तादृक्षं तूर्यांगा अप्यसूत्रयन् । तिरस्कारसमाकृष्टा गंधर्वा इव वैष्टयः ॥ १५१ ॥
अर्थ्यमाना अपि मुहुर्दीपं ज्योतिष्कभूरुहः । नोद्योतं तादृशं तेनुर्दिवा दीपशिखा इव ॥ १५२ ॥
चित्रांगा अपि माल्यादि द्रुतमिछानुसारतः । न हि विश्राणयामासुर्भृत्या[3] दुर्विनया इव ॥ १५३ ॥
भोज्यं चतुर्विधं चित्ररसं चित्ररसा अपि । प्राग्वन्नादुः क्षीयमाणदानेछा इव सत्रिणः ॥ १५४ ॥
भूषणाद्यर्पयामासुर्न मण्यंगास्तथाविधम् । संपत्स्यते कथं भूय इति चिंताकुला इव ॥ १५५ ॥
गेहाकारास्तु गेहानि मंदं मंदं वितेनिरे । सत्काव्यानीव कवयो मंदव्युत्पत्तिशक्तयः ॥ १५६ ॥
अनग्ना अपि वस्त्राणि स्खलितं स्खलितं ददुः । क्रूरग्रहावग्रहिणो वारि वारिधरा इव ॥ १५७ ॥
तादृक्कालानुभावेन मिथुनानामजायत । ममत्वं कल्पवृक्षेषु स्वदेहावयवेष्विव ॥ १५८ ॥
अन्येन स्वीकृतं कल्पवृक्षमन्यो यदाश्रयत् । महान् परिभवो ह्यासीत्तदा स्वीकृतपूर्विणः ॥ १५९ ॥
तदा पराभवं सोढुमसहास्ते परस्परम् । आत्माधिकं स्वामितया चक्रुर्विमलवाहनम् ॥ १६० ॥
जातिस्मृत्या स नीतिज्ञो युग्मिनां कल्पपादपान् । ददौ विभज्य स्थविरो द्रविणं गोत्रिणामिव ॥ १६१ ॥

---

१ अरचयन् । २ विष्टिगृहीताः । ३ विश्राणयामासुः ददुः । ४ दानशालाकारिणः । ५ क्रूरग्रहाः शनिभौमादयस्तैरवग्रहिणः अवृष्टिकारकाः ।

हाकारनीतिं तदंरूनाय सः ॥ १६२ ॥
यो यस्तत्याज मर्यादां परकल्पद्रुमेच्छया । आविश्चकार हाकारनीतिं तदंरूनाय सः ॥ १६३ ॥
हा त्वया दुष्कृतमिति तस्य दंरूेन युग्मिनः । वार्द्धिवेलाजलानीव मर्यादां नातिचक्रमुः ॥ १६४ ॥
तेन हाकारदंडेन युग्मान्येवममंसत । वरं दंडादिनिर्घातो न हाकारतिरस्कृतिः ॥ १६५ ॥
तस्यायुरवशेषे तु वर्षार्द्धप्रमिते सति । नार्यायां चंद्रयशसि मिथुनं समजायत ॥ १६६ ॥
तौ स्त्रीपुंसावसंख्येयपूर्वायुष्कौ सुसंस्थिती । आद्यसंहननौ श्यामावष्टधन्वशतोच्छ्रयौ ॥ १६७ ॥
चक्षुष्मांश्चंद्रकांता च पितृभ्यां कल्पिताभिधौ । ववृधाते सहोद्भूतौ लताविटपिनाविव[1] ॥ १६८ ॥
प्रपाल्य युग्मं षण्मासान् जरारोगौ विना मृतः । सुवर्णकुमारेषूत्पेदे[2] विमलवाहनः ॥ १६९ ॥
तदैव च चंद्रयशा मृत्वा नागेष्वजायत । अस्तमीयुषि पीयूषकरे[3] तिष्ठेन्न चंद्रिका ॥ १७० ॥
आत्मीयं पालयित्वायुस्तत्र स्तंबेरमोऽपि सः । प्राप नागकुमारत्वं कालमाहात्म्यमीदृशम् ॥ १७१ ॥
हाकारदंरूनीत्यैव चक्षुष्मानथ युग्मिनाम् । मर्यादां वर्त्तयामास यथा विमलवाहनः ॥ १७२ ॥
प्राप्ते च चरमे काले चक्षुष्मच्चंद्रकांतयोः । यशस्वी च सुरूपा च जज्ञाते युग्मरूपिणौ ॥ १७३ ॥
तत्संहननसंस्थानवर्णौ न्यूनायुषौ मनाक् । कलयामासतुर्वृद्धिं वयोबुद्धी इव क्रमात् ॥ १७४ ॥
सदा युग्मचरौ सार्द्धसप्तधन्वशतोच्छ्रयौ । बिभरांचक्रतुर्यौ तौ तोरणस्तंभविभ्रमम् ॥ १७५ ॥
कालेन पंचतां प्राप्य चक्षुष्मानुदपद्यत । सुवर्णेष्वथ नागेषु चंद्रकांताऽपि तत्क्षणम् ॥ १७६ ॥
ततो यशस्वी पितृवन्मिथुनान्यखिलान्यपि । सलीलं पालयामास गोपाल इव गाश्चिरम् ॥

१ लतावृक्षौ । २ तदाख्यदेवेषु सुवर्णकुमारेति भुवनपतिनिकायेषु । ३ पीयूषकरे चन्द्रे ।

अथोल्लंघितुमारेभे हाकारो मिथुनैः क्रमात् । स्फुरदंतर्मदावस्थैरंकुशो वारणैरिव ॥ १७७ ॥
चक्रे माकारदंडं च यशस्वी तानि शासितुम् । रोगे त्वेकौषधासाध्ये देयमेवौषधांतरम् ॥ १७८ ॥
आगस्यल्पे नीतिमाद्यां द्वितीयां मध्यमे पुनः । महीयसि द्वे अपि ते प्रायुंक्त स महामतिः ॥ १७९ ॥
यशस्विनः सुरूपायाश्चासंपूर्णायुषोर्मनाक् । स्त्रीपुंसौ समजायेतां सह धीविनयाविव ॥ १८० ॥
ताभ्यां चंद्रोज्वलः पुत्रोऽभिचंद्र इति कीर्त्तितः । प्रियंगुप्रतिरूपा तु प्रतिरूपेति पुत्र्यपि ॥ १८१ ॥
पितृतोऽल्पायुषौ सार्द्धषट्कार्मुकशतोच्छ्रयौ । शम्यश्वत्थाविव[1] युतौ क्रमाद्वृद्धिमुपेयतुः ॥ १८२ ॥
सदैव शुशुभाते तौ यथा मिलितवारिणौ । मंदाकिनीयमुनयोः प्रवाहाविव पावनौ ॥ १८३ ॥
पूर्णायुष्को यशस्वी चाब्धिकुमारेष्वजायत । सुरूपाप्यभवन्नागकुमारेषु तदैव तु ॥ १८४ ॥
पितेव चाभिचंद्रोऽपि सर्वान् युगलधर्मिणः । स्थित्या तयैव नीतिभ्यां ताभ्यामेवाशिषच्चिरम् ॥ १८५ ॥
ततो बहुलभूतेष्टः शर्वर्य्येव निशाकरः । प्रांतकाले मिथुनकं सुषुवे प्रतिरूपया ॥ १८६ ॥
सूनोः प्रसेनजिदिति पितृभ्यां नाम निर्ममे । चक्षुःकांतेति पुत्र्याश्च कांतेयं चक्षुषामिति ॥ १८७ ॥
न्यूनायुषौ पितृभ्यां च तमालश्यामलत्विषौ । सहितौ विवृधाते तौ बुद्ध्युत्साहाविव क्रमात् ॥ १८८ ॥
षट्कार्मुकशतोत्सेधं धारयंतावुभावपि । विषुवद्वासरनिशे इवाभूतां समप्रभौ ॥ १८९ ॥
मृत्वाऽभिचंद्रोप्युदधिकुमारेषूदपद्यत । प्रतिरूपा पुनर्नागकुमारेषु तदैव हि ॥ १९० ॥
बभूव युग्मिनां नाथस्तत्रैवाथ प्रसेनजित् । प्रायो महात्मनां पुत्राः स्युर्महात्मान एव हि ॥ १९१ ॥

---

१ शमीपिप्पलवृक्षौ ।

हाकारनीतिं माकारनीतिं च व्यत्यलंघयन् । तदा युग्मानि कामार्त्ता ह्रीमर्यादे इव क्रमात् ॥ १९२ ॥
अनाचारमहाभूतत्रासमंत्राक्षरोपमाम् । धिक्कानीतिमपरामकृताथ प्रसेनजित् ॥ १९३ ॥
नीतिभिस्तिसृभिस्ताभिः स प्रयोगविचक्षणः । शशास सकलं लोकं युतैस्त्रिभिरिव द्विपम् ॥ १९४ ॥
ततश्च पश्चिमे काले किंचिदूनायुषौ ततः । चक्षुःकांतापि सुषुवे स्त्रीपुंसौ युग्मरूपिणौ ॥ १९५ ॥
तौ तु पंचाशदधिकौ पंचधन्वशतोच्छ्रयौ । सहैव प्रापतुर्वृद्धिं वृक्षच्छाये इव क्रमात् ॥ १९६ ॥
मरुदेव इति सूनुः श्रीकांतेति च नंदिनी । तौ युग्मधर्मिणौ लोके नाम्ना ख्यातिमुपेयतुः ॥ १९७ ॥
प्रियंगुवर्णया पत्न्या मरुदेवः सुवर्णरुक् । शुशुभे नंदनतरुश्रेण्येव कनकाचलः ॥ १९८ ॥
ततो द्वीपकुमारेषु जज्ञे मृत्वा प्रसेनजित् । चक्षुःकांता पुनर्नागकुमारेषु तदैव हि ॥ १९९ ॥
नीतिक्रमेण तेनैव सर्वान् युगलधर्मिणः । मरुदेवस्ततो देवान् देवराज इवान्वशात् ॥ २०० ॥
श्रीकांतायाः प्रांतकाले जायेतां युग्मधर्मिणौ । नाभिश्च मरुदेवी च स्त्रीपुंसावभिधानतः ॥ २०१ ॥
पंचविंशत्यभ्यधिकं पंचधन्वशतोच्छ्रयौ । सहैव प्रापतुर्वृद्धिं तौ क्षमासंयमाविव ॥ २०२ ॥
मरुदेवा प्रियंगुश्रीर्नाभिर्जांबूनदद्युतिः । पित्रोः सावर्ण्यतोऽभातां तत्प्रतिच्छंदकाविव ॥ २०३ ॥
संख्यातपूर्वप्रमितं तयोरायुर्महात्मनोः । श्रीकांतामरुदेवाभ्यामनागूनमभूत्किल ॥ २०४ ॥
विपद्य मरुदेवोऽथ प्राप द्वीपकुमारताम् । श्रीकांताऽपि हि तत्कालमेव नागकुमारताम् ॥ २०५ ॥
सप्तमोऽभूत्कुलकरो नाभिस्तदनु युग्मिनाम् । तिसृभिर्नीतिभिस्तांश्च यथावत्प्रशशास च ॥ २०६ ॥

१ युतैर्हस्तिताडनविशेषैः । २ तत्प्रतिबिम्बभूतौ ।

तदा तृतीयारशेषे पूर्वलक्षेषु संख्यया । चतुरशीतौ सनवाशीतिपक्षेषु सत्स्विह ॥ २०७ ॥
आषाढमासस्य पक्षे प्रवृत्ते धवलेतरे । चतुर्थ्यामुत्तराषाढानक्षत्रस्थे निशाकरे ॥ २०८ ॥
प्रपाल्यायुस्त्रयस्त्रिंशत्सागरोपमसंमितम् । जीवः श्रीवज्रनाभस्य च्युत्वा सर्वार्थसिद्धितः ॥ २०९ ॥
श्रीनाभिपत्न्या उदरे मरुदेव्या अवातरत् । मानसात्सरसो हंस इव मंदाकिनीतटे ॥ २१० ॥
चतुर्भिः कलापकं ॥

तदा स्वामिन्यवतीर्णे त्रैलोक्येऽपि शरीरिणाम् । दुःखच्छेदात्क्षणं सौख्यमुद्योतश्च महानभूत् ॥ २११ ॥
तत्राऽवतारयामिन्यां वासागारे प्रसूतया । मरुदेव्या ददृशिरे महास्वप्नाश्चतुर्दश ॥ २१२ ॥
आदौ वृषः सितः पीनस्कंधो दीर्घर्जुवालधिः[1] । सस्वर्णकिंकिणीमालः शरन्मेघ इवोत्तमित् ॥ २१३ ॥
दंतिराजश्चतुर्दंतः श्वेतवर्णः क्रमोन्नतः । क्षरन्मदनदीरम्यः कैलास इव जंगमः ॥ २१४ ॥
पिंगाक्षो दीर्घरशनः केशरी लोलकेशरः । पताकामिव शूरेषु तन्वन्नुत्पुच्छनच्छलात् ॥ २१५ ॥
देवी च पद्मनिलया पद्मसदृग्विलोचना । दिक्कुंजरकरोत्क्षिप्तपूर्णकुम्भोपशोभिता ॥ २१६ ॥
नानाविधामरतरुप्रसूनपरिगुंफितम् । दाम प्रलंबधन्वेव ऋजु रोहितधन्वनः[2] ॥ २१७ ॥
निजाननप्रतिच्छंदमिवानंदनिबंधनम् । कांतिपूरद्योतिताशामंडलं चंद्रमंडलम् ॥ २१८ ॥
निशायामपि तत्कालं वासरभ्रमकारकः । सर्वांधकारच्छिदुरः स्फुरद्द्युतिरहर्प्पतिः[3] ॥ २१९ ॥
किंकिणीमालभारिण्या प्रचलंत्या पताकया । करीव कर्णतालेन राजमानो महाध्वजः ॥ २२० ॥

१ दीर्घसरलपुच्छः । २ आरूढधन्वनः । ३ अहर्प्पतिः सूर्यः ।

अंभःकुंभः शातकुंभः स्मेराम्भोजार्च्चिताननः । अंभोधिमथनोद्भूतसुधाकुंभसहोदरः ॥ २२१ ॥
स्तोतुं तमाद्यमर्हंतं पद्मैर्भृंगनिनादिभिः । अनेकवदनीभूत इव पद्माकरो महान् ॥ २२२ ॥
भुव्यास्तीर्णशरन्मेघमालालीलामलिम्लुचैः[1] । उद्वीचिनिचयैश्चेतोऽभिरामः क्षीरनीरधिः ॥ २२३ ॥
यत्रोषितोऽभूद्भगवान् देवत्वे तदिवागतम् । इहापि पूर्वस्नेहेन विमानममितद्युति ॥ २२४ ॥
कुतोऽप्येकत्र मिलितस्तारकाणामिवोत्करः । रत्नपुंजो महान् व्योम्नि पुंजीभूतामलद्युतिः ॥ २२५ ॥
तेजस्विनां पदार्थानां त्रैलोक्योदरवर्त्तिनाम् । संपिंडितं तेज इव निर्धूमोऽग्निर्मुखेऽविशत् ॥ २२६ ॥
निशाविरामसमये स्वामिनी मरुदेव्यपि । स्वप्नांते स्मयमानास्या पद्मिनीव व्यबुध्यत ॥ २२७ ॥
असंमांतीं मुदमिवोद्गिरंती कोमलाक्षरैः । स्वप्नान्न्यकथयद्देवी तांस्तथैवाशु नाभये ॥ २२८ ॥
उत्तमस्ते कुलकरस्तनयो भवितेत्यथ । स्वार्जवस्यानुसारेण नाभिः स्वप्नान् व्यचारयत् ॥ २२९ ॥
स्वामिनः कुलकृन्मात्रसंभावनमसांप्रतम् । इति कोपादिवेंद्राणामकंपंतासनान्यथ ॥ २३० ॥
किमित्यकस्मादस्माकमासनानां प्रकंपनम् । इति दत्वोपयोगं तद्विदांचक्रुर्विभौजसः ॥ २३१ ॥
तत्कालं भगवन्मातुः स्वप्नार्थमभिशंसितुम् । सुहृदः कृतसंकेता इवेंद्रास्तुल्यमाययुः ॥ ३२२ ॥
ततस्ते विनयान्मूर्ध्नि घटितांजलिकुड्मलाः । स्वप्नार्थं स्फुटयामासुः सूत्रं वृत्तिकृतो यथा ॥ २३३ ॥
भावी स्वामिनि पुत्रस्ते स्वप्ने वृषभदर्शनात् । मोहपंकमग्नधर्मस्यंदन[2]ोद्धरणक्षमः ॥ २३४ ॥
हस्तिदर्शनतो देवि तव सूनुर्भविष्यति । गरीयसामपि गुरुर्महास्थामैक[3]धाम च ॥ २३५ ॥

---

१ मलिम्लुचैश्चोरैः । २ स्यन्दनो रथः । ३ महाबलैकस्थान ।

भावी पुरुषसिंहस्ते तनयः सिंहदर्शनात् । धीरः सर्वत्र निर्भीकः शूरोऽस्खलितविक्रमः ॥ २३६ ॥
यच्च श्रीर्ददृशे तत्र तनयः पुरुषोत्तमः । देवि त्रैलोक्यसाम्राज्यलक्ष्मीनाथो भविष्यति ॥ २३७ ॥
स्वप्ने स्रग्दर्शनात्पुण्यदर्शनः स्यात्तवात्मजः । सर्वस्य जगतः स्रग्वच्छिरसोद्धार्यशासनः ॥ २३८ ॥
जगन्मातस्त्वया यच्च स्वप्ने पूर्णेन्दुरैक्ष्यत । तन्नेत्रानंदनः कांतो नंदनस्ते भविष्यति ॥ २३९ ॥
ईक्षांचक्रे रविर्यच्च तत्सूनुस्ते भविष्यति । मोहांधकारविध्वंसाज्जगदुद्द्योतकारकः ॥ २४० ॥
आलुलुके त्वया स्वप्ने यच्च देवि महाध्वजः । महावंशप्रतिष्ठः स्यात्तत्ते धर्मध्वजोंऽगजः ॥ २४१ ॥
यच्च स्वप्ने पूर्णकुंभो भवत्यालोकि देवि तत् । सूनुः समग्रातिशयपूर्णपात्रं भविष्यति ॥ २४२ ॥
यच्च पद्मसरो दृष्टं तत्स्वामिनि तवात्मजः । तापं संसारकांतारपतितानां हरिष्यति ॥ २४३ ॥
सरित्पतिर्यदालोकि भवत्या तनयस्तव । अधृष्यश्चाभिगम्यश्च तदवश्यं भविष्यति ॥ २४४ ॥
विमानं देवि यद्दृष्टं भवत्या भुवनाद्भुतम् । वैमानिकैरपि सुरैस्तत्ते सेविष्यते सुतः ॥ २४५ ॥
रत्नपुंजः स्फुरत्कांतिरीक्षामासे च यत्त्वया । तत्सर्वगुणरत्नानामाकरः स्यात्तवात्मजः ॥ २४६ ॥
यज्ज्वलज्ज्वलनो दृष्टो वक्त्रमध्ये विशंस्त्वया । अन्यतेजस्विनां तेजस्तदा पास्यति ते सुतः ॥ २४७ ॥
चतुर्दशभिरप्येतैः स्वप्नैः स्वामिनि सूच्यते । चतुर्दशरज्जुदघ्ने लोके स्वामी तवात्मजः ॥ २४८ ॥
इति स्वप्नार्थमाख्याय मरुदेवीं प्रणम्य च । क्षणान्निजनिजस्थानान्यगमन्नमरेश्वराः ॥ २४९ ॥
स्वामिन्यपीडैः स्वप्नार्थव्याख्यानसुधयोक्षिता । वसुधेवांबुदैरद्भिः संसिक्ता समुदाश्वसत् ॥ २५० ॥

---

१ चतुर्दशरज्जुप्रमाणे ।

सा तेनाशोभि गर्भेण मेघमालेव भानुना । शुक्तिर्मुक्ताफलेनेव सिंहेनेवाद्रिकंदरा ॥ २५१ ॥
प्रियंगुश्यामवर्णापि मरुदेवा निसर्गतः । शरदा मेघमालेव गर्भेण प्राप पांडुताम् ॥ २५२ ॥
तस्या अभूतां वक्षोजौ विशेषात्पीवरोन्नतौ । स्तन्यपो नौ जगत्स्वामी भावीतीव प्रमोदतः ॥ २५३ ॥
तस्या विशेषतोऽभूतां सविकाशे विलोचने । भगवद्वदनं द्रष्टुं दूरमुत्कंठिते इव ॥ २५४ ॥
नितंबभित्तिः स्वामिन्या वैपुल्यं विपुलाऽपि हि । भेजे वर्षात्यये निम्नगायाः पुलिनभूरिव ॥ २५५ ॥
मंदा सहजभावेनाप्यस्या मंदतराऽभवत् । गतिर्मतंगजस्येव मदावस्थामुपेयुषः ॥ २५६ ॥
तस्यास्तदानीं ववृधे लावण्यश्रीर्विशेषतः । प्रझेवोषसि विदुषो ग्रीष्मे वेलेव वारिधेः ॥ २५७ ॥
त्रैलोक्यैकमहासारं सा गर्भं धारयत्यपि । नाखिद्यत प्रभावोऽयमर्हतां गर्भवासिनाम् ॥ २५८ ॥
उदरे मरुदेवायाः शनैः शनैस्ततः । निगूढं ववृधे गर्भः कंदोऽतरवनेरिव ॥ २५९ ॥
स्वामिन्यभूत्तत्प्रभावाद्विशेषाद्विश्ववत्सला । शीतमप्यंबु शीतं स्यात्क्षिप्तया हिममृत्स्नया[1] ॥ २६० ॥
गर्भावतीर्णभगवत्प्रभावान्नाभिरप्यभूत् । पितृतोऽप्यधिकं मान्यः सर्वेषां युग्मधर्मिणाम् ॥ २६१ ॥
तत्प्रभावाद्विशिष्टानुभावाः कल्पद्रवोऽभवन् । शरत्कालवशादिंदुकराः स्युरधिकश्रियः ॥ २६२ ॥
तत्प्रभावाच्छांततिर्यग्नृवैरा भूरभूच्च सा । सर्वतोऽपि हि शाम्यंति संतापाः प्रावृडागमात् ॥ २६३ ॥
ततो नवसु मासेषु दिनेष्वर्धाष्टमेषु च । गतेषु चैत्रबहुलाष्टम्यामर्धनिशाक्षणे[2] ॥ २६४ ॥
उच्चस्थेषु ग्रहेष्विंदावुत्तराषाढया युते । सुखेन सुषुवे देवी पुत्रं युगलधर्मिणम् ॥ २६५ ॥ युग्मं ॥

१ मृत्तिकया । २ चैत्रकृष्णाष्टम्याम् ।

दिशः प्रसादमासेदुस्तदानीं संमदादिव । लोकः क्रीडापरो जज्ञे द्युवासीव[1] महामुदा ॥ २६६ ॥
जरायुरक्तप्रभृतिकलंकपरिवर्जितः । उपपादशय्योद्भूत इव देवो रराज सः ॥ २६७ ॥
तदाकृतजगन्नेत्रचमत्कारोंऽधकारभित् । बभूव विद्युदुद्योत इवोद्योतो जगत्त्रये ॥ २६८ ॥
किंकरानाहतोऽप्युच्चैर्मेघगंभीरनिःस्वनः । स्वयं द्यौरिव हर्षेण ननाद दिवि दुंदुभिः ॥ २६९ ॥
अवाप्तपूर्विणां सौख्यं नारकाणामपि क्षणम् । समजायत तिर्यङ्नृसुराणां किं पुनस्तथा ॥ २७० ॥
उपभूमि प्रसर्पद्भिर्मंदं मंदं समीरणैः । रजोऽपि निन्ये मेदिन्याः परिचर्याकरैरिव ॥ २७१ ॥
चेलक्षेपं च गंधांबु ववृषे स्तनयित्नुभिः[2] । सिक्तबीजवदुल्लासमाससाद च मेदिनी ॥ २७२ ॥
अथाधोलोकवासिन्यः सद्यः प्रचलितासनाः । दिक्कुमार्यः समाजग्मुरष्टौ तत्सूतिवेश्मनि ॥ २७३ ॥
भोगंकरा भोगवती सुभोगा भोगमालिनी । तोयधारा विचित्रा च पुष्पमाला त्वनिंदिता[3] ॥ २७४ ॥
तत्रादिमं तीर्थकरं तीर्थकृन्मातरं च ताम् । ताभिः प्रदक्षिणीकृत्य वंदित्वा चैवमूचिरे ॥ २७५ ॥
नमस्तुभ्यं जगन्मातर्जगद्दीपप्रदायिके । अष्टौ वयमधोलोकवासिन्यो दिक्कुमारिकाः ॥ २७६ ॥
अवधिज्ञानतो ज्ञात्वा तीर्थकृज्जन्म पावनम् । तन्महिम्नः करणार्थं तत्प्रभावादिहागताः ॥ २७७ ॥
युग्मं ॥
तन्न भेतव्यमित्युक्त्वा देशे पूर्वोत्तरे स्थिताः । चक्रुः स्तंभसहस्रांकं प्राङ्मुखं सूतिकागृहम् ॥ २७८ ॥
ताश्च संवर्त्तवातेन परितः सूतिकागृहम् । आयोजनमपाहार्षुः शर्कराकंटकादिकम् ॥ २७९ ॥

---

१ स्वर्गवासीव । २ मेघैः । ३ सुवत्सा वत्समित्रा च पुष्पमाला च नंदिता इत्यपि पाठः ।

संवर्त्तवातं संहृत्य भगवंतं प्रणम्य च । तदासन्ननिषण्णास्तास्तं गायंत्योऽवतस्थिरे ॥ २८० ॥
तथैवासनकंपेन ज्ञात्वा मेरुगिरिस्थिताः । ऊर्ध्वलोकनिवासिन्योऽप्यष्टेयुर्दिक्कुमारिकाः ॥ २८१ ॥
मेघंकरा मेघवती सुमेघा मेघमालिनी । तोयधारा विचित्रा च वारिषेणा बलाहिका ॥ २८२ ॥
जिनं जिनजननीं च नत्वा स्तुत्वा तथैव ताः । नभस्यवन्नभस्यभ्रपटलं द्राग्विचक्रिरे ॥ २८३ ॥
ताभिः सुगंधितोयेनायोजनं वेश्मपार्श्वतः । समंततो रजोऽशामि कौमुद्येव तमस्ततिः ॥ २८४ ॥
वसुंधरां वितन्वाना नानालेख्यमयीमिव । जानुदघ्नीं पंचवर्णैः पुष्पैर्वृष्टिं वितेनिरे ॥ २८५ ॥
तथैव तीर्थनाथस्य गायंत्यो निर्मलान् गुणान् । हर्षप्रकर्षशालिन्यः स्थाने तस्थुर्यथोचिते ॥ २८६ ॥
दिक्कुमार्योऽष्ट पौरस्त्यरुचकाद्रिस्थिता अपि । विमानैर्मनसा सार्द्धं स्पर्द्धमानैरिवाययुः ॥ २८७ ॥
ताश्च नंदोत्तरानंदे आनंदानंदिवर्द्धने । विजया वैजयंती च जयंती चापराजिता ॥ २८८ ॥
स्वामिनं मरुदेवां च नत्वाख्याय च पूर्ववत् । गायंत्यो मंगलान्यस्थुः ताः प्राग्दर्पणपाणयः ॥ २८९ ॥
अपाच्यरुचकाद्रिस्थास्तावंत्यो दिक्कुमारिकाः । तत्राययुः प्रमोदेन प्रमोदेनेव नोदिताः ॥ २९० ॥
समाहारा सुप्रदत्ता सुप्रबुद्धा यशोधरा । लक्ष्मीवती शेषवती चित्रगुप्ता वसुंधरा ॥ २९१ ॥
जिननाथं तदंबां च नत्वा प्राग्वन्निगद्य च । भृंगारपाणयस्तस्थुर्गायंत्यो दक्षिणेन ताः ॥ २९२ ॥
प्रत्यग्रुचकशैलस्था अप्यष्टौ दिक्कुमारिकाः । आययुस्त्वरयाऽन्योऽन्यमिव भक्त्या जिगीषवः ॥ २९३ ॥
इलादेवी सुरादेवी पृथिवी पद्मवत्यपि । एकनासाऽनवमिका भद्राशोकेति नामतः ॥ २९४ ॥

१ नभस्यवत् भाद्रपदमासवत् । २ जानुप्रमाणाम् ।

नत्वा जिनं जिनांबां च विज्ञपय्य च पूर्ववत् । तस्थुर्व्यजनहस्तास्ता गायंत्यः पश्चिमेन तु ॥ २९५ ॥
उदग्रुचकतोऽप्येयुर्दिक्कुमार्योऽष्ट वेगतः । वातैरिव रथीभूतैरमरैराभियोगिकैः ॥ २९६ ॥
अलंबुशा मिश्रकेशी पुंडरीका च वारुणी । हासा सर्वप्रभा चैव श्रीर्ह्रीरित्यभिधानतः ॥ २९७ ॥
नत्वा जिनं तदंबां च कृत्यं चाख्याय पूर्ववत् । गायंत्य उत्तरेणास्थुस्तास्तु चामरपाणयः ॥ २९८ ॥
एयुर्विदिग्रुचकाद्रेश्चतस्रो दिक्कुमारिकाः । चित्रा चित्रकनका सतेरा सौत्रामणी तथा ॥ २९९ ॥
नत्वा जिनं जिनांबां च विज्ञपय्य तथैव हि । गायंत्योऽस्थुर्दीपहस्ता ईशानादिविदिक्षु ताः ॥ ३०० ॥
रुचकद्वीपतोऽप्येयुश्चतस्रो दिक्कुमारिकाः । रूपा रूपांशिका चापि सुरूपा रूपकावती ॥ ३०१ ॥
चतुरंगुलवर्जं ता नाभिनालं जगत्पतेः । न्यकृंतन्विवरं चक्रुस्तं च तत्र निचिक्षिपुः ॥ ३०२ ॥
विवरं पूरयामासुर्वज्रै रत्नैश्च मंक्षु[1] ताः । दूर्वायाः पीठिकाबंधं तस्योपरि च चक्रिरे ॥ ३०३ ॥
जिनजन्मगृहात्पूर्वदक्षिणोत्तरदिक्षु च । विचक्रुस्त्रीणि कदलीगृहाणि श्रीगृहाणि[2] ताः ॥ ३०४ ॥
प्रत्येकमेषां मध्ये च ताः सिंहासनभूषितम् । विचक्रिरे चतुःशालं विशालं स्वविमानवत् ॥ ३०५ ॥
ता दक्षिणचतुःशाले जिनं न्यस्य करांजलौ । निन्युस्तन्मातरं चाप्तचेटीवद्दत्तबाहवः ॥ ३०६ ॥
सिंहासने निवेश्योभावभ्यानंजुः सुगंधिना । ता लक्षपाकतैलेन जरत्संवाहिका[3] इव ॥ ३०७ ॥
अमंदामोदनिस्यंदप्रमोदितदिशो भृशम् । उभावुद्वर्तयामासुर्दिव्येनोद्वर्तनेन ताः ॥ ३०८ ॥
नीत्वा ताः प्राक्चतुःशाले न्यस्य सिंहासने च तौ । स्नपयामासुरंभोभिः स्वमनोभिरिवामलैः ॥ ३०९ ॥

---

१ मंक्षु शीघ्र । २ श्रीगृहाणि लक्ष्मीगृहाणि । ३ वृद्धसंवाहिका इव ।

गंधकाषायवासोभिस्तदंगान्यमृजन्नथ । गोशीर्षचंदनरसैश्चर्चयामासुराशु ताः ॥ ३१० ॥
तान्याभामोचयामासुर्देवदूष्ये च वाससी । विद्युदुद्योतसध्र्यंचि[1] ताश्चित्राभरणानि च ॥ ३११ ॥
अथोत्तरचतुःशालीं नीत्वा सिंहासनोपरि । न्यषादयन् भगवंतं भगवन्मातरं च ताः ॥ ३१२ ॥
गोशीर्षचंदनैधांसि द्राक्क्षुद्रहिमवद्गिरेः । ताः समानाययामासुरमरैराभियोगिकैः ॥ ३१३ ॥
उत्पाद्यारणिदारुभ्यां वह्निमह्नाय तास्ततः । होमं वितेनुर्गोशीर्षचंदनैरेधसात्कृतैः ॥ ३१४ ॥
रक्षापोटलिकां वह्निभस्मना तेन ता व्यधुः । तयोर्महामहिम्नोरप्यासां भक्तिक्रमः स हि ॥ ३१५ ॥
पर्वतायुर्भवेत्युच्चैरुक्त्वा कर्णांतिके विभोः । ताः समास्फालयामासुर्मिथः[2] पाषाणगोलकैः ॥ ३१६ ॥
सूतिकाभवने तस्मिन् मरुदेवीं विभुं च ताः । शय्यागतौ विधायास्थुर्गायंत्यो मंगलान्यथ ॥ ३१७ ॥
तदा शाश्वतघंटानां स्वर्गेषु युगपद् ध्वनिः । बभूव लग्नवेलायामातोद्यानामिवोच्चकैः ॥ ३१८ ॥
वासवानामासनानि शैलचूलाचलान्यपि । चकंपिरे तदानीं च हृदयानीव संभ्रमात् ॥ ३१९ ॥
ततश्च सौधर्मपतिः कोपाटोपारुणेक्षणः । ललाटपट्टघटितभ्रकुटीविकटाननः ॥ ३२० ॥
अधरं स्फोरयन्नंतः क्रोधवह्नेः शिखामिव । उच्चसन्नंघ्रिणैकेन स्थिरीकर्त्तुमिवासनम् ॥ ३२१ ॥
कस्योत्क्षिप्तं कृतांतेन पत्रमद्येति विब्रुवन् । आदित्सते स्म दंभोलिं[3] स्वशौर्यामर्षानलानिलम् ॥ ३२२ ॥

त्रिभिर्विशेषकम् ।

एवं पुरंदरं प्रेक्ष्य क्रुद्धकेशरिसोदरम् । मूर्त्तो मान इवानीकपतिर्नत्वा व्यजिज्ञपत् ॥ ३२३ ॥

१ विद्युत्प्रकाशसमानानि । २ मिथः पाषाणगोलकैः समास्फालन तद्वृद्धाङ्गनाचारोऽद्यापि बहुदेशेषु प्रवर्त्तते । ३ दम्भोलिं वज्र ।

किमावेशः स्वयं स्वामिन् पदातौ मयि सत्यपि । समादिश जगन्नाथ कं मथ्नामि तव द्विपम् ॥ ३२४ ॥
ततो मनःसमाधानमाधाय विबुधाधिपः । प्रयुज्यावधिमज्ञासीज्जन्मादिमजिनप्रभोः ॥ ३२५ ॥
मुदा विगलितक्रोधसंवेगस्तत्क्षणादभूत् । शांतदावानलो वृष्ट्या सानुमानिव वासवः ॥ ३२६ ॥
धिग्मया चिंतितमिदं मिथ्या दुष्कृतमस्तु मे । इति ब्रुवाणो गीर्वाणाग्रणीः सिंहासनं जहौ ॥ ३२७ ॥
गत्वा पदानि सप्ताष्टान्युत्तमांगे निधाय च । द्वितीयरत्नमुकुटश्रीविश्राणकमंजलिम्[1] ॥ ३२८ ॥
जानूत्तमांगकमलसंस्पृष्टपृथिवीतलः । नत्वा रोमांचितोऽर्हंतमिति स्तोतुं प्रचक्रमे ॥ ३२९ ॥ युग्मं ॥
तुभ्यं नमस्तीर्थनाथ सनाथीकृतविष्टप । कृपारससरिन्नाथ नाथ श्रीनाभिनंदन ॥ ३३० ॥
मत्यादिभिस्त्रिभिर्ज्ञानैः सहोत्थैर्नाथ शोभसे । नंदनादिभिरुद्यानैरिव मेरुमहीधरः ॥ ३३१ ॥
देवेदं भारतं वर्ष दिवोऽप्यद्यातिरिच्यते । त्रैलोक्यमौलिरत्नेन यदलंक्रियते त्वया ॥ ३३२ ॥
असौ त्वज्जन्मकल्याणमहोत्सवपवित्रितः । आसंसारं जगन्नाथ वंद्यस्त्वमिव वासरः ॥ ३३३ ॥
नारकाणामपि सुखं जज्ञे त्वज्जन्मपर्वणा । अर्हतामुदयः केषां न स्यात्संतापहारकः ॥ ३३४ ॥
जंबूद्वीपस्य भरतक्षेत्रे नष्टो निधानवत् । त्वदाज्ञावीजकेनातः परं धर्मः प्रकाशताम् ॥ ३३५ ॥
त्वत्पादौ प्राप्य संसारं तरिष्यंति न केऽधुना । अयोऽपि[2] यानपात्रस्थं पारं प्राप्नोति वारिधेः ॥ ३३६ ॥
कल्पवृक्ष इवावृक्षे नदीस्रोतो मराविव । भगवन्नवतीर्णोऽसि लोकपुण्येन भारते ॥ ३३७ ॥
भगवंतमिति स्तुत्वा प्रथमस्वर्गनायकः । पदात्यनीकाधिपतिं नैगमेषिणमादिशत् ॥ ३३८ ॥

---

१ विश्राणक दायक । २ लोहोपि ।

जंबूद्वीपस्य भरतदक्षिणार्द्धस्य मध्यमे । भूमिभागे कुलकृतो नाभेः पत्न्यां श्रियां निधिः ॥ ३३९ ॥
नंदनो मरुदेवानां जज्ञे प्रथमतीर्थकृत् । आहूयंतां सुराः सर्वे तज्जन्मस्नात्रहेतवे ॥ ३४० ॥ युग्मम् ॥
ततश्च योजनपरिमंडलामद्भुतस्वनाम् । स त्रिरुल्लालयन् घंटां सुघोषाख्यामवादयत् ॥ ३४१ ॥
सर्वापरविमानानां नेदुर्घंटाः सुघोषया । समं मुखरगायंत्या गायिन्य इव पङ्गाः ॥ ३४२ ॥
घंटानां निःस्वनस्तासां दिग्मुखोत्थैः प्रतिस्वनैः । सूनुभिस्तत्प्रतिच्छंदैः सतां कुलमिवावृधत् ॥ ३४३ ॥
द्वात्रिंशतिविमानानां लक्षेषु स समुच्छलन् । तालुनीवानुरणनरूपः शब्दो व्यजृंभत ॥ ३४४ ॥
देवाः प्रमत्तव्यासक्तास्तेन शब्देन मूर्छिताः । किमेतदिति संभ्रांताश्चक्रिरे सावधानताम् ॥ ३४५ ॥
उद्दिश्य तानवहितान् सेनानीः सोऽथ वज्रिणः । वचसा मेघनिर्घोषगंभीरेणाभ्यधादिति ॥ ३४६ ॥
भोभो देवाः समस्तान् वः सदेव्यादिपरिच्छदान् । इत्यादिशत्यनुल्लंघ्यशासनः पाकशासनः ॥ ३४७ ॥
जंबूद्वीपस्थभरतदक्षिणार्द्धस्य मध्यतः । नाभेः कुले कुलकृतो जज्ञे प्रथमतीर्थकृत् ॥ ३४८ ॥
तत्र जन्मनि कल्याणमहोत्सवविधित्सया । गंतुं त्वरध्वमस्मद्वत् कृत्यं नातःपरं परम् ॥ ३४९ ॥
प्रत्यर्हतं रागतः केप्यभिवातमिवैणकाः । केऽपि शक्राज्ञया कृष्टा [3]अयस्कांतेन लोहवत् ॥ ३५० ॥
दारैरुल्लासिताः केऽपि यार्दांसीव नदीरयैः । केचित्सुहृद्भिराकृष्टा गंधागंधवहैरिव ॥ ३५१ ॥
एयुर्विमानैरुचिरैर्वाहनैरपरैरपि ॥ द्यामन्यामिव कुर्वाणा गीर्वाणाः शक्रसंनिधौ ॥ ३५२ ॥

त्रिभिर्विशेषकम् ॥

---

१ प्रथमगायन्त्या । २ अवहितान् सावधानान् । ३ अयस्कान्तो लोहचुम्बकः । ४ यादांसि जलजन्तव ।

आदिशत्पालकं नाम वासवोप्याभियोगिकम् । असंभाव्यप्रतिमानं विमानं क्रियतामिति ॥ ३५३ ॥
तत्कालं पालकोऽपीशनिदेशपरिपालकः । रत्नस्तंभसहस्रांशुपूरपल्लविताम्बरम् ॥ ३५४ ॥
गवाक्षैरक्षिमदिव दीर्घैर्दोष्मदिव ध्वजैः । वेदीभिर्दंतुरमिव कुंभैः पुलकभागिव ॥ ३५५ ॥
पंचयोजनशत्युच्चं विस्तारे लक्षयोजनम् । इच्छानुमानगमनं विमानं पालको व्यधात् ॥ ३५६ ॥
त्रिभिर्विशेषकम् ॥
आसंस्तस्य विमानस्य तिस्रः सोपानपंक्तयः । गिरेर्हिमवतो नद्य इव कांतितरंगिताः ॥ ३५७ ॥
तासां पुरस्ताद्विविधवर्णरत्नमयानि च । तोरणानि त्रिधाभूतशक्रधन्वश्रियं दधुः ॥ ३५८ ॥
चंद्रबिंबवदादर्शवदालिंगिमृदंगवत् । दीप[1]मल्लीवदस्यांतः समवृत्ता रराज भूः ॥ ३५९ ॥
न्यस्तरत्नशिलारश्मिपटलैर्विरलेतरैः । भित्तिचित्रोपरितिर[2]स्करणीरिव सा न्यधात् ॥ ३६० ॥
अभूत्तन्मध्यतः प्रेक्षामंडपो रत्ननिर्मितः । अप्सरोभिर्विशेषाभिः पांचा[3]लीभिर्विभूषितः ॥ ३६१ ॥
मंडपस्य च तस्यांतश्चारुमाणिक्यनिर्मिता । बभूव पीठिकोन्निद्रपंकजस्येव कर्णिका ॥ ३६२ ॥
चकासामास वि[4]ष्कंभायामयोरष्टयोजना । सा चतुर्योजना पिंडे शय्येव मघव[5]श्रियः ॥ ३६३ ॥
रेजे तस्या उपर्येकं रत्नसिंहासनं महत् । अशेषज्योतिषां सारं पिंडयित्वेव निर्मितम् ॥ ३६४ ॥
तस्योपरिष्टाद्विजयदूष्यं दूष्येतरश्चयभात्। विचित्ररत्नखचितं निचितांबरमंशुभिः ॥ ३६५ ॥

१ दीपमल्लीवत् श्रेष्ठदीपिकावत् । २ तिरस्करणीः जवनिकाः । ३ पाञ्चालीभिः पुत्तलिकाभिः । ४ विष्कम्भो विस्तारः । ५ इन्द्रश्रियः ।

तस्य मध्ये कर्णं इवेभस्य वज्रांकुशोऽशुभत् । लीलादोलानिभं लक्ष्म्या मुक्तादाम च कुंभिकम् ॥३६६॥
तदर्धायामिभिर्मुक्तादामभिश्चार्धकुंभिकैः । पार्श्वगैर्दाम रेजे तद्गंगा नद्यंतरैरिव ॥ ३६७ ॥
तत्संस्पर्शसुखालोभादिव स्खलितगामिभिः । मंदं मंदमदोद्यंत तानि प्राच्यादिवायुभिः ॥ ३६८ ॥
तदंतः संचरन् वायुश्चक्रे श्रुतिसुखं स्वरम् । चाटुकार इवेंद्रस्य गायन्निव यशोऽमलम् ॥ ३६९ ॥
तत्सिंहासनमाश्रित्य वायव्योत्तरयोर्दिशोः । दिशि चोत्तरपूर्वस्यां सामानिकदिवौकसाम् ॥ ३७० ॥
चतुरशीतिसहस्रसंख्यानामभवन् क्रमात् । भद्रासनानि तावंति द्युश्रीणां मुकुटा इव ॥ ३७१ ॥ युग्मं
अष्टानामग्रदेवीनां प्राच्यामष्टासनानि तु । सदृशाकारधारीणि सोदराणीव जज्ञिरे ॥ ३७२ ॥
दिशि दक्षिणपूर्वस्यामभ्यंतरसभासदाम् । भद्रासनसहस्राणि द्वादशाऽऽसन् दिवौकसाम् ॥ ३७३ ॥
आसनानि दक्षिणस्यामासन्मध्यसभासदाम् । चतुर्दशानां दिविषत्सहस्राणां क्रमेण तु ॥ ३७४ ॥
दक्षिणपश्चिमायां तु देवानां बाह्यपर्षदः । षोडशानां सहस्राणामासीदासनधोरणी ॥ ३७५ ॥
दिशि प्रतीच्यां सप्तानामनीकपतिनाकिनाम् । सप्तासनान्येकबिम्बपतितानीव रेजिरे ॥ ३७६ ॥
चतुरशीतिःसहस्राण्यासनान्यात्मरक्षिणाम् । भानीव मेरुं परितः शक्रं प्रतिदिशं बभुः ॥ ३७७ ॥
परिपूर्णं विमानं तद्विरचय्याभियोगिकाः । देवा विज्ञपयामासुः स्वामिने त्रिदिवौकसाम् ॥ ३७८ ॥
पुरंदरोऽपि तत्कालं विचक्रे रूपमुत्तरम् । नैसर्गिकी हि भवति द्युसदां कामरूपिता ॥ ३७९ ॥
महिषीभिः सहाष्टाभिर्दिक्श्रीभिरिव वासवः । गंधर्वनाट्यानीकाभ्यां दृश्यमानकुतूहलः ॥ ३८० ॥

१ कुम्भिक मौक्तिकहारविशेषः । २ स्वाभाविकी ।

ततः प्रदक्षिणीकुर्वन् पूर्वसोपानवर्त्मना । आरुरोह विमानं तन्निजं मानमिवोन्नतम् ॥ ३८१ ॥ युग्मं ॥
सहस्राक्षः सहस्रांग इव माणिक्यभित्तिषु । संक्रांतमूर्तिरध्यास्त प्राङ्मुखः स्वं तदासनम् ॥ ३८२ ॥
शक्ररूपांतराणीव शक्रसामानिकास्तदा । आरुह्योदीच्यसोपानैर्यथासनमुपाविशन् ॥ ३८३ ॥
प्रविश्यापाच्यसोपानपंक्त्यान्ये च दिवौकसः । स्वस्वासनेषु न्यषदन् स्वाम्यग्रे नासनात्ययः[1] ॥ ३८४ ॥
सिंहासननिषण्णस्य पौलोमीभर्तुरग्रतः । दर्पणप्रभृतीन्यष्टमंगलान्यष्ट रेजिरे ॥ ३८५ ॥
शुशुभे शशभृत्पांडु पुंडरीकं बिडौजसः । हंसाविवोपसर्पंतौ धूयमानौ च चामरौ ॥ ३८६ ॥
सहस्रयोजनोत्सेधो विमानाग्रे हरिध्वजः । अशोभत पताकाभिर्निर्झरैरिव पर्वतः ॥ ३८७ ॥
ततः परिवृतो देवैः शक्रसामानिकादिभिः । कोटिसंख्यैरराजिष्ट स्रोतोभिरिव सागरः ॥ ३८८ ॥
विमानैरन्यदेवानां विमानं तस्य वेष्टितम् । रुरुचे परिधिचैत्यैर्[2] मूलचैत्यमिवोच्चकैः ॥ ३८९ ॥
अन्योन्यं चारुमाणिक्यभित्तिषु प्रतिबिंबितैः । विमानैर्गर्भितानीव विमानानि चकासिरे ॥ ३९० ॥
मागधानां जयजयध्वानैर्दुंदुभिनिःस्वनैः । गंधर्वानीकनाट्यानीकातोद्यध्वनितैरपि ॥ ३९१ ॥
दिग्मुखप्रतिफलितैर्द्यां दारयदिवाभितः । सौधर्ममध्यतोऽचालीत्तद्विमानं हरीच्छया[3] ॥ ३९२ ॥ युग्मं ॥
सौधर्मोत्तरतस्तिर्यग्मार्गेण च तदुत्तरत् । अलङ्घि जंबूद्वीपस्य पिधानायेव भाजनम् ॥ ३९३ ॥
हस्तियायिन्नितो याहि न मे सिंहः सहिष्यते । सादिन्नपसर[4] क्रुद्धः कासरो वाहनं मम ॥ ३९४ ॥
मृगवाहन माभ्यागा नन्वहं द्वीपिवाहनः । सर्पध्वज व्रजेतस्त्वं पश्य मे गरुडं ध्वजे ॥ ३९५ ॥

---

१ आसनोल्लघनम् । २ बहिर्मण्डलस्थितचैत्यैः । ३ हरीच्छया इन्द्रेच्छया । ४ सादिन् अश्वारोह ।

किं पतस्यंतरे मे त्वं गतिविघ्नकरः पुरः । विमानं घट्टयसि भोः स्वविमानेन किं मम ॥ ३९६ ॥
किं पश्चात्पतितोऽस्येहि शीघ्रं याति सुराधिपः । मा कुप्य घर्षणेनाद्य संमर्दः खलु पर्वणि ॥ ३९७ ॥
सौधर्मकल्पदेवानां देवेंद्रमपसर्पताम् । एवमौत्सुक्यजन्माभून्मिथः कोलाहलो महान् ॥ ३९८ ॥
पञ्चभिः कुलकम् ।

महाध्वजपटं रेजे तद्विमानं नभस्तलात् । अंभोधिमध्यशिखराद्यानपात्रमिवोत्तरत् ॥ ३९९ ॥
नक्षत्रचक्रमध्येन मध्येडुममिव द्विपः । मती( नती ) कुर्वदिव दिवं मेघमंडलपंकिलाम् ॥ ४०० ॥
द्वीपांभोधीनसंख्यातान् वेगेनोल्लंघ्य वायुवत् । अधिनंदीश्वरद्वीपं तद्विमानं समापतत् ॥ ४०१ ॥ युग्मं ॥
तत्र दक्षिणपूर्वस्मिन् गत्वा रतिकराचले । संचिक्षेप विमानं तदिंद्रो ग्रंथं सुधीरिव ॥ ४०२ ॥
समुल्लंघ्य समुल्लंघ्य ततोऽर्वाग् द्वीपसागरान् । ततोऽपि संक्षिपंस्तच्च विमानं क्रमयोगतः ॥ ४०३ ॥
जंबूद्वीपाभिधे द्वीपे भरतार्द्धे तु दक्षिणे । आदितीर्थकृतो जन्मभवनं प्राप वासवः ॥ ४०४ ॥ युग्मं ॥
अथ तेन विमानेन स्वामिनः सूतिकागृहम् । स प्रदक्षिणयामास सुमेरुमिव भास्करः ॥ ४०५ ॥
उदक्प्राच्यां तु ककुभि स पूर्वककुभः प्रभुः । अस्थापयत्तद्विमानं निधानं धामकोणवत् ॥ ४०६ ॥
ततो विमानादुत्तीर्य मानादिव महामुनिः । प्रसन्नमानसः शक्रो जगाम स्वामिसन्निधौ ॥ ४०७ ॥
प्रभुमालोकमात्रेऽपि प्रणनामामराग्रणीः । उपायनं हि प्रथमं प्रणामः स्वामिदर्शने ॥ ४०८ ॥
ततः प्रदक्षिणीकृत्य भगवंतं समातरम् । प्रणनाम पुनः शक्रो भक्तौ न पुनरुक्तता ॥ ४०९ ॥
मूर्ध्नि बद्धांजलिर्मूर्ध्नाभिषिक्तस्त्रिदिवौकसाम् । भक्तिमान् स्वामिनीमेवं मरुदेवामुवाच सः ॥ ४१० ॥

कुक्षौ रत्नधरे देवि जगद्दीपप्रदायिके । नमस्तुभ्यं जगन्मातस्त्वं धन्या पुण्यवत्यसि ॥ ४११ ॥
त्वमेवामोघजन्मासि त्वमेवोत्तमलक्षणा । पुत्रिणीषु त्वमेवासि पवित्रा भुवनत्रये ॥ ४१२ ॥
धर्मोद्धरणधौरेयश्छन्नमोक्षाध्वदर्शकः । प्रथमस्तीर्थनाथोऽयं भगवान् सुषुवे यया ॥ ४१३ ॥
अहं सौधर्मदेवेन्द्रो देवि त्वत्तनुजन्मनः । अर्हतो जन्ममहिमोत्सवं कर्तुमिहागमम् ॥ ४१४ ॥
भवत्या नैव भेतव्यमित्युदीर्य्य दिवस्पतिः । अपस्वापनिकां[1] देव्यां मरुदेव्यां विनिर्ममे ॥ ४१५ ॥
नाभिसूनोः प्रतिछंदं विदधे मघवा ततः । देव्याः श्रीमरुदेवायाः पार्श्वे तं च न्यवेशयत् ॥ ४१६ ॥
स चक्रे पंचधात्मानं पंचशक्रास्ततोऽभवन् । तस्यार्हा स्वामिनो भक्तिर्नैकांगैः कर्तुमीश्यते ॥ ४१७ ॥
एकः संक्रंदनस्तत्र पुरोभूय प्रणम्य च । भगवन्ननुजानीहीत्युदित्वा प्रश्रयाश्रितः[2] ॥ ४१८ ॥
गोशीर्षचंदनाक्ताभ्यां पाणिभ्यां भुवनेश्वरम् । मूर्त्तिस्थमिव कल्याणं कल्याणीभक्तिराददे ॥ ४१९ ॥
जगत्तापापनोदैकातपत्रस्य जगत्पतेः । आतपत्रं दधौ मूर्द्धन्येकः शक्रस्तु पृष्ठगः ॥ ४२० ॥
स्वामिनः पार्श्वयोरन्यौ बाहुदंडाविव स्थितौ । बिभरांचक्रतुश्चारुचामरौ चामरेश्वरौ ॥ ४२१ ॥
दंभोलिदंडं बिभ्राणो वल्गन् द्वास्थाग्रणीरिव । अग्रेसरः शुनासीरो[3] बभूवान्यो जगत्पतेः ॥ ४२२ ॥
वृताः सुरैर्जयजयेत्येकरावीकृतांबरैः । उत्पेतुरंबरेणेन्द्रा अंबरामलचेतसः ॥ ४२३ ॥
उत्कंठितानां देवानां निपेतुर्भगवत्तनौ । सुधासरस्यां तृषिताध्वगानामिव दृष्टयः ॥ ४२४ ॥
प्रभोस्तदद्भुतं रूपं द्रष्टुं पृष्ठा दिवौकसः । पृष्ठवर्त्तीनि नेत्राणि कामयामासुरात्मनः ॥ ४२५ ॥

---

१ तदाख्या निद्रा । २ विनयसहितः । ३ इन्द्रः ।

अतृप्ताः स्वामिनं द्रष्टुममराः पारिपार्श्वकाः । नाशकन्नन्यतो नेतुं नयने स्तंभिते इव ॥ ४२६ ॥
अनुगास्तु सुरा द्रष्टुं प्रभुमग्रे यियासवः । पर्य्यस्यंतो न हि निजं मित्रस्वाम्याद्यजीगणन् ॥ ४२७ ॥
हृदयांतरिवार्हतं हृदयद्वारि धारयन् । दिवौकसामधिपतिः प्राप मेरुमहीधरम् ॥ ४२८ ॥
तत्रांतः पांडुकवनं चूलिकां दक्षिणेन तु । अतिपांडुकम्बलायां[1] शिलायाममलत्विषि ॥ ४२९ ॥
सिंहासनेऽर्हत्स्नात्रार्हे निजांकस्थापितप्रभुः । सहर्षं न्यषदत्पूर्वाभिमुखः पूर्वदिक्पतिः ॥ ४३० ॥ युग्मं ॥
अत्रांतरे महाघोषाघंटानादप्रबोधितैः । अष्टाविंशतिविमानलक्षवास्यमरैर्वृतः ॥ ४३१ ॥
ऐशानकल्पाधिपतिः शूलभृद्वृषवाहनः । पुष्पकाभियोग्यकृते विमाने पुष्पके स्थितः ॥ ४३२ ॥
दक्षिणेनैशानकल्पमुत्तीर्णस्तिर्यगध्वना । अधिनंदीश्वरमुदक्पूर्वे रतिकराचले ॥ ४३३ ॥
विमानमुपसंहृत्य सौधर्मेंद्र इव द्रुतम् । आगात्सुमेरुशिरसि भक्त्या भगवदंतिकम् ॥ ४३४ ॥
चतुर्भिः कलापकम् ॥

विमानद्वादशलक्षीवासिभिस्त्रिदशैर्वृतः । सनत्कुमारः सुमनोविमानस्थः स चाययौ ॥ ४३५ ॥
विमानलक्षाष्टकजैर्माहेंद्रोऽप्यन्वितः सुरैः । श्रीवत्सेन विमानेन मनसैवाययौ द्रुतम् ॥ ४३६ ॥
चतुर्विमानलक्षस्थैर्वृतो ब्रह्माऽपि नाकिभिः । नंद्यावर्तविमानेन स्वामिनोऽभ्यर्णमाययौ ॥ ४३७ ॥
आगाद्विमानपंचाशत्सहस्रीवासिभिः सुरैः । कामगवविमानेन लांतकोऽपि जिनांतिकम् ॥ ४३८ ॥
चत्वारिंशत्सहस्राणां विमानानां सुरैर्वृतः । प्रीतिंगमविमानेन शुक्रोऽगान्मेरुमूर्द्धनि ॥ ४३९ ॥

१ तदाख्याया शिलाया ।

सहस्रारः सह सुरैः षड्विमानसहस्रजैः । मनोरमविमानेनाययावुपजिनेश्वरम् ॥ ४४० ॥
विमलेन विमानेनानतप्राणतवासवः । चतुर्विमानशतजैः सुरैः सह समाययौ ॥ ४४१ ॥
आरणाच्युतराजोऽपि विमानत्रिशतैः सुरैः । तत्रागात्सर्वतोभद्रविमानेनातिरंहसा ॥ ४४२ ॥
रत्नप्रभाया मेदिन्या बाहल्यांतर्निवासिनाम् । भवनव्यंतरेन्द्राणामासनान्यचलंस्तदा ॥ ४४३ ॥
पुर्यां चामरचंचायां सुधर्मायां च पर्षदि । सिंहासने च चमरे निषण्णश्चमरासुरः ॥ ४४४ ॥
जिनजन्मावधेर्ज्ञात्वा लोकज्ञप्त्यै द्रुमेण च । पत्त्यनीकाधिपेनौघस्वरां घंटामवादयत् ॥ ४४५ ॥ युग्मं ॥
चतुःषष्ट्या सहस्रैः स सामानिकदिवौकसाम् । त्रयस्त्रिंशत्रायस्त्रिंशैश्चतुर्भिर्लोकपालकैः ॥ ४४६ ॥
पंचभिश्चाग्र्यदेवीभिः पर्षद्भिस्तिसृभिस्तथा । सप्तभिश्च महानीकैस्तदधीशैश्च सप्तभिः ॥ ४४७ ॥
प्रतिदिशं चतुःषष्ट्या सहस्रैरात्मरक्षिणाम् । वृतो परैरप्यसुरः कुमारैः परमर्द्धिभिः ॥ ४४८ ॥
पंचयोजनशत्युच्चं महाध्वजविभूषितम् । पंचाशतं सहस्राणि योजनानि तु विस्तृतम् ॥ ४४९ ॥
विमानमाभि योग्येन सद्यो देवेन निर्मितम् । अधिरुह्याचलत्स्वामिजन्मोत्सवविधित्सया ॥ ४५० ॥
पंचभिः कुलकं ॥
संक्षिप्य शक्रवन्मार्गे विमानं चमरासुरः । जगाम मेरुशिखरं स्वाम्यागमपवित्रितम् ॥ ४५१ ॥
बलिश्च बलिचंचाया नगर्या असुरेश्वरः । घंटां घोषयता तारं प्राग्महौघस्वराभिधाम् ॥ ४५२ ॥
महाद्रुमेण सेनान्याहूतैः सामानिकैः सुरैः । षष्ट्या सहस्रैस्तेभ्योऽगरक्षकैश्च चतुर्गुणैः ॥ ४५३ ॥

---

१ तदाख्येन पत्त्यनीकाधिपेन ।

त्रायस्त्रिंशादिभिश्चापि वृतश्चमरवत्सुरैः । जगामामंदमानंदमंदिरं मंदराचलम् ॥ ४५४ ॥
त्रिभिर्विशेषकम् ॥

नागेंद्रो धरणो मेघस्वराघंटाप्रताडनात् । पत्तिसेनाधिपतिना भद्रसेनेन बोधितैः ॥ ४५५ ॥
षट्सामान्यकसहस्र्यात्मरक्षैस्तच्चतुर्गुणैः । षड्भिश्च पट्टदेवीभिर्वृतोऽन्यैरपि पन्नगैः ॥ ४५६ ॥
योजनानां सहस्राणि पंचविंशानि विस्तृतम् । सार्द्धद्वियोजनशतीतुंगेंद्रध्वजभूषितम् ॥ ४५७ ॥
विमानरत्नमारुह्य भगवद्दर्शनोत्सुकः । मंदराचलमूर्द्धानमाससाद क्षणादपि ॥ ४५८ ॥
चतुर्भिः कलापकं ॥

भूतानंदोऽपि नागेंद्रो घंटां मेघस्वरां घ्नता । पत्त्यनीकेशदक्षेणाहूतैः सामानिकादिभिः ॥ ४५९ ॥
वृतो विमानमारुह्याभियोगिकसुरोद्भवम् । जगाम त्रिजगन्नाथसनाथं मंदराचलम् ॥ ४६० ॥ युग्मं ॥
इंद्रो विद्युत्कुमाराणां हरिर्हरिसहस्तथा । सुपर्णानां वेणुदेवो वेणुदारी च वासवौ ॥ ४६१ ॥
इंद्रावग्निकुमाराणामग्निशिखाग्निमाणवौ । समीरणकुमाराणां वेलंबाख्यप्रभंजनौ ॥ ४६२ ॥
स्तनितानां सुघोषश्च महाघोषश्च नायकौ । तथोदधिकुमाराणां जलकांतजलप्रभौ ॥ ४६३ ॥
पूर्णोऽवशिष्टश्च द्वीपकुमाराणां पुरंदरौ । तथैव दिक्कुमाराणाममितामितवाहनौ ॥ ४६४ ॥
व्यंतरेषु कालमहाकालौ पिशाचवासवौ । स्वरूपः प्रतिरूपश्च तथा भूतपुरंदरौ ॥ ४६५ ॥
यक्षराजौ पूर्णभद्रो माणिभद्रश्च नामतः । इंद्रौ भीममहाभीमौ नामानौ रक्षसां पुनः ॥ ४६६ ॥
किंनरः किंपुरुषश्च किंनराणामधीश्वरौ । तथा सत्पुरुषमहापुरुषौ किंपुरूषपौ ॥ ४६७ ॥

अतिकायमहाकायौ महोरगपुरंदरौ । गीतरतिर्गीतयशा गंधर्वाणां तु वासवौ ॥ ४६८ ॥
तथैवाप्रज्ञप्तिपंचप्रज्ञप्त्यादीनां षोडश । व्यंतराष्टनिकायानां वज्रिणः समुपाययुः ॥ ४६९ ॥

नवभिः कुलकं ॥

तत्राप्रज्ञप्तीनामिंद्रौ सन्निहितः समानकः । धाता विधाता च पंचप्रज्ञप्तीनां त्वधीश्वरौ ॥ ४७० ॥
ऋषिवादितकानां च ऋषिश्च ऋषिपालकः । तथा भूतवादितानामीश्वरो हि महेश्वरः ॥ ४७१ ॥
क्रंदितानां पुनरिंद्रौ सुवत्सकविशालकौ । महाक्रंदितकानां तु हासहासरती हरी ॥ ४७२ ॥
कुष्मांडानां पुनः श्वेतमहाश्वेतपुरंदरौ । पवकपवकपती पावकानां तु वासवौ ॥ ४७३ ॥
ज्योतिष्कानामसंख्यातौ चंद्रादित्यावुपेयतुः । इतींद्राणां चतुःषष्टिराययौ मेरुमूर्द्धनि ॥ ४७४ ॥
आदिशदच्युतेंद्रोऽथ त्रिदशानाभियोगिकान् । जिनजन्माभिषेकोपकरणान्यानयंतु ते ॥ ४७५ ॥
अथ किंचिदपक्रम्योत्तरपूर्वदिशि क्षणात् । ते वैक्रियसमुद्घातेनाकृष्योत्तमपुद्गलान् ॥ ४७६ ॥
सौवर्णान् राजतान् रत्नमयान् कांचनराजतान् । स्वर्णरत्नमयान् स्वर्णरूप्यरत्नमयानपि ॥ ४७७ ॥
रौप्यरत्नमयान् भौमान् कलशान् योजनोन्नतान् । रम्यान् प्रत्येकमष्टाग्रसहस्रं ते विचक्रिरे ॥ ४७८ ॥

त्रिभिर्विशेषकम् ॥

भृंगारान् दर्पणान् रत्नकरंडान् सुप्रतिष्टकान् । स्थालानि पात्रिकाश्चापि पुष्पचंगेरिका अपि ॥४७९॥
प्रत्येकं कुंभसंख्यातांस्तद्वत्स्वर्णादिवस्तुजान् । तत्कालं ढौकयामासुरग्रे निष्पादितानिव ॥ ४८० ॥

संदानितकम् ।

कलशांस्तानुपादाय ते देवा आभियोगिकाः । क्षीरोदधावाददिरे वारि वारिधरा इव ॥ ४८१ ॥
तत्रागृह्णन् पुंडरीकोत्पलकोकनदानि[1] ते । तदंभसामभिज्ञानमिव दर्शयितुं हरेः ॥ ४८२ ॥
उदधौ पुष्करार्धेऽपि जगृहुः पुष्कराणि ते । निपान[2] इव पानीयहारिकाः[3] कुम्भपाणयः ॥ ४८३ ॥
भरतैरावतादीनां तीर्थेषु मागधादिषु । तेऽम्भोमृत्स्नां च जगृहुः कर्तुं कुंभानिवाधिकान् ॥ ४८४ ॥
गंगादिकानां च महानदीनामुदकानि ते । समुपाददिरे स्वैरं शौल्किका[4] इव वर्णिकाम् ॥ ४८५ ॥
ते क्षुद्रहिमवत्येत्यागृह्णन् न्यासीकृतानिव । सिद्धार्थपुष्पप्रवरगंधान् सर्वौषधीरपि ॥ ४८६ ॥
तत्र पद्माभिधह्रदादंभास्यंभोरुहाणि च । विमलानि सुगंधीनि जगृहुः पावनानि ते ॥ ४८७ ॥
तेऽन्यवर्षधरेभ्यस्तु पद्माद्याददिरे तथा । प्रस्पर्धिन इवान्योन्यमेकस्मिन् कर्मणीरिताः ॥ ४८८ ॥
अगृह्णन्नखिलक्षेत्रे वैताढ्यविजयेष्वपि । अंभोजादिकं[5] तत्रातंद्राः[6] स्वामिप्रसादवत् ॥ ४८९ ॥
वक्षारकगिरिभ्योऽपि ते पवित्रं सुगंधि च । तत्तदाददिरे वस्तु तदर्थमिव संचितम् ॥ ४९० ॥
देवोत्तरकुरुभ्योऽपि पूरयामासुरंजसा । स्वमिव श्रेयसा तेऽथ कलशानलसेतराः ॥ ४९१ ॥
भद्रशाले नंदने च सौमनसेऽथ पांडुके । जगृहुः सर्वं तु वरगोशीर्षचंदनादि ते ॥ ४९२ ॥
गंधकारा इवैकत्र गंधद्रव्यं जलानि च । मेलयित्वा समाजग्मुर्मंक्षु ते मेरुमूर्ध्वनि ॥ ४९३ ॥
सामानिकानां दशभिः सहस्रैस्तच्चतुर्गुणैः । आत्मरक्षैस्त्रायस्त्रिंशैस्त्रयस्त्रिंशन्मितैस्तथा ॥ ४९४ ॥

---

१ कोकनद कमलविशेषः । २ निपाने जलाशये । ३ पानीयहारिका जलग्राहिण्य । ४ शौल्किकाः पण्यक्रेतारः । ५ जलकमलादिक । ६ आलस्यरहिताः ।

तिसृभिः परिषद्भिश्च चतुर्भिर्लोकपालकैः । सप्तभिश्च महानीकैरनीकेशैश्च सप्तभिः ॥ ४९५ ॥
आरणाच्युतकल्पेंद्रः सर्वतः परिवारितः । भगवंतं स्नपयितुं ततः शुचिरुपास्थितः ॥ ४९६ ॥

त्रिभिर्विशेषकम् ।

ततः कृतोत्तरासंगो निःसंगभक्तिरच्युतः । उन्निद्रपारिजातादिपुष्पांजलिमुपाददे ॥ ४९७ ॥
अस्तोकधूपधूमेन धूपयित्वा सुगंधिना । मुमोच त्रिजगद्भर्तुः पुरस्तं कुसुमांजलिम् ॥ ४९८ ॥
देवैरानिन्यिरे गंधांभस्कुंभाः स्रग्भिरर्चिताः । स्मयमाना इव स्वामिसान्निध्योद्भूतया मुदा ॥ ४९९ ॥
चकासामासुरास्यस्थैस्तैः पद्मैर्मुखरालिभिः । अधीयाना इव स्वामिस्नात्रमंगलमादिमम् ॥ ५०० ॥
अलक्ष्यंत च ते कुंभाः स्वामिस्नपनहेतवे । पातालतः समायाताः पातालकलशा इव ॥ ५०१ ॥
अच्युतेन्द्र उपादत्त समं सामानिकादिभिः । कुंभान् सहस्रमष्टाग्रं फलानीव स्वसंपदः ॥ ५०२ ॥
ते तेषां रेजुरुत्क्षिप्तभुजदंडाग्रवर्त्तिनः । उदस्तोन्नालनलिनकोशलक्ष्मीविडंबिनः ॥ ५०३ ॥
अच्युतेंद्रः स्नपयितुमथारेभे जगत्पतिम् । आत्मीयमिव मूर्द्धानं कलशं नमयन्मनाक् ॥ ५०४ ॥
अथोच्चैर्नादयामासुर्नाकिनः केचिदानकान्[१] । गुहाप्रतिरवैरुच्चैर्वाचालितसुराचलान् ॥ ५०५ ॥
हुडुक्कींस्ताडयामासुरपरे भक्तितत्पराः । मंथायस्तमहांभोधिध्वानश्रीतस्करध्वनीन्[२] ॥ ५०६ ॥
उत्तालाः कांस्यतालानि केचिदास्फालयन्मिथः । पर्याकुलध्वनिस्रोतःकल्लोलाननिला इव ॥ ५०७ ॥
अवादयन् केऽपि तारं भेरीरुन्मुखशालिनीः । ऊर्ध्वलोके जिनेंद्राज्ञां सर्वतस्तन्वतीरिव ॥ ५०८ ॥

---

१ आनकान् वाद्यविशेषान् । २ मन्थेन मथनदण्डेन आयस्तो विक्षिप्तो यो महाम्भोधिस्तस्य ध्वान. शब्दस्तस्य श्रियस्तस्करो ध्वनिर्येषां तान् ।

अपूरयन्महानादबहुला: केऽपि काहला: । नाहला इव गोशृंगाण्यद्रिशृंगस्थिता: सुरा: ।। ५०९ ।।
दुष्टशिष्यानिवोद्घोषहेतवे मुरजान्मुहु: । पाणिभिस्ताडयामासु: केचन त्रिदिवौकस: ।। ५१० ।।
असंख्यातागतार्केन्दुमंडलश्रीविडंबिनी: । स्वर्णरौप्यमयीर्देवा झल्लरी: केऽप्यवादयन् ।। ५११ ।।
गंडै: पीयूषगंडूषगर्भैरिव समुन्नतै: । तारमापूरयामासु: शंखान् केऽपि दिवौकस: ।। ५१२ ।।
इत्थं विचित्रातोद्येषु वाद्यमानेषु नाकिभि: । अवादकमिवातोद्यं द्यौरासीत्प्रतिशब्दितै: ।। ५१३ ।।
जय नंद जगन्नाथ सिद्धिगामिन् कृपार्णव । धर्मप्रवर्त्तकेत्यादि चारणश्रमणा जगु: ।। ५१४ ।।
विचित्रैर्ध्रुवकै: श्लोकैरुत्साहै: स्कंधकैरपि । गलितैर्वस्तुवदनैर्गद्यैरपि मनोहरै: ।। ५१५ ।।
स्तुतिं पठित्वा मधुरां कुंभान् भुवनभर्त्तरि । शनै: प्रलोठयामासाच्युतेंद्र: स्वामरै: समम् ५१६ युग्मं ।।
तेंऽभ:कुंभा: शुशुभिरे लुठंत: स्वामिमूर्द्धनि । सुमेरुशैलशिखरे वर्षंत इव वारिदा: ।। ५१७ ।।
अमरैर्नाम्यमानास्ते मूर्द्धन्युभयत: प्रभो: । सद्य: संघटयामासुर्माणिक्योत्तंसविभ्रमम् ।। ५१८ ।।
कुंभेभ्यो योजनास्येभ्यस्ता: पतंत्यश्चकाशिरे । वारिधारा गिरिदरीमुखेभ्य इव निर्झरा: ।। ५१९ ।।
उच्छलंत्यो मौलिदेशाद्दिग्विदिग्भ्यो जलच्छटा: । स्वामिनो धर्मकंदस्य प्ररोहा इव रेजिरे ।। ५२० ।।
परिवेषेण विस्तीर्णं मूर्ध्नि श्वेतातपत्रवत् । ललाटपट्टे प्रसरच्चांदनीव ललाटिका ।। ५२१ ।।
कर्णयो: प्राप्तविश्रांतनयनोपात्तकांतिवत् । कपोलपाल्योः कर्पूरपत्रवल्लीवितानवत् ।। ५२२ ।।

१ नाहला गोपा: । २ अवादक वादकजनरहित । ३ अस्मिन् श्लोके ध्रुवकादिशब्दैस्तत्तन्नाम्ना गद्यपद्यप्रकारा ज्ञेया: ।
४ ललाटालङ्कार: ।

मनोज्ञयोरधरयोः स्मितद्युतिकलापवत् । कंठकंदलदेशोत्तूद्दाममौक्तिकदामवत् ॥ ५२३ ॥
स्कंधदेशोपरिष्टाच्च गोशीर्षस्थासकोपमम् । बाहुहृत्पृष्ठभागेषु विशाल इव चोलकः ॥ ५२४ ॥
कटिजान्वंतराले चोत्तरीयमिव विस्तृतम् । पतद्भगवति भ्रेजे क्षीरोदाद्युदकं तदा ॥ ५२५ ॥

पञ्चभिः कुलकम् ।

स्वामिस्नात्रजलं तत्र भूमावपतदेव हि । श्रद्धया जगृहे कैश्चिन्मेघांभश्चातकैरिव ॥ ५२६ ॥
क्व नाम प्राप्स्यतेऽस्माभिर्भूयोऽद इति मूर्द्धनि । तत्पयः केचिदमरा न्यधुर्मरुनरा इव ॥ ५२७ ॥
पयसा सिषिचे तेन साभिलाषैश्च कैश्चन । भूयो भूयो वपुर्देवैर्ग्रीष्मार्त्तैरिव कुंजरैः ॥ ५२८ ॥
रयेण प्रसरन्मेरुगिरिप्रस्थेषु तत्पयः । अकल्पयन्निर्झरिणीसहस्राणि समंततः ॥ ५२९ ॥
तत्पांडके सौमनसे नंदने भद्रशालिने । उद्याने प्रसृतातुल्यकुल्यालीलामशिश्रियत् ॥ ५३० ॥
हरेः स्नपयतः कुंभा भवन्तोऽधोमुखा बभुः । स्नात्रस्तोकीभवद्वारिसंपदा लज्जिता इव ॥ ५३१ ॥
तानेव बिभरांचक्रुः कुंभान् कुंभांतरांबुभिः । आभियोगिकगीर्वाणाः कुर्वाणाः स्वामिशासनम् ॥ ५३२ ॥
वृंदारकाणां हस्तेषु हस्तेभ्यः संचरिष्णवः । बभ्राजिरे ते कलशाः श्रीमतां बालका इव ॥ ५३३ ॥
ढौक्यमानाभितो नाभिसूनुं कलशधोरणी । आरोप्यमाणस्वर्णाब्जमालालीलायितं दधौ ॥ ५३४ ॥
पुनः प्रालोठयन्कुंभानमराः स्वामिमूर्द्धनि । पयःशब्दायितमुखानर्हत्स्तुतिपरानिव ॥ ५३५ ॥
स्वामिस्नात्रे हरे रिक्तरिक्तान् कुंभानपूरयत् । अमराश्चक्रिणो यक्षा निधानकलशानिव ॥ ५३६ ॥

१ स्थासकास्तिलकः । २ निर्झरिणी नदी । ३ धोरणी पङ्क्तिः ।

कलशास्तेऽरघट्टघटिका इव ॥ ५३७ ॥
रिक्तरिक्ता भृतभृता रेजिरे संचरिष्णवः । भूयो भूयः कलशास्तेऽरघट्टघटिका इव ॥ ५३८ ॥
एवमच्युतनाथेन यथेष्टं कुंभकोटिभिः । स्वामिनो विदधे स्नात्रं चित्रमात्मा पवित्रितः ॥ ५३९ ॥
दिव्यया गंधकाषाय्याऽऽरणाच्युतविभुर्विभोः । अंगमुन्मार्जयामास स्वयं मार्जितमान्यथ ॥ ५४० ॥
सा रेजे गंधकाषायी स्पृशंती स्वामिनो वपुः । प्रातः संध्याभ्रलेखेव मंडलं चंद्ररोचिषः ॥ ५४१ ॥
सुवर्णसारसर्वस्वं सुवर्णाद्रेरिवैकतः । आहृतं शुशुभे तादृगुन्मृष्टं भगवद्वपुः ॥ ५४२ ॥
अथाभियोग्या गोशीर्षचंदनद्रवकर्दमम् । पात्रिकाभिर्विचित्राभिरच्युतायोपनिन्यिरे ॥ ५४३ ॥
विलेपयितुमारेभे प्रभुं तेन पुरंदरः । सुमेरुशैलकटकं ज्योत्स्नयेव निशाकरः ॥ ५४४ ॥
अभितः स्वामिनं केचिदुत्तरासंगधारिणः । उद्दामधूपदहनपाणयोऽस्थुरथामराः ॥ ५४५ ॥
केऽपि तत्राक्षिपन् धूपं स्निग्धया धूमलेखया । मेरौ नीलमयीं चूलां रचयंत इवापराम् ॥ ५४६ ॥
केऽपि श्वेतातपत्राणि धारयामासुरुच्चकैः । कुमुद्वदिव कुर्वाणा अंतरिक्षं महासरः ॥ ५४७ ॥
केचिदांदोलयामासुश्चामराण्यमरोत्तमाः । आह्वयंत इवात्मीयान् स्वामिदर्शनहेतवे ॥ ५४८ ॥
केचिद्बद्धपरिकरा बिभ्राणाः स्वस्वमायुधम् । परितः स्वामिनं तस्थुरात्मरक्षा इवामराः ॥ ५४९ ॥
सुराः केचिन्मणिस्वर्णतालवृंतान्यचीचलन् । उद्यद्विद्युल्लतालीलां दर्शयंतो नभस्तले ॥ ५५० ॥
विचित्रदिव्यसुमनोवृष्टिं त्रिदिववासिनः । हर्षोत्कर्षजुषोऽकार्षू रंगाचार्या[1] इवाऽपरे ॥ ५५१ ॥
नितांतसुरभिगंधद्रव्यक्षोदं चतुर्दिशम् । अवर्षन्नपरे चूर्णमुच्चाटनमिवांहसाम्[2] ॥

१ रङ्गाचार्याः सूत्रधारापरपर्यायाः नाट्याचार्याः । २ अहसा पापानाम् ।

स्वामिनाधिष्ठितस्याङ्गैर्मेरोरुद्धिमिवाधिकम् । चिकीर्षवः केऽपि सुराः स्वर्णवृष्टिं वितेनिरे ॥ ५५२ ॥
स्वामिपादप्रणामावतरत्ताराविडंबिनीम् । केचिदुच्चैरत्नवृष्टिं त्रिविष्टपसदो व्यधुः ॥ ५५३ ॥
गंधर्वानीकमधरीकुर्वंतो मधुरस्वरैः । ग्रामरागैर्नवनवैः केचन स्वामिनं जगुः ॥ ५५४ ॥
ततोऽन्यथावनद्धानि घनानि सुषिराणि[1] च । वादयामासुरातोद्यान्यन्ये भक्तिर्ह्यनेकधा ॥ ५५५ ॥
निनर्त्तयिषव इव स्वर्णशैलशिरांस्यपि । पादपातैः कंपयंतो ननृतुः केऽपि नाकिनः ॥ ५५६ ॥
नाट्यं प्रवर्त्तयामासुर्विचित्राभिनयोज्ज्वलम् । त्रिदशाः सह जायाभिर्जायाजीवा[2] इवापरे ॥ ५५७ ॥
गरुत्मंत इवोत्पेतुरमराः केचिदंबरे । निपेतुः क्रीडया केचित्ताम्रचूडा[3] इवावनौ ॥ ५५८ ॥
ववल्गुर्वल्गु केप्यंककारा इव दिवौकसः । केऽपि सिंहा इवानंदात्सिंहनादं वितेनिरे ॥ ५५९॥
उच्चकैश्चक्रिरे केचित्कुंजरा इव बृंहितम् । सहर्षा हेषितं केचित्तेनिरे तुरगा इव ॥ ५६० ॥
स्यंदना इव केचिच्च व्यधुर्घणघणारवम् । विदूषका इवान्येषां चक्रुः शब्दचतुष्टयीम् ॥ ५६१ ॥
कूर्दमानाः केऽपि मेरुशिखराण्यंघ्रिदर्दरैः । अकंपयन् भृशं शाखिशाखाः शाखामृगा इव ॥ ५६२ ॥
उत्कटं ताडयामासुश्चपेटाभिर्महीतलम् । रणप्रतिज्ञाकरणोद्यता वीरा इवापरे ॥ ५६३ ॥
कोलाहलं विदधिरे केचिज्जितपणा इव । स्कंधातोद्यवदुत्फुल्लौ गल्लौ केचिदवादयन् ॥ ५६४ ॥
विकृतीभूय विटवत्केऽपि लोकानहासयन् । केप्यग्रे पार्श्वयोः पश्चाद्ववल्गुः कंदुका इव ॥ ५६५ ॥
केचिच्च मंडलीभूय रासावलयगायिनः । चक्रुर्नृत्यं मनोहारि हल्लीसकमिव स्त्रियः ॥ ५६६ ॥

१ सुषिराणि सच्छिद्रवाद्यानि । २ जायाजीवाः वेश्यानुजीविनः । ३ ताम्रचूडाः कुक्कुटाः ।

केऽप्यज्वलन् ज्वलनवदतपन् केऽपि सूर्यवत् । जगर्जुर्मेघवत्केऽपि केऽपि विद्युद्वदद्युतन् ॥ ५६७ ॥
केचिदोदनसंपूर्णाः छात्रा इव विचक्रिरे । तादृग् स्वाम्याप्तिजानंदः शक्यते केन गोपितुम् ॥ ५६८ ॥
बहुप्रकारमानंदविकारं धारयत्स्वपि । देवेष्वच्युतदेवेन्द्रश्चक्रे भर्तुर्विलेपनम् ॥ ५६९ ॥
पारिजातादिभिः पुष्पैर्विकसद्भिः स्वभक्तिवत् । ततोऽच्युतपतिः पूजां चक्रे जिनपतेः स्वयम् ॥ ५७० ॥
अपसृत्य ततः किंचित्स्वामिनं भक्तिवामनः । प्रणनाम ववंदे च सोंतेवासीव[1] वासवः ॥ ५७१ ॥
एवं द्वाषष्टिरन्येऽपि शक्राश्चक्रुर्जगत्पतेः । स्नानांगरागौ पूजां चानुज्येष्ठं सोदरा इव ॥ ५७२ ॥
विकृत्य पंचधात्मानमथ सौधर्मराजवत् । उत्संगे त्रिजगन्नाथं जग्राहैशानवासवः ॥ ५७३ ॥
तत्रैकोऽधाद्विभोर्मूर्ध्नि छत्रं कर्पूरपांशुरम् । मुक्तावचूलैः प्रेंखद्भिर्दिशां लास्यमिवादिशत् ॥ ५७४ ॥
वीजयामासतुश्चान्यौ चामराभ्यां जिनेश्वरम् । विक्षिप्तकरणेनोच्चैर्नृत्यद्भ्यामिव संमदात् ॥ ५७५ ॥
शूलमुल्लासयन् पाणावपरः पुरतोऽभवत् । स्वामिनो दृष्टिपातैः स्वं पूतीकर्तुमना इव ॥ ५७६ ॥
अथ सौधर्मकल्पेंद्रो जगद्भर्तुश्चतुर्दिशम् । चत्वारि स्फाटिकोत्तुंगवृषरूपाणि निर्ममे ॥ ५७७ ॥
उत्तुंगशृंगरुचिरा वृषभास्ते चकाशिरे । दिशां चतसृणां चांद्रकांताः क्रीडाचला इव ॥ ५७८ ॥
तेषां स्फोटितपातालनालेभ्य इव संतताः । शृंगेभ्योऽष्टभ्य उत्पेतुर्वारिधारा नभस्तले ॥ ५७९ ॥
मूले भिन्नास्तोयधाराधोरण्यस्ता निरंतराः । अंते मिलंत्यः खे चक्रुर्नदीसंगमविभ्रमम् ॥ ५८० ॥
सकौतुकं वीक्ष्यमाणाः सुरासुरवधूजनैः । ताः पेतुर्जगतांपत्यावपांपत्याविवापगाः ॥ ५८१ ॥

---

१ अन्तेवासी शिष्यः । २ विक्षिप्तकरण अङ्गविक्षेपः ।

शृंगेभ्यो जलयंत्रेभ्य इव निर्यद्भिरंबुभिः । शक्रेण स्नपयांचक्रे भगवानादितीर्थकृत् ॥ ५८२ ॥
दूरमुल्लसता तेन स्वामिस्नपनवारिणा । आसन् भक्त्या मनांसीव वासांस्यार्द्राणि नाकिनाम् ॥ ५८३ ॥
चतुरोऽपि महोक्षांस्तानुपसंहृतवानथ । प्राचीनबर्हिः[1] सहसेंद्रजालमिव जालिकः ॥ ५८४ ॥
स्नपयित्वातिविह्वर्दादेवं देवप्रभुः प्रभोः । रत्नादर्शमिवामार्जदंगं देवांगवाससा ॥ ५८५ ॥
अथ रत्नमये पट्टे निर्मलैरूप्यतंडुलैः । अखंडैरालिखन् लेखाः स्वामिनोऽग्रेऽष्टमंगलीम् ॥ ५८६ ॥
निजेनेवानुरागेणांगरागेण गरीयसा । अंगं विलेपयामास वासवस्त्रिजगद्गुरोः ॥ ५८७ ॥
स्वामिनः स्मेरवक्त्रेंदुकौमुदीभ्रमकारिभिः । विशदैर्दिव्यवासोभिः पूजां व्यधित देवराट् ॥ ५८८ ॥
विश्वमूर्द्धन्यताचिह्नं मूर्द्धनि त्रिजगत्पतेः । वज्रमाणिक्यमुकुटं स्थापयामास वज्रभृत् ॥ ५८९ ॥
न्यधत्त मघवा भर्तुः कर्णयोः स्वर्णकुंडले । व्योम्नः पूर्वापरदिशोः सायं शशिरवी इव ॥ ५९० ॥
लक्ष्म्या विभ्रमदोलेव दिव्यमुक्तालता तता । न्यधेपि पुरुहूतेन स्वामिनः कंठकंदले ॥ ५९१ ॥
सोंऽगदे न्यदधे बाहुदंडयोस्त्रिजगत्पतेः । सुवर्णवलये भद्रकलभस्येव दंतयोः ॥ ५९२ ॥
वृत्तोरुमौक्तिकमणिकंकणे मणिबंधयोः । स न्यधत्त प्रभोः शाखिशाखांतस्तवकोपमे ॥ ५९३ ॥
स स्वर्णकटिसूत्रं च कटिदेशे न्यधाद्विभोः । वर्षधरनितंबस्थस्वर्णकूलविलासभृत् ॥ ५९४ ॥
माणिक्यपादकटके स न्यवीविशदीशितुः । अंघ्र्योर्लग्ने देवदैत्यतेजसी इव सर्वतः ॥ ५९५ ॥
अलंकाराय यानींद्रो भूषणानि न्यवीविशत् । अलंकृतानि तान्येव प्रत्युतांगैर्जगद्गुरोः ॥ ५९६ ॥

---

१ प्राचीनबर्हिरिन्द्रः ।

उन्निद्रपारिजातादिदामभिः परमेश्वरम् । भक्तिवासितचेतस्कः पूजयामास वासवः ॥ ५९७ ॥
कृतकृत्य इवाथापसृत्य किंचित्पुरंदरः । पुरोभूय जगद्भर्तुरारात्रिकमुपाददे ॥ ५९८ ॥
ज्वलद्दीपत्विषा तेन चकासामास कौशिकः । भास्वदौषधिचक्रेण शृंगेणेव महागिरिः ॥ ५९९ ॥
श्रद्धालुभिः सुरवरैः प्रकीर्णकुसुमोत्करम् । भर्तुरुत्तारयामास तत्त्रिस्त्रिदशपुंगवः ॥ ६०० ॥
शक्रः शक्रस्तवेनाथ वंदित्वा परमेश्वरम् । रोमांचितवपुर्भक्त्या स्तोतुमित्युपचक्रमे ॥ ६०१ ॥
नमस्तुभ्यं जगन्नाथ त्रैलोक्यांभोजभास्कर । संसारमरुकल्पद्रो विश्वोद्धरणबांधव ॥ ६०२ ॥
वंदनीयो मुहूर्त्तोऽयं यत्र ते धर्मजन्मनः । अपुनर्जन्मनो जन्म दुःखच्छिद्विश्वजन्मिनाम् ॥ ६०३ ॥
युष्मज्जन्माभिषेकांभःपूरैराप्लाविताऽधुना । अयत्नक्षालितमला सत्या रत्नप्रभा प्रभो ॥ ६०४ ॥
मनुष्याः खलु ते धन्या ये त्वां द्रक्ष्यंत्यहर्निशम् । यथासमयमेव त्वां द्रष्टारः कीदृशा वयम् ॥ ६०५ ॥
भरतक्षेत्रजंतूनां मोक्षमार्गोऽखिलः खिलः[2] । त्वया नूतनपांथेन नाथ प्रकटयिष्यते ॥ ६०६ ॥
सास्तु तावत्तव सुधासध्रीची धर्मदेशना । त्वद्दर्शनमपि श्रेयो विश्राणयति[3] जन्मिनाम् ॥ ६०७ ॥
न कश्चिदुपमापात्रं भवतो भवतारक । ब्रूमस्त्वत्तुल्यमेव त्वां यदि ते तर्हि का स्तुतिः ॥ ६०८ ॥
नास्मि वक्तुमलं नाथ सद्भूतानपि ते गुणान् । स्वयंभूरमणांभोधेर्मातुमंभांसि कः क्षमः ॥ ६०९ ॥
इति स्तुत्वा जगन्नाथं प्रमोदामोदिमानसः । विचक्रे पंचधात्मानं पूर्ववत् पूर्वदिक्पतिः ॥ ६१० ॥
ईशानोत्संगतः शक्रः एकस्तत्राप्रमद्वरः[4] । रहस्यमिव जग्राह हृदयेन जगत्पतिम् ॥ ६११ ॥

१ इन्द्रः । २ खिलो रुद्धः । ३ विश्राणयति ददाति । ४ अप्रमद्वरः सावधानः ।

अपरे पूर्ववत् स्वानि स्वानि कर्माणि चक्रिरे । विनियुक्ता इव स्वामिसेवाविज्ञा बिडौजसः ॥ ६१२ ॥
वृतो निजामरैः सर्वैरंबरेणामराग्रणीः । जगाम धाम तद्देव्यालंकृतं मरुदेवया ॥ ६१३ ॥
तीर्थकृत्प्रतिरूपं तदुपसंहृत्य वासवः । तथैव स्थापयामास स्वामिनं मातुरंतिके ॥ ६१४ ॥
तामवस्वापनीं निद्रां पद्मिन्या इव भास्करः । स्वामिन्या मरुदेवाया व्यपनिन्ये दिवस्पतिः ॥ ६१५ ॥
कूलिनीकूलललितहंसमालाविलासभृत् । एकं दुकूलयुगलमुच्छीर्षे सोऽमुचत्प्रभोः ॥ ६१६ ॥
तथैव स न्यधात् रत्नकुंडलद्वयमीशितुः । बालत्वेऽपि समुद्भूतभामंडलविकल्पभृत् ॥ ६१७ ॥
एवं श्रीदामगंडं[1] च स्वर्णप्राकारनिर्मितम् । विचित्ररत्नहारार्धहाराढ्यं हेमभास्करम् ॥ ६१८ ॥
उपरि स्वामिनो दृष्टिविनोदाय पुरंदरः । विताने स्थापयामास नभसीव नभोमणिं ॥ ६१९ ॥
संदानितकम् ।
अथ स श्रीदमादिक्षत् प्रत्येकमपि संप्रति । हिरण्यस्वर्णरत्नानां कोटीर्द्वात्रिंशतं द्रुतम् ॥ ६२० ॥
नंदासनभद्रासनान्यथ द्वात्रिंशतं पृथक् । अन्यच्च वस्त्रनेपथ्यप्रभृत्यतिमनोहरम् ॥ ६२१ ॥
सांसारिकसुखोत्पादि महार्घं वस्तु सर्वतः । स्वामिनो भवनेऽमुष्मिन्निधेह्यप इवांबुदः ॥ ६२२ ॥
त्रिभिर्विशेषकम् ।
कुबेरः कारयामास तत्सद्यो जृंभकामरैः । आज्ञा ह्याज्ञाप्रचंडानां वचसा सह सिद्ध्यति ॥ ६२३ ॥
अथाभियोगिकान् देवानादिदेशेति वासवः । उच्चैर्देवनिकायेषु चतुर्ष्वाघुष्यतामिदम् ॥ ६२४ ॥

१ श्रीदामगण्ड क्रीडनकविशेष । २ श्रीद कुबेरं ।

अर्हतोऽर्हज्जनन्याश्च योऽशुभं चिंतयिष्यति । तस्यार्जकमंजरीवत्[1] सप्तधा भेत्स्यते शिरः ॥६२५॥ युग्मं ॥

भुवनपतिव्यंतरज्योतिर्वैमानिकेषु तत् । ते समुद्घुघुषुः शिष्या वाचमुच्चैर्गुरोरिव ॥ ६२६ ॥

शक्रः संक्रमयामास नानाहाररसामृतम् । स्वाम्यंगुष्ठेऽमृतानामीचक्रे भानुरिवाम्मयम्[2] ॥ ६२७ ॥

अर्हतोऽस्तन्यपा यस्मात्किं तु क्षुदुदये सति । प्रक्षिपंति मुखेऽङ्गुष्ठं स्वमेव रसवर्षिणम् ॥ ६२८ ॥

धात्रीकर्माणि सर्वाणि निर्मापयितुमीशितुः । धात्रीरप्सरसः पंचादिदेश द्युसदांपतिः ॥ ६२९ ॥

तदा च बहवो देवा जिनस्नात्रादनंतरम् । सुमेरुशिखरादेव द्वीपं नंदीश्वरं ययुः ॥ ६३० ॥

श्रीनाभिसूनुसदनात्सौधर्मेन्द्रोऽपि च द्रुतम् । ययौ नंदीश्वरं द्वीपं निवासं स्वर्गवासिनाम् ॥ ६३१ ॥

तत्र शक्रः क्षुद्रमेरुप्रमाणे पूर्वदिक्स्थिते । नामतो देवरमणेऽञ्जनाद्राववतीर्णवान् ॥ ६३२ ॥

तत्र चैत्ये चतुर्द्वारे विचित्रमणिपीठिके । चैत्यद्रुमेन्द्रध्वजांके प्राविशद् द्युसदांपतिः ॥ ६३३ ॥

ऋषभप्रभृतीरर्हत्प्रतिमास्तत्र शाश्वतीः । यथावत्पूजयामास सोऽष्टाह्निकारंभपूर्वकम् ॥ ६३४ ॥

तस्य चाद्रेश्चतुर्दिक्स्थमहावापीविवर्त्तिषु । स्फाटिकेषु दधिमुखपर्वतेषु चतुर्ष्वपि ॥ ६३५ ॥

चैत्येष्वर्हत्प्रतिमानां शाश्वतीनां यथाविधि । चत्वारः शक्रदिक्पालाश्चक्रुरष्टाह्निकोत्सवम् ॥६३६॥ युग्मं॥

ईशानेन्द्रोऽप्यवातारीदुत्तराशाप्रतिष्ठिते । रमणीयाह्वये नित्यरमणीयेऽञ्जनाचले ॥ ६३७ ॥

तत्र चैत्ये तावतीनां शाश्वतीनां तथैव च । प्रतिमानामार्हतीनां चकाराष्टाह्निकोत्सवम् ॥ ६३८ ॥

तस्यापि लोकपालास्तद्वापीदधिमुखाद्रिषु । शाश्वतार्हत्प्रतिमानां तद्वद्विदधुरुत्सवम् ॥ ६३९ ॥

१ अर्जकवृक्षस्य मञ्जरीवत् । २ अम्मय जलविकार ।

चमरेंद्रोप्युत्ततार दक्षिणाशाव्यवस्थिते । नित्योद्योताभिधे रत्ननित्योद्योतेंऽजनाचले ॥ ६४० ॥
भक्त्या महत्या तत्रायमपि चैत्ये यथाविधि । शाश्वतीनां प्रतिमानां विदधेऽष्टाहिकोत्सवम् ॥. ६४१ ॥
तद्वाप्यंतर्दधिमुखाचलेष्वचलचेतसः । चक्रुर्जिनप्रतिमानां तद्दिक्पाला महोत्सवम् ॥ ६४२ ॥
अवातरद्बलींद्रोऽपि पश्चिमाशानिवासिनि । स्वयंप्रभाभिधेंऽभोदप्रभावेंऽजनाचले ॥ ६४३ ॥
शाश्वतीनामृषभादिप्रतिमानामसावपि । उत्सवं विदधे तद्वद्दिविषद्दृष्टिपावनम् ॥ ६४४ ॥
तत्पुष्करिकांतःस्थेषूच्चैर्दधिमुखाद्रिषु । चक्रुस्तस्यापि दिक्पालाः शाश्वतप्रतिमोत्सवम् ॥ ६४५ ॥
इति नंदीश्वरे तत्र महिमानं विधाय ते । यथा यथागतेनैव स्वं स्वं स्थानं ययुः सुराः ॥ ६४६ ॥
स्वामिनी मरुदेवापि संप्रबुद्धाथ नाभये । नैशं स्वप्नमिवामर्त्यसंपातं तमचीकथत् ॥ ६४७ ॥
ऊरुप्रदेशे ऋषभो लांछनं यज्जगत्पतेः । ऋषभः प्रथमं यच्च स्वप्ने मात्रा निरीक्षितः ॥ ६४८ ॥
तत्तस्य ऋषभ इति नामोत्सवपुरस्सरम् । तौ मातापितरौ हृष्टौ विदधाते शुभे दिने ॥ ६४९ ॥ युग्मं ॥
तदा च युग्मजातायाः कन्याया अपि पावनम् । सुमंगलेति पितरौ यथार्थं नाम चक्रतुः ॥ ६५० ॥
शक्रसंक्रमितां स्वामी निजांगुष्ठे सुधामपि । पिबति स्म यथाकालं कुल्याजलमिवांघ्रिपः ॥ ६५१ ॥
भगवान् शुशुभे बालः पितुरुत्संगमास्थितः । अंके शिखरिणः सिंहकिशोर इव भासुरः॥ ६५२ ॥
शक्रादिष्टाश्च धात्र्यस्ताः पंचापि परमेश्वरम् । महामुनिं समितय इवामुंचन्न जातुचित् ॥ ६५३ ॥
स्वामिनो जन्मनः किंचिदूने संवत्सरे सति । सौधर्मवासवो वंशस्थापनार्थमुपाययौ ॥ ६५४ ॥

---

१ अमर्त्यसपात देवागम । २ समितयः पञ्चविधाः ।

भृत्येन रिक्तहस्तेन न कार्यं स्वामिदर्शनम् । इति बुद्ध्येव महतीमिक्षुयष्टिं स आददे ॥ ६५५ ॥
सेक्षुयष्टिः सुनासीरः शरत्काल इवांगवान् । नाभ्युत्संगनिषण्णस्य जगाम स्वामिनोऽग्रतः ॥ ६५६ ॥
ज्ञात्वा च शक्रसंकल्पमवधिज्ञानतो विभुः । तामिक्षुयष्टिमादातुं करीव करमक्षिपत् ॥ ६५७ ॥
प्रणम्य शिरसा शक्रः स्वामिनो भाववित्ततः । अर्पयामास तामिक्षुलतिकामुपदामिव ॥ ६५८ ॥
यदिक्षुराददे भर्त्रेक्ष्वाकुरित्याख्यया ततः । स्वामिवंशं प्रतिष्ठाप्य दिवस्पतिरगाद्दिवम् ॥ ६५९ ॥
देहो युगादिनाथस्य स्वेदामयमलोज्झितः । सुगंधिः सुंदराकारस्तपनीयारविंदवत् ॥ ६६० ॥
गोक्षीरधाराधवले अविस्रे मांसशोणिते । आहारनीहारविधिर्लोचनानामगोचरः॥ ६६१ ॥
उत्फुल्लकुमुदामोदसोदरं श्वाससौरभम् । चत्वारोऽतिशयापाता बभूवुर्जन्मना सह ॥ ६६२ ॥
वज्रऋषभनाराचं दधत्संहननं प्रभुः । मंदं चचाल पादाभ्यां भूमिभ्रंशभयादिव ॥ ६६३ ॥
प्रभुर्बभाषे बालोऽपि गंभीरमधुरध्वनिः । नृणां लोकोत्तराणां हि बाल्यं वपुरपेक्षया ॥ ६६४ ॥
संस्थानं स्वामिनस्तुल्यचतुरस्रमशोभत । श्रियां रिरंसमानानां क्रीडावेदीव कांचनी ॥ ६६५ ॥
सवयोभूय संभूयायातैः सुरकुमारकैः । अरंस्त वृषभः स्वामी तेषां चित्तानुवृत्तये ॥ ६६६ ॥
धूलीधूसरसर्वांगो बिभ्राणो घर्घरस्रजम् । कलभोऽतर्मदावस्थ इव क्रीडन् बभौ विभुः ॥ ६६७ ॥
जग्राह पाणिना स्वामी यत्किंचिल्लीलयाऽपि हि । महर्द्धिकोऽपि त्रिदशो न तदाच्छेत्तुमीश्वरः ॥ ६६८ ॥
बलं परीक्षितुमधादंगुलीमपि यः प्रभोः । स श्वासपवनेनापि ययौ दूरेण रेणुवत् ॥ ६६९ ॥
स्वामिनं रमयामासुः केचित्सुरकुमारकाः । विचित्रैः कंदुकैर्भूमौ लुठंतः कंदुका इव ॥ ६७० ॥

चाटूनि जीव जीवेति नंद नंदेत्यनेकशः। केऽपि राजशुकीभूय चाटुकारा इवावदन् ॥ ६७१ ॥
स्वामिनो रमणायैके केकीभूय दिवौकसः। केकाप्रधानाः पुरतो ननृतुः षड्जगायिनः ॥ ६७२ ॥
हंसीभूयापरे चेरुः पार्श्वे गांधारधारिणः। प्रभोः सलीलहस्ताब्जग्रहणस्पर्शहृत्तयः ॥ ६७३ ॥
क्रौंचीभूयाग्रतः केऽपि मध्यमाराविणोऽरसन्। स्वामिनः प्रीतिमद्दृष्टिपातामृतपिपासिताः ॥ ६७४ ॥
केऽपि पुंस्कोकिलीभूय पंचमस्वरमुज्जगुः। स्थित्वोपस्वामितरुषु तन्मनःप्रीतिहेतवे ॥ ६७५ ॥
आययुस्तुरगीभूय धैवतध्वनिहेषिणः। स्वामियानतयात्मानं पिपावयिषवोऽपरे ॥ ६७६ ॥
केऽप्येयुः कलभीभूय निषादस्वरराविणः। स्पृशंतोऽधोमुखीभूय करेण चरणौ प्रभोः ॥ ६७७ ॥
केचिच्च वृषभीभूय ऋषभस्वरबंधुरम्। ताडयंतस्तटीः शृंगैर्दृग्विनोदं व्यधुर्विभोः ॥ ६७८ ॥
महिषीभूय केऽप्यस्थुरंजनाचलसन्निभाः। युद्ध्यमाना मिथो युद्धक्रीडां भर्तुरदर्शयन् ॥ ६७९ ॥
केऽपि भर्तुर्विनोदायास्फालयंतो भुजान्मुहुः। मल्लीभूयाक्षवाटांतराह्वासत[1] परस्परम् ॥ ६८० ॥
एवं विनोदैर्विविधैर्वृंदारककुमारकैः। उपास्यमानः सततं परमात्मेव योगिभिः ॥ ६८१ ॥
ताभिर्धात्रीभिरुद्यानपालीभिरिव पादपः। अप्रमत्तं लाल्यमानः क्रमेण ववृधे प्रभुः ॥ ६८२ ॥ संदानितकम्
अंगुष्ठपानावस्थायाः परस्ताद्वयसि स्थिताः। गृहवासे परेऽर्हंतः सिद्धमन्नं हि भुंजते ॥ ६८३ ॥
देवानीतोत्तरकुरुफलानि बुभुजे सदा। क्षीरोदवारि च पपौ भगवान्नाभिनंदनः ॥ ६८४ ॥ युग्मं ॥
बाल्यं कल्यमिवोल्लंघ्य मध्यंदिनमिवार्यमा। विभुर्विभक्तावयवं द्वितीयं शिश्रिये वयः ॥ ६८५ ॥

---

१ अक्षवाटात मल्लयुद्धभूम्यन्तः।

यौवनेऽपि मृदू रक्तौ कमलोदरसोदरौ । उष्णावकंप्रावस्वेदौ पादौ समतलौ प्रभोः ॥ ६८६ ॥
नतार्त्तिच्छेदनायेव प्रपेदे चक्रमीशितुः । सदास्थितश्रीकरेणोरिव दामांकुशध्वजाः ॥ ६८७ ॥
स्वामिनः पादयोर्लक्ष्मीलीलासदनयोरिव । शंखकुंभौ तले पार्ष्णौ स्वस्तिकश्च विरेजिरे ॥ ६८८ ॥
मांसलो वर्तुलस्तुंगो भुजंगमफणोपमः । अंगुष्ठः स्वामिनो वत्स इव श्रीवत्सलांछनः ॥ ६८९ ॥
प्रभोर्निर्वातनिष्कंपस्निग्धदीपशिखोपमाः । नीरंध्रा ऋजवोऽगुल्यो दलानीव पदाब्जयोः ॥ ६९० ॥
नंद्यावर्त्ता जगद्भर्तुः पादांगुलितलेष्वभान् । यद्बिंबानि क्षितौ धर्मप्रतिष्ठाहेतुतां ययुः ॥ ६९१ ॥
[1]यवाः पर्वस्वंगुलीनामधो वापीन्निराबभुः । उप्ता इव जगल्लक्ष्मीविवाहाय जगत्प्रभोः ॥ ६९२ ॥
कंदः पादांबुजस्येव पार्ष्णिर्वृत्तायतः पृथुः । अंगुष्ठांगुलिफणिनां फणामणिनिभा नखाः ॥ ६९३ ॥
हेमारविंदमुकुलकर्णिकागोलकश्रियम् । गूढौ गुल्फौ वितेनाते नितांतं स्वामिपादयोः ॥ ६९४ ॥
प्रभोः पादावुपर्यानुपूर्व्या कूर्मवदुन्नतौ । [2]अप्रकाशशिरौ स्निग्धच्छवी लोमविवर्जितौ ॥ ६९५ ॥
अंतर्मग्नास्थिपिशितपुष्कले क्रमवर्त्तुले । [3]एणीजंघाविडंबिन्यौ जंघे गौर्यौ जगत्पतेः ॥ ६९६ ॥
जानुनी स्वामिनोऽधातां वर्त्तुले मांसपूरिते । तूलपूर्णपिधानांतः क्षिप्तदर्पणरूपताम् ॥ ६९७ ॥
ऊरू च मृदुलौ स्निग्धावानुपूर्व्येण पूरितौ । बिभरांचक्रतुः प्रौढकदलीस्तंभविभ्रमम् ॥ ६९८ ॥
स्वामिनः कुंजरस्येव मुष्कौ[4] गूढौ समस्थिती । अतिगूढं वपुश्चिह्नं कुलीनस्येव वाजिनः ॥ ६९९ ॥
तच्चासिरमनिम्नोच्चमह्रस्वादीर्घमश्लथम् । सरलं मृदु निर्लोम वर्तुलं [5]सुरभींद्रियम् ॥ ७०० ॥

१ यवा यवाकाराणि रेखाचिह्नानि । २ अदृष्टशिरौ । ३ एणी मृगी । ४ मुष्कौ अण्डकोशौ । ५ सुरभींद्रिय लिङ्ग ।

शीतप्रदक्षिणावर्त्तशब्दमुक्तैकधारकम् । अबीभत्सावर्त्ताकारकोशस्थं पंजरं तथा ॥ ७०१ ॥
आयता मांसला स्थूला विशाला कठिना कटिः । मध्यभागस्तनुत्वेन कुलिशोदरसोदरः॥ ७०२ ॥
नाभिर्बभार गंभीरा सरिदावर्त्तविभ्रमम् । कुक्षी स्निग्धौ मांसवंतौ कोमलौ सरलौ समौ ॥७०३॥
अथाप्युरःस्थलं स्वर्णशिलापृथुलमुन्नतम् । श्रीवत्सरत्नपीठांकं श्रीलीलावेदिकाश्रयम् ॥ ७०४ ॥
दृढौ पीनोन्नतौ स्कंधौ ककुद्मत्ककुदोपमौ । अल्परोमोन्नते कक्षे गंधस्वेदमलोज्झिते ॥ ७०५ ॥
पीनौ पाणिफणाभोगौ भुजावाजानुलंबिनौ । चंचलाया नियमने नागपाशाविव श्रियः ॥ ७०६ ॥
नवाम्रपल्लवाताम्रतलौ निष्कर्मकर्कशौ । अस्वेदनावपच्छिद्रावुष्णौ पाणी जगत्पतेः ॥ ७०७ ॥
दंडचक्रधनुर्मत्स्यश्रीवत्सकुलिशांकुशैः । ध्वजाब्जचामरछत्रशंखकुंभाब्धिमंदरैः ॥ ७०८ ॥
मकरर्षभसिंहाश्वरथस्वस्तिकदिग्गजैः । प्रासादतोरणद्वीपैः पाणी पादाविवांकितौ ॥ ७०९ ॥ युग्मम् ॥
अंगुष्ठांगुलयः शोणाः[1] सरलाः शोणपाणिजाः । प्ररोहा इव कल्पद्रोः प्रांतमाणिक्यपुष्पिताः ॥ ७१० ॥
यवाः स्पष्टमशोभंत स्वामिनोऽङ्गुष्ठपर्वसु । यशोवरतुरंगस्य पुष्टिवैशिष्ट्यहेतवः ॥ ७११ ॥
अंगुलीमूर्द्धसु विभोः सर्वसंपत्तिशंसिनः । दधुः प्रदक्षिणावर्ता दक्षिणावर्त्तशंखताम्[2] ॥ ७१२ ॥
कृच्छ्रात्कुद्धरणीयानि जगंति त्रीण्यपीत्यभान् । संख्यालेखा इव तिस्रो रेखा मूले कराब्जयोः ॥ ७१३ ॥
वर्त्तुलो नातिदीर्घश्च रेखात्रयपवित्रितः । गंभीरध्वनिराधत्ते कंठः कंबुविडंबनाम् ॥ ७१४ ॥
विमलं वर्त्तुलं कांतितरंगि वदनं विभोः । पीयूषदीधितिरिवापरो लांछनवर्जितः ॥ ७१५ ॥

---

१ शोणा रक्ताः । २ शंखतुलना ।

मसृणौ मांसलौ स्निग्धौ कपोलफलकौ प्रभोः । दर्पणाविव सौवर्णौ वाग्लक्ष्म्योः सहवासयोः ॥ ७१६ ॥
अंतरावर्तसुभगौ कर्णौ स्कंधावलंबिनौ । प्रभोर्मुखप्रभासिंधुतीरस्थे शुक्तिके इव ॥ ७१७ ॥
ओष्ठौ बिंबोपमौ दंता द्वात्रिंशत्कुंदसोदराः । क्रमस्फारा क्रमोत्तुंगा वंशानासा महेशितुः ॥७१८॥
अह्रस्वदीर्घं चिबुकं मांसलं वर्तुलं मृदु । मेचकं बहुलं स्निग्धं कोमलं स्मश्रुतायिनः ॥ ७१९ ॥
प्रत्यग्रकल्पविटपिप्रवालारुणकोमला । प्रभोर्जिह्वा नातिस्थूला द्वादशांगागमार्थसूः ॥ ७२० ॥
अंतरा कृष्णधवले प्रांतरक्ते विलोचने । नीलस्फटिकशोणाश्ममणिन्यासमये इव ॥७२१॥
ते च कर्णांतविश्रांते कज्जलश्यामपक्ष्मणी । विकस्वरे तामरसे निलीनालिकुले इव ॥ ७२२ ॥
बिभरांचक्रतुर्भर्तुः श्यामले कुटिले भ्रुवौ । दृष्टिपुष्करिणीतीरसमुद्भिन्नलताश्रियम् ॥ ७२३ ॥
विशालं मांसलं वृत्तं कठिनं मसृणं समम् । भालस्थलं जगद्भर्तुरष्टमीसोमसोदरम् ॥ ७२४ ॥
भुवनस्वामिनो मौलिरानुपूर्व्या समुन्नतः । दधावधोमुखीभूतछत्रसब्रह्मचारिताम् ॥ ७२५ ॥
मौलिछत्रे महेशस्य जगदीशत्वशंसिनि । वृत्तमुत्तुंगमुष्णीषं[1] शिश्रिये कलशश्रियम् ॥ ७२६ ॥
केशाश्चकाशिरे मूर्ध्नि प्रभोर्भ्रमरमेचकाः[2] । कुंचिताः कोमलाः स्निग्धाः कालिंद्या इव वीचयः ॥ ७२७ ॥
गोरोचनागर्भगौरी स्निग्धस्वछा त्वगाबभौ । स्वर्णद्रवविलिप्तेव तनौ त्रिजगदीशितुः ॥ ७२८ ॥
मृदूनि भ्रमरश्यामान्यद्वितीयोद्गमानि च । बिशतंतु[3]तनीयांसि लोमानि स्वामिनस्तनौ ॥ ७२९ ॥
इत्यसाधारणैर्नानालक्षणैर्लक्षितः प्रभुः । रत्नै रत्नाकर इव सेव्यः कस्येव नाभवत् ॥ ७३० ॥

---

१ उष्णीष शिरोवेष्टन । २ भ्रमरवत् श्यामाः । ३ बिसततुवत् सूक्ष्माणि ।

दत्तहस्तो महेंद्रेण यक्षैरुत्क्षिप्तचामरः । धरणेंद्रकृतद्वास्थ्यो धृतछत्रः प्रचेतसा ॥ ७३१ ॥
विष्वक् परिवृतो देवैर्जीव जीवेति वादिभिः ।[1]अनुत्सिक्तो जगत्स्वामी विजहार यथासुखम्॥७३२॥युग्मम्
देवानीतासनासीनो बलींद्रांकाहितक्रमः । चमरेंद्रांकपर्यंकविन्यस्तो[2]त्तरविग्रहः ॥ ७३३ ॥
अप्सरोभिरुन्नयतो [3]हस्तशाटकपाणिभिः । उपास्यमानोऽनासक्तः संगीतं दीव्यमैक्ष्यत ॥ ७३४ ॥ युग्मम्
अन्येद्युः क्रीडया क्रीडद्बालभावानुरूपया । मिथो मिथुनकं किंचित्तले तालतरोरगात् ॥ ७३५ ॥
तदैव दैवदुर्योगात्तन्मध्यान्नरमूर्द्धनि । तस्मिंद्रक इवैरंडेऽपतत्तालफलं महत् ॥ ७३६ ॥
प्रहतः काकतालीयन्यायेन स तु मूर्द्धनि । विपन्नो बालकस्तत्र प्रथमेनापमृत्युना ॥ ७३७ ॥
ययौ सोऽल्पकषायत्वाद्दिवं मिथुनदारकः । तूलमप्यल्पभारत्वादाकाशमनुधावति ॥ ७३८ ॥
पुरा हि मृतमिथुनशरीराणि [4]महाखगाः । नीडकाष्ठमिवोत्पाट्य सद्यश्चिक्षिपुरंबुधौ ॥ ७३९ ॥
भ्रंशात्तस्यानुभावस्य तदानीं तत्कलेवरम् । तस्थौ तथैवावसर्पत्प्रभावा ह्यवसर्पिणी[5] ॥ ७४० ॥
बालिकास्य द्वितीयाथ निसर्गान्मौग्ध्यशालिनी । सा विक्रीतावशिष्टेव तस्थौ तरलितेक्षणा ॥ ७४१ ॥
आदाय तां तज्जनकमिथुनं पर्यवर्द्धयत् । नामधेयं पुनस्तस्याः सुनंदेति विनिर्ममे ॥ ७४२ ॥
दिनैः कतिपयैः तस्या विपन्नौ पितरावपि । जातापत्यानि युग्मानि जीवंति कियदेव हि ॥ ७४३ ॥
किंकर्त्तव्यजडा सापि बालिका लोललोचना । यूथभ्रष्टा कुरंगीव बभ्रामैकाकिनी वने ॥ ७४४ ॥

---

१ अनुत्सिक्तो निर्गर्वः । २ उत्तरविग्रह उत्तरकायः । ३ हस्तगृह्याः पटखण्डा हस्तशाटकाः । ४ महापक्षिणः । ५ अवसर्पत्प्रभावा न्हसत्प्रभावा ।

सरलांगुलिपत्राभ्यां सा पादाभ्यां पदे पदे । विकस्वराणि पद्मानि रोपयंतीव भुव्यपि ॥ ७४५ ॥
जंघे कांचनतूणीराविव[1] कामस्य बिभ्रती । आनुपूर्व्या पृथू वृत्तावूरू करिकरोपमौ ॥ ७४६ ॥
कंदर्पद्यूतकृत्स्वर्णशारिफलक[2]विभ्रमम् । बिभ्राणेन नितंबेन मांसलेन गरीयसा ॥ ७४७ ॥
मुष्टिग्राह्येण मध्येनाकर्षेणेव मनोभुवः । तस्यैवाक्रीडवाप्येव नाभिदेशेन शोभिता ॥ ७४८ ॥
वलीतरंगत्रितयीमुदरेण च बिभ्रती । रूपास्तत्रिजगत्स्त्रैणजयरेखात्रयीमिव ॥ ७४९ ॥
धारयंती रतिप्रीत्योः क्रीडाशैलाविव स्तनौ । तयोरेव स्वर्णदोलायष्टी इव च दोर्लते ॥ ७५० ॥
कंठेन च त्रिरेखेण कंबुविभ्रमहारिणा । अधरेण पराभूतपक्वबिंबफलत्विषा ॥ ७५१ ॥
दंतैरधरशुक्त्यंतःस्थितैर्मुक्ताकणैरिव । नासया नेत्रनलिननालेनेवातिहारिणी ॥ ७५२ ॥
गंडौ भालसपर्द्धयेवार्द्धेंदुलक्ष्मीमलिम्लुचौ । दधती कुंतलांश्चास्यपद्मलग्नानलीनिव[3] ॥ ७५३ ॥
सर्वांगसुंदरा पुण्यलावण्यामृतकूलिनी । वनांतर्वनदेवीव संचरंती व्यराजत ॥ ७५४ ॥ दशभिः कुलकम् ।
ततश्चैकाकिनीं मुग्धां मिथुनान्यवलोक्य ताम् । किंकर्त्तव्यविमूढानि श्रीनाभेरुपनिन्यिरे ॥ ७५५ ॥
एषा ऋषभनाथस्य धर्मपत्नी भवत्विति । प्रतिजग्राह तां नाभिर्नेत्रकैरवकौमुदीम् ॥ ७५६ ॥
अत्रांतरेऽवधिज्ञानप्रयोगेण पुरंदरः । भर्तुर्विवाहसमयं ज्ञात्वा तत्र समाययौ ॥ ७५७ ॥
प्रणम्य चरणौ पत्युः पत्तिमात्र इवाग्रतः । स्थित्वा दिवस्पतिर्बद्धांजलिरेवं व्यजिज्ञपत् ॥ ७५८ ॥
अज्ञो ज्ञाननिधिं नाथं यो मंत्रेण धिया पुमान् । प्रविवर्त्तयिषे कार्येषूपहासास्पदं हि सः ॥ ७५९ ॥

१ सुवर्णनिषङ्गौ । २ शारिफलक पाशकद्यूतगुटिका । ३ मुखपद्मलग्नान् भ्रमरानिव ।

स्वामिनातिप्रसादेन सदा भृत्या हि वीक्षिताः । स्वच्छंदमपि जल्पंति कदाचिदपि किंचन ॥ ७६० ॥
विदित्वा स्वाम्यभिप्रायं ये प्राहुस्ते च सेवकाः । अज्ञात्वा यद्ब्रुवे तत्राप्रसादं नाथ मा कृथाः ॥ ७६१ ॥
मन्ये स्वामी वीतरागो गर्भवासात्प्रभृत्यपि । चतुर्थपुरुषार्थाय[1] सज्जोऽन्यार्थानपेक्षया ॥ ७६२ ॥
तथापि नाथ लोकानां व्यवहारपथोऽपि हि । त्वयैव मोक्षवर्त्मेव सम्यक् प्रकटयिष्यते ॥ ७६३ ॥
तल्लोकव्यवहाराय पाणिग्रहमहोत्सवम् । विधीयमानं भवतेच्छामि नाथ प्रसीद मे ॥ ७६४ ॥
सुमंगलासुनंदे च देव्यौ भुवनभूषणे । स्वानुरूपे रूपवत्यौ स्वामिन्नुद्वोढुमर्हसि ॥ ७६५ ॥
स्वाम्यप्यवधिनाज्ञासीत्कर्म भोगफलं दृढम् । त्रिषष्टिं[2] पूर्वलक्षाणां यावद्भोक्तव्यमस्ति नः ॥ ७६६ ॥
अवश्यभोक्तव्यमिदं कर्मेत्याधूनयन् शिरः । तस्थावधोमुखः स्वामी तदा सायं सरोजवत् ॥ ७६७ ॥
अथ भर्तुरभिप्रायमुपलक्ष्य पुरंदरः । विवाहकर्मारंभाय सद्यो देवानजूहवत् ॥ ७६८ ॥
अथाभियोगिका देवाः पाकशासनशासनात् । मंडपं रचयामासुः सुधर्माया इवानुजम् ॥ ७६९ ॥
स्वर्णमाणिक्यरजतस्तंभास्तत्र चकाशिरे । मेरुरोहणवैताढ्यचूलिका इव रोपिताः ॥ ७७० ॥
शातकुंभमयास्तत्र कुंभाः प्रद्योतकारिणः । चक्रिणः काकणीरत्नमंडलानीव रेजिरे ॥ ७७१ ॥
सुवर्णवेदिकास्तत्र बभुरुद्यद्भिरंशुभिः । पर्यस्यंत्य इवादित्यं तेजोऽन्यदसहिष्णवः ॥ ७७२ ॥
प्रविशंतो मणिशिलाभित्तिषु प्रतिबिंबिताः । के के न प्रापुवंस्तत्र परिवारपरिक्रियाम् ॥ ७७३ ॥
रत्नस्तंभेष्ववष्टब्धाः संगीतश्रांतनर्त्तकीः । विडंबयंत्यस्तत्रोच्चैः शालभंज्यो[3] बभासिरे ॥ ७७४ ॥

---

१ चतुर्थपुरुषार्थाय मोक्षाय । २ अत्र त्र्यशीति इति क्वचित्पुस्तके पाठान्तरो दृश्यते । ३ शालभञ्ज्यः पुत्तलिकाः ।

तोरणानि प्रतिदिशं संतानतरुपल्लवैः । तत्राभवन् धनूंषीव सज्जितानि मनोभुवा ॥ ७७५ ॥
स्फाटिकद्वारशाखासु बभुर्नीलाश्मतोरणाः । शरदभ्रावलीमध्यस्थितकीराल[1]िसन्निभाः ॥ ७७६ ॥
क्वचित्स्फटिकवप्रोर्वीनिरंतरमरीचिभिः । सोऽतनोन्मंमण्डपः क्रीडापीयूषसरसीभ्रमम् ॥ ७७७ ॥
पद्मरागशिलाशोभिनिचयैः प्रसृतैः क्वचित् । सोऽदिशत् दिव्यविस्तारिकौसुंभांशुकसंचयम् ॥ ७७८ ॥
क्वचिन्नीलशिलारश्मिप्ररोहैः सोऽतिहारिभिः । पुनरुक्तोप्तमंगल्ययवांकुर इवाबभौ ॥ ७७९ ॥
क्वचिन्मरकतक्षोणिरश्मिदर्भैरखंडितैः । आर्द्रोपनीतमंगल्यवंशशंकां दिदेश सः ॥ ७८० ॥
श्वेतदिव्यांशुकोल्लोचच्छलेन गगनस्थया । गंगयेवाश्रितः सोऽभूत्तत्कौतुकदिदृक्षया ॥ ७८१ ॥
उल्लोचं परितस्तं च लंबिता मौक्तिकस्रजः । अष्टानां ककुभां हर्षहसितानीव रेजिरे ॥ ७८२ ॥
चतस्रो रत्नकलशश्रेण्योऽभ्रंलिहाग्रकाः[3] । पर्य्यष्टाप्यंत देवीभिर्निधानानि रतेरिव ॥ ७८३ ॥
आर्द्राः शुशुभिरे वंशाः कुंभावष्टंभदायिनः । विश्वावष्टंभदस्वामिवंशवृद्धेर्नु सूचकाः ॥ ७८४ ॥
आरभस्व स्रजो रंभे दूर्वामुर्वशि सज्जय । घृताचि घृतदध्यादि वरार्घाय समाहर ॥ ७८५ ॥
मंजुघोषे मंजु घोषयालीर्धवलमंगलान् । त्वं सुगंधे सुगंधीनि वस्तूनि प्रगुणीकुरु ॥ ७८६ ॥
स्वस्तिकानुत्तमान् द्वारदेशे देहि तिलोत्तमे । मेने समानयायातानुचितालापभंगिभिः ॥ ७८७ ॥
सुकेशि केशाभरणं वधूवरकृते धर । सहजन्ये जन्ययात्रानृणां स्थानं प्रदर्शय ॥ ७८८ ॥
चित्रलेखे लिखालेख्यं विचित्रं मातृवेश्मनि । प्रगुणीकुरु तूर्णं त्वं पूर्णपात्राणि पूर्णिनि ॥ ७८९ ॥

---

१ कीरालि. शुकपक्ति. । २ दिशा । ३ अभ्रलिहाग्रकाः आकाशपर्यंतोन्नताग्रका ।

पुंडरीके पुंडरीकैः पूर्णकुंभान् विभूषय । त्वं स्थापय यथास्थानमभ्रोच्चे वरमंचिकाम् ॥ ७९० ॥
आपादय हंसपादि त्वं वधूवरपादुकाः । त्वं पुंजिकास्थले वेदिस्थलीं लिंपाशु गोमयैः ॥ ७९१ ॥
रामे किं रमसेऽन्यत्र हेमे किं हेम वीक्षसे । क्रतुस्थले प्रमत्तेव किमसि त्वं विसंस्थुला[1] ॥ ७९२ ॥
किं चिंतयसि मारीचि सुमुख्यसि किमुन्मुखी । किमर्वाग्नासि गांधर्वि दिव्ये दीव्यसि किं मुधा ॥७९३॥
आसनं वर्त्तते लग्नं ननु सर्वात्मना ततः । स्वे स्वे त्वरध्वं कर्त्तव्ये विवाहोचितकर्मणि ॥ ७९४ ॥
मिथ इत्यादिशंतीनां नामग्राहं मुहुर्मुहुः । सरसोऽप्सरसां जज्ञे तुमुलस्तत्र संभ्रमात् ॥ ७९५ ॥

एकादशभिः कुलकं ॥

सुमंगला सुनंदां च मंगलस्नानहेतवे । ततश्चाप्सरसः काश्चिदासयामासुरासने ॥ ७९६ ॥
तयोरुद्गीयमाने तु धवले मंगले कले । व्यधुः सर्वांगमभ्यंगं तैलेनाथ सुगंधिना ॥ ७९७ ॥
पतदुद्वर्त्तनीपुंजपवित्रितमहीतलम् । पिष्टातकैः सूक्ष्मपिष्टैश्चक्रुश्चोद्वर्त्तनं तयोः ॥ ७९८ ॥
पादयोर्जानुनोः पाण्योरंसयोरलके तयोः । सुधाकुंडान्नवेवांगलीनांस्तांस्तिलकान् व्यधुः ॥ ७९९ ॥
कौसुंभसूत्रैस्तर्कुस्थैरंगं सव्यापसव्ययोः । ताः पस्पृशुः समचतुरस्रतामिव वीक्षितुम् ॥ ८०० ॥
एवं ते वरवर्णिन्यौ वर्णके[2] ताभिराहिते । प्रयत्नाद्धारयंतीभिर्धात्रीभिरिव चापलात् ॥ ८०१ ॥
तदैवोद्वर्णकमपि वर्णकस्येव सोदरम् । व्यधुस्तेनैव विधिना तयोस्ताः प्रमदोन्मदाः ॥ ८०२ ॥
निवेश्य चासनेऽन्यस्मिन् स्वर्णकुंभोदकैरथ । स्नपयंति स्म तास्ते स्वकुलयोरिव देवते ॥ ८०३ ॥

---

१ विसंस्थुला शिथिला । २ वर्णके लोके "वाना" इति प्रसिद्धे ।

भुजयोर्योजयामासुः केयूरे रत्नमंडिते । पुष्पबाणधनुर्बद्धवीरपट्टोपमे तयोः ॥ ८१८ ॥
हारमारोपयामासुरधिस्तनतटं तयोः । आतन्वानं स्थलारोहदवारोहन्नदीभ्रमम् ॥ ८१९ ॥
आमुक्तौ च तयोर्मुक्ताकंकणौ पाणिमूलयोः । आबालाविव पानीयशालिनौ लतयोस्तले ॥ ८२० ॥
प्रक्कणत्किंकिणीश्रेणिं श्रोणौ व्यश्राणयंस्तयोः । मणिकांचीं रतेर्देव्या इव मंगलपाठिकाम् ॥ ८२१ ॥
तयोरारोपयामासुः पादयो रत्ननूपुरौ । झणज्झणिति कुर्वाणौ स्तुवंताविव तद्गुणान् ॥ ८२२ ॥
सज्जयित्वैवमुत्पाट्य देव्यौ देवीजनेन ते । नीत्वा मातृगृहस्यांतरासिते कांचनासने ॥ ८२३ ॥
विवाहसज्जीभवनायोपेत्य नमुचिद्विषा । विज्ञाप्यमानो निर्बंधात्प्रभुर्वृषभलांछनः ॥ ८२४ ॥
दर्शनीया स्थितिर्लोके भोक्तव्यं भोग्यकर्म च । अस्ति मे चिंतयित्वैवमन्वमन्यत तद्वचः ॥ ८२५ ॥
युग्मम् ।
अथ स्वामी महेंद्रेण स्नपयित्वा विलिप्य च । यथाविधि विधिज्ञेन भूषितो भूषणादिना ॥ ८२६ ॥
वेत्रिणेव महेंद्रेण शोध्यमानाग्रवर्त्मकः । उत्तार्यमाणलवणः पार्श्वयोरप्सरोजनैः ॥ ८२७ ॥
इंद्राणीभिर्गीयमानश्रेयोधवलमंगलः । सामानिकादिदेवीभिः क्रियमाणावतारणः ॥ ८२८ ॥
गंधर्वाद्यैर्वाद्यमानातोद्यः सद्योभुवा मुदा । स्वामीदिव्येन यानेन मंरूपद्वारमाययौ ॥ ८२९ ॥
त्रिभिर्विशेषकम् ॥
स्वामी स्वयं विधिज्ञोऽथ यानादुत्तीर्य तत्र तु । अब्धिवेलेव मर्यादालताभूमावथास्थितः ॥ ८३० ॥

तत्र त्रिदशनाथेन दत्तबाहुर्बभौ विभुः । महीरुहमवष्टभ्य स्तम्बेरम[1] इव स्थितः ॥ ८३१ ॥

त्रटत्रटिति कुर्वाणलवणानलगर्जितम् । शरावसंपुटं[2] द्वारि मुमुचुर्मंडपस्त्रियः ॥ ८३२ ॥

रूप्यस्थालं च दूर्वादिमंगल्यद्रव्यलांछितम् । काप्यग्रे धारयामास राकेव[3] मृगलांछनम् ॥ ८३३ ॥

पंचशाखेन वैशाखं[4] प्रत्यक्षमिव मंगलम् । उत्क्षिप्यार्घाय काप्यग्रे कौसुंभवसनाऽभवत् ॥ ८३४ ॥

देह्यर्घमर्घदेऽर्घ्याय क्षणं म्रक्षणमुत्क्षिप । स्थालाङ्कमेहि च दधि पीयूषमुदधेरिव ॥ ८३५ ॥[5]

सुंदरे नंदनानीतचंदनद्रवमुन्नय । आहृतां भद्रशालोर्व्या दूर्वां समुदमुद्धर ॥ ८३६ ॥

मिलल्लोकेक्षणश्रेणिजातजंगमतोरणः । तोरणद्वारि नन्वेष जगत्त्रयवरो वरः ॥ ८३७ ॥

ऊर्ध्वस्तिष्ठत्युत्तरीयाच्छादिताशेषविग्रहः । गंगातरंगांतरितराजहंसयुवोपमः ॥ ८३८ ॥

वातेनोद्वांति पुष्पाणि चंदनं च विशुष्यति । तद्द्वारि सुंदरि चिरं वरं माधर माधर ॥ ८३९ ॥

देवस्त्रीभिर्गीयमानेषूच्चकैर्धवलेष्विति । अर्घं त्रिजगदर्घ्याय ददावथ वराय सा ॥ ८४० ॥

षड्भिः कुलकम् ।

प्रारब्धधवलेवोच्चैः क्वणद्भिर्भुजकंकणैः । मंथा[7] चुचुंब बिंबोष्ठी त्रिर्भालं त्रिजगत्पतेः ॥ ८४१ ॥

शरावसंपुटं साग्नि हिमकर्परलीलया । पदा सपादुकेनाथ वामेनादलयद्विभुः ॥ ८४२ ॥

ततस्तयाऽर्घदायिन्या कंठे कौसुंभवाससा । प्रक्षिप्तेनाकृष्यमाणो ययौ मातृगृहं प्रभुः ॥ ८४३ ॥

---

१ हस्ती । २ शरावसपुट मृण्मयपात्रविशेषसपुट । ३ राका पूर्णिमा । ४ वैशाख मथनदण्डम् । ५ इद श्लोकद्वय (८३५–३६) क्वचित्पुस्तके न दृश्यते । ६ म्रक्षण नवनीतं । ७ मथा मथनदण्डेन ।

कंदेन मदनस्येव मदनेनोपशोभितम् । वधूवरस्य हस्तेषु हस्तसूत्रमबध्यत ॥ ८४४ ॥
अग्रतो मातृदेवीनामथोच्चैः कांचनासने । आसांचक्रे प्रभुर्मेरुशिलायामिव केशरी ॥ ८४५ ॥
शम्यश्वत्थत्वचौ पिष्ट्वा हस्तलेपं ततः स्त्रियः । निदधुः कन्ययोः पाणौ स्मरद्रोरिव दोहदम् ॥ ८४६ ॥
शुभलग्नोदये तूर्णमविहस्तस्ततः प्रभुः । हस्तलेपयुतौ हस्तौ हस्ताभ्यामग्रहीत्ततः ॥ ८४७ ॥
हस्तसंपुटमध्यस्थहस्तलेपांतरूर्मिकाम् । चिक्षेप तत्र सुत्रामा[1] पल्वले शालिबीजवत् ॥ ८४८ ॥
ताभ्यां शुभाभ्यामुभयहस्ताभ्यां बभौ विभुः । शाखाद्वितयलग्नाभ्यां लताभ्यामिव पादपः ॥ ८४९ ॥
वधूवरदृशोऽन्योऽन्यं तारामेलकपर्वणि । सरित्पतिं सरित्तोयानीवाभिमुखमापतन् ॥ ८५० ॥
दृष्टिर्दृष्ट्या तदानीं च निर्वातजलनिश्चला । मनसैव मनस्तेषां परस्परमयुज्यत ॥ ८५१ ॥
कनीनिकासु तेऽन्योऽन्यं रेजिरे प्रतिबिंबिताः । प्रविशंत इवान्योन्यं हृदयेष्वनुरागतः ॥ ८५२ ॥
इतश्चानुचरीभूय सुराः सामानिकादयः । पार्श्वेष्वस्थुः प्रभोर्मेरोरिव विद्युत्प्रभादयः ॥ ८५३ ॥
वधूभ्योः पारिपार्श्विक्यश्चतुरा नर्मकर्मणि[2] । एवं कौतुकधवलान् गातुमारेभिरे स्त्रियः ॥ ८५४ ॥
ज्वरीवाब्धिं शोषयितुं मोदकान् परिखादितुम् । अभ्यालुरनुवरको[3] मनसा केन नन्वसौ ॥ ८५५ ॥
मंडकेभ्योऽखंडदृष्टिः कांडुकस्येव कुक्कुरः । स्पृहयालुरनुवरो मनसा केन नन्वसौ ॥ ८५६ ॥
आजन्मादृष्टपूर्वी किं वटकान् रोरबालवत्[4] । अभ्यत्तेऽत्तुमनुवरो मनसा केन नन्वसौ ॥ ८५७ ॥
तोयानां चातक इव धनानामिव याचकः । पूगानां श्राद्धोऽनुवरो मनसा केन नन्वसौ ॥ ८५८ ॥

१ सुत्रामा इन्द्रः । २ हास्यकर्मणि । ३ अनुवरक उपवरको लोके "अणवर" इति प्रसिद्धः । ४ रोरो रङ्कस्तस्य बालवत् ।

ताबूलवल्लीपत्राणा तृणानामिव तर्णकः । श्रद्धालुरद्यानुवरो मनसा केन नन्वसौ ॥ ८५९ ॥
हैयंगवीनपिंडस्य बिडाल इव लंपटः । श्राद्धश्चूर्णस्यानुवरो मनसा केन नन्वसौ ॥ ८६० ॥
विलेपनस्य केदारकर्दमस्येव कासरः । श्रद्धां दधात्यनुवरो मनसा केन नन्वसौ ॥ ८६१ ॥
निर्माल्यानामिवोन्मत्तो माल्यानां लोललोचनः । श्रद्धानुबंध्यनुवरो मनसा केन नन्वसौ ॥ ८६२ ॥
एवं कौतुकधवलान् कौतुकोत्कर्णिताननाः । आकर्णयंतोऽस्थुर्लेखा[1] आलेख्यलिखिता इव ॥ ८६३ ॥
लोकेषु व्यवहारोऽयं दर्शनीय इति प्रभुः । विवाद इव मध्यस्थस्तदुपेक्षितवांस्तदा ॥ ८६४ ॥
नावोरिवांचलौ देव्योरंचलाभ्यां जगत्पतेः । महाप्रवहणस्येव बबंध बलसूदनः ॥ ८६५ ॥
कट्यां स्वामिनमारोह्याभियोगिक इवामरः । अमराधिपतिर्नृत्याचलवेदिगृहं प्रति ॥ ८६६ ॥
इंद्राणीभ्यां द्रुतं देव्यावप्यारोह्य कटीतटे । अवियोजितहस्ताग्रं चालिते स्वामिना समम् ॥ ८६७ ॥
शिरोरत्नैस्त्रिजगतस्तैस्तैः सह वधूवरैः । पूर्वद्वारेण विविशुर्मध्येवेदिनिकेतनम् ॥ ८६८ ॥
त्रायस्त्रिंशसुरस्तत्र वह्निमह्नाय कोऽप्यथ । आविश्चक्रे वेदिकुंडे पृथ्वीमध्यादिवोत्थितम् ॥ ८६९ ॥
समिदाधानतो धूमलेखा व्यानशिरे दिवम् । कर्णावतंसतां यांत्यश्चिरं खेचरयोषिताम् ॥ ८७० ॥
तमग्निं परितोऽभ्राम्यत्स्वामी स्त्रीगीतमंगलः । सुमंगलासुनंदाभ्यां यावत्पूर्णाष्टमंडली ॥ ८७१ ॥
सहैव पाणिमोक्षेण तेषामंचलमोक्षणम् । गीयमानाभिराशीर्भिः कारयामास वासवः ॥ ८७२ ॥
सपत्नीकोऽथ मघवा हस्ताभिनयलीलया । ननर्त रंगाचार्य[2]इति स्वाम्युत्सवभवा मुदः ॥ ८७३ ॥

---

१ लेखा देवा. । २ रङ्गाचार्यवदाचरन्ति ।

तमन्वनृत्यन्मुदिता अपरेऽपि दिवौकसः । मरुता नर्त्तितं वृक्षमन्वाश्रितलता इव ॥ ८७४ ॥
कैश्चिज्जयजयारावकारिभिश्चारणैरिव । कैश्चिद्विचित्रचारीकं नृत्यद्भिर्नरतैरिव ॥ ८७५ ॥
गंधर्वैरिव गायद्भिरपरैर्जातिबंधुरैः । वादयद्भिर्मुखान्यन्यैरातोद्यानीव सुस्फुटं ॥ ८७६ ॥
संभ्रमेण प्लवमानैः प्लवंगैरिव कैश्चन । हासयद्भिर्जनं सर्वमन्यैर्वैहासिकैरिव ॥ ८७७ ॥
अपसारयद्भिर्लोकं प्रतीहारैरिवापरैः । हर्षोन्मत्तैः सुरैरेवं दृश्यमानस्वभक्तिकः ॥ ८७८ ॥
सुमंगलासुनंदाभ्यां भूषितोभयपार्श्वकः । दिव्ययानाधिरूढोऽथ स्वस्थानमगमद्विभुः ॥ ८७९ ॥

पञ्चभिः कुलकम् ।

एवं निवर्त्तितोद्वाहः प्रभुं नत्वा स्वमाश्रयम् । ययौ समाप्तसंगीतो रंगाचार्य इवाद्रिभित् ॥ ८८० ॥
ततः प्रभृति सोद्वाहस्थितिः स्वामिप्रवर्त्तिता । प्रावर्त्तत परार्थाय महतां हि प्रवृत्तयः ॥ ८८१ ॥
भोगान् स्वाम्यप्यनासक्तः पत्नीभ्यां बुभुजे चिरम् । सद्वेदनीयमपि हि न कर्म क्षीयतेऽन्यथा ॥ ८८२ ॥
विवाहानंतरं ताभ्यां समं विलसतः प्रभोः । गतेषु किंचिदूनेषु पूर्वलक्षेषु षट्स्वथ ॥ ८८३ ॥
बाहुजीवपीठजीवौ च्युत्वा सर्वार्थसिद्धितः । कुक्षौ सुमंगलादेव्या युग्मत्वेनावतेरतुः ॥ ८८४ ॥ युग्मम् ॥
तौ सुबाहुमहापीठौ जीवौ सर्वार्थसिद्धितः । च्युत्वा कुक्षौ सुनंदायास्तद्वदेवावतेरतुः ॥ ८८५ ॥
चतुर्दश महास्वप्नान् गर्भमाहात्म्यशंसिनः । तदैव मरुदेवेव देव्यपश्यत्सुमंगला ॥ ८८६ ॥
स्वामिनी स्वामिने स्वप्नान् कथयामास तानथ । चक्रभृत्ते सुतो भावीत्याख्यत्प्रभुरपि स्फुटम् ॥ ८८७ ॥

---

१ रङ्गाचार्यः सूत्रधारः ।

सूर्यसंध्ये इव प्राची द्युतिद्योतितदिग्मुखे । अपत्ये भरतब्राह्म्यौ सुषुवेऽथ सुमंगला ॥ ८८८ ॥
अजीजनद्बाहुबलिसुंदर्यौ सुंदराकृती । सुनंदा स्वामिनी प्रावृडिव वारिदविद्युतौ ॥ ८८९ ॥
देवी सुमंगलैकोनपंचाशतमथ क्रमात् । असूत सुतयुग्मानि रत्नानीव विदूरभूः ॥ ८९० ॥
अवर्द्धंत क्रमेणामी रममाणा इतस्ततः । महौजसो महोत्साहा विंध्याद्रौ कलभा इव ॥ ८९१ ॥
शुशुभे वृषभस्वामी समंतात्परिवारितः । तैरपत्यैर्महाशाखी शाखाभिरिव भूरिभिः ॥ ८९२ ॥
तदा च कालदोषेण प्रभावः कल्पभूरुहाम् । अहीयत प्रदीपानामिव तेजो दिवामुखे ॥ ८९३ ॥
प्रादुरासन् कषायाश्च मिथुनानां क्रुधादयः । लाक्षाकणा इवाश्वत्थपादपानां शनैः शनैः ॥ ८९४ ॥
अथ हाकारमाकारधिक्काराख्यं नयत्रयम् । यतत्रयमिव व्याला मिथुनान्यत्यलंघयन् ॥ ८९५ ॥
संभूय ऋषभनाथं मिथुनान्युपतस्थिरे । तच्चासमंजसं सर्वं जायमानं व्यजिज्ञपन् ॥ ८९६ ॥
ज्ञानत्रयधरो जातिस्मरः स्वामीत्यवोचत । मर्यादोल्लंघिनां लोके राजा भवति शासिता ॥ ८९७ ॥
आसयित्वासनेऽत्युच्चेऽभिषिक्तः प्रथमं हि सः । चतुरंगबलोपेतः स्यादखंडितशासनः ॥ ८९८ ॥
तेप्यूचुर्भव राजा नस्त्वमेव किमुपेक्षसे । ईक्ष्यते नापरः कोऽपि मध्येऽस्माकं यदीदृशः ॥ ८९९ ॥
अभ्यर्थयध्वमभ्येत्य नाभिं कुलकरोत्तमम् । स वो दास्यति राजानमित्यभाषत नाभिभूः ॥ ९०० ॥
राजानं याचितस्तैस्तु नाभिः कुलकराग्रणीः । भवतामृषभो राजा भवत्विति जगाद तान् ॥ ९०१ ॥
अथो मिथुनधर्माणो मुदिताः समुपेत्य ते । अस्माकं नाभिना राजार्पितोसीत्यूचिरे प्रभुम् ॥ ९०२ ॥

१ यतत्रयं त्रिविधताडनविशेषः । २ शासिता नियामकः ।

ततः स्वाम्यभिषेकार्थं तेऽयुर्नीराय युग्मिनः । सिंहासनं चाकंपिष्ट त्रि[1]विष्टपपतेस्तदा ॥ ९०३ ॥
विज्ञायावधिना राज्याभिषेकसमयं प्रभोः । तत्राजगाम सुत्रामा गेहाद्गेहमिव क्षणात् ॥ ९०४ ॥
सौधर्मकल्पाधिपतिः कृत्वा कांचनवेदिकाम् । अतिपां[2]डुकंबलावत्तत्र सिंहासनं व्यधात् ॥ ९०५ ॥
राज्याभिषेकमृषभस्वामिनः पूर्वदिक्पतिः । देवानीतैस्तीर्थतोयैः सौ[3]वस्तिक इव व्यधात् ॥ ९०६ ॥
स्वामिनं वासयांचक्रे दिव्यवासांसि वासवः । चारुचंद्रातपमयानीव नैर्मल्यसंपदा ॥ ९०७ ॥
प्रभोर्जगत्किरीटस्य किरीटादीनि वृत्रहा । रत्नालंकरणान्यंगे यथास्थानं न्यवेशयत् ॥ ९०८ ॥
आजग्मुर्युग्मिनोऽप्यंभो गृहीत्वांभोजिनीदलैः । अदर्घा इव तस्थुस्ते पश्यंतो भूषितं प्रभुम् ॥ ९०९ ॥
दिव्यनेपथ्यवस्त्रालंकृतस्य शिरसि प्रभोः । न युज्यते क्षेप्तुमिति तेऽक्षिपन् पादयोः पयः ॥ ९१० ॥
विनीताः साध्वमी तेन विनीताख्यां प्रभोः पुरीम् । निर्मातुं श्रीदमादिश्य मघवा त्रिदिवं ययौ ॥ ९११ ॥
द्वादशयोजनायामां नवयोजनविस्तृताम् । अयोध्येत्यपराभिख्यां विनीतां सोऽकरोत्पुरीम् ॥ ९१२ ॥
तां च निर्माय नि[4]र्मायः पूरयामास यक्षराट् । अक्षय्यवस्त्रनेपथ्यधनधान्यैर्निरंतरम् ॥ ९१३ ॥
वज्रेंद्रनीलवैडूर्यहर्म्य[5]किर्मीररश्मिभिः । भित्तिं विनापि खे तत्र चित्रकर्म विरच्यते ॥ ९१४ ॥
तत्रोच्चैः कांचनैर्हर्म्यैर्मेरुशैलशिरांस्यभिः(?) । पत्रालंबनलीलेव ध्वजव्याजाद्वितन्यते ॥ ९१५ ॥

---

१ त्रिविष्टपपतेरिन्द्रस्य । २ अतिपाण्डुकम्बला नाम मेरूपरि जिनजन्मस्नात्रशिला वर्तते । ३ स्वस्तिवाचनकर्त्ता इव । ४ निर्मायो निष्कपटः । ५ किर्मीर कर्बुरं ।

तद्वप्रे दीप्तमाणिक्यकपिशीर्षपरंपराः । अयत्नादर्शतां यांति चिरं खेचरयोषिताम् ॥ ९१६ ॥
तस्यां गृहांगणभुवि स्वस्तिकन्यस्तमौक्तिकैः । स्वैरं कर्करिकक्रीडां कुरुते बालिकाजनः ॥ ९१७ ॥
तत्रोद्यानोच्चवृक्षाग्रस्खल्यमानान्यहर्निशम् । खेचरीणां विमानानि क्षणं यांति कुलायताम् ॥ ९१८ ॥
तत्र दृष्ट्वाट्टहर्म्येषु रत्नराशीन् समुत्थितान् । तदावरककूटोऽयं तर्क्यते रोहणाचलः ॥ ९१९ ॥
जलकेलिरतस्त्रीणा॰ त्रुटितैर्हारमौक्तिकैः । ताम्रपर्णीश्रियं तत्र दधते गृहदीर्घिकाः ॥ ९२० ॥
तत्रेभ्याः संति ते येषां कस्याप्येकतमस्य सः । व्यवहर्तुं गतो मन्ये वणिक्पुत्रो धनाधिपः ॥ ९२१ ॥
नक्तमिंदुदृषद्भित्तिमंदिरस्यंदिवारिभिः । प्रशांतपांसवो रथ्याः क्रियंते तत्र सर्वतः ॥ ९२२ ॥
वापीकूपसरोलक्षैः सुधासोदरवारिभिः । नागलोकं नवसुधाकुंडं परिबभूव सा ॥ ९२३ ॥
गतायां जन्मतः पूर्वलक्षाणां विंशतौ तदा । तस्यां नगर्यां राजाभूत्प्रभुः पालयितुं प्रजाः ॥ ९२४ ॥
ॐकार इव मंत्राणां नृपाणां प्रथमो नृपः । अपत्यानि निजानीव पालयामास स प्रजाः ॥ ९२५ ॥
असाधुशासने साधुपालने कृतकर्मणः । प्रत्यंगानि स्वकानीव मंत्रिणो विदधे विभुः ॥ ९२६ ॥
चौर्यादिरक्षणे दक्षानारक्षानप्यसूत्रयत् । सुत्रामेव लोकपालान् राजा वृषभलांछनः ॥ ९२७ ॥
अनीकस्यांगमुत्कृष्टमुत्तमांगं तनोरिव । राज्यस्थित्यै राजहस्ती हस्तिनः स समग्रहीत् ॥ ९२८ ॥
आदित्यतुरगस्पर्द्धयेवात्युद्धरकंधरान् । बंधुरान् धारयामास तुरगान् वृषभध्वजः ॥ ९२९ ॥
सुश्लिष्टकाष्ठघटितान् स्यंदनान्[1] नाभिनंदनः । विमानानीव भूस्थानि सूत्रयामास च स्वयम् ॥ ९३० ॥

१ सन्दनान् रथान ।

सुपरीक्षितसत्वानां पत्तीनां च परिग्रहम् । नाभिसूनुस्तदा चक्रे चक्रवर्त्तिभवे यथा ॥ ९३१ ॥
नव्यसाम्राज्यसौधस्य स्तंभानिव बलीयसः । अनीकाधिपतींस्तत्र स्थापयामास नाभिभूः ॥ ९३२ ॥
गोबलीवर्दकरभसैरिभाश्वतरादिकम् । आददे तदुपयोगविदुरो[1] हि जगत्पतिः ॥ ९३३ ॥
कल्पद्रुपु समुच्छिन्नेष्वनपत्यान्वयेष्विव । कंदमूलफलादीनि तदा बुभुजिरे जनाः ॥ ९३४ ॥
शालिगोधूमचणकमुद्गाद्या औषधीरपि । तृणवत्स्वयमुत्पन्नास्ते चखादुरपाकिमाः[2] ॥ ९३५ ॥
तस्मिन्नजीर्यत्याहारे तैर्विज्ञप्तोऽवदद्विभुः । मृदित्वा त्वचयित्वा(?)च हस्तैस्ताः खादताधुना ॥ ९३६ ॥
उपदेशं जगद्भर्तुस्तेषां पालयतामपि । काठिन्यादोषधीनां तु नाहारो जीर्यति स्म सः ॥ ९३७ ॥
तैर्विज्ञप्तः पुनः स्वामीत्यूचे संघृष्य पाणिभिः । तास्तिमित्वा जलैः पत्रपुटे धृत्वा च खादत ॥ ९३८ ॥
ते तथा चक्रिरे तत्राप्यजीर्णाहारवेदनां । तैर्विज्ञप्तो जगन्नाथः पुनरप्येवमादिशत् ॥ ९३९ ॥
पूर्वोक्तविधिमाधायौषधीर्मुष्टौ निधाय च । आतपे कक्षयोः क्षिप्त्वा भक्षयंतु ततः सुखम् ॥ ९४० ॥
तत्राप्यजीर्णाहारेण विधुरेषु[3] जनेष्वथ । तरुखंडे मिथः शाखाघर्षणादग्निरुत्थितः ॥ ९४१ ॥
तृणकाष्ठादि स प्रोषित् दीप्ररत्नक्रमेण तु । धावित्वादातुमारेभे प्रसारितकरैर्जनैः ॥ ९४२ ॥
तेनाग्निना दह्यमाना भीताः प्रभुमुपेत्य ते । नूतनं भूतमद्भुतं किंचिदप्येवमूचिरे ॥ ९४३ ॥
स्वाम्यप्यूचे स्निग्धरूक्षकालदोषोऽग्निरुत्थितः । नैकांतरूक्षे नैकांतस्निग्धे काले भवत्यसौ ॥ ९४४ ॥
स्थित्वास्य पार्श्वतो वह्नेः पर्यंतस्थं तृणादिकम् । अपसारयताशेषं पश्चाद्गृह्णीत तं ननु ॥ ९४५ ॥

---

१ विदुरो ज्ञाता । २ अपाकिमाः अपक्वाः । ३ विधुरेषु ग्लानि गतेषु ।

ततः पूर्वोक्तविधिना साधयित्वौषधीरिमाः । ज्वलनेऽस्मिन् परिक्षिप्य परिपच्य च खादत ॥ ५४६ ॥
ते तथा चक्रिरे मुग्धा दग्धा औषधयोऽग्निना । आगत्य कथयामासुरिति च स्वामिने पुनः ॥ ५४७ ॥
स्वामिन्न किंचिदस्मभ्यं ददात्येष बुभुक्षितः । कुक्षिंभरिरिवैकोऽत्ति क्षिप्ताः सर्वत औषधीः ॥ ५४८ ॥
तदानीं सिंधुरस्कंधाधिरूढः[1] प्रभुरप्यभूत् । तैः समानाययामास मृत्तिकापिंडमार्द्रकम् ॥ ५४९ ॥
कुंभिकुंभे मृदं न्यस्य प्रवितन्य च पाणिना । पात्रं चक्रे तदाकारं शिल्पानां प्रथमं प्रभुः ॥ ५५० ॥
स्वामीत्यूचे कुरुतैवं भाजनान्यपराण्यपि । तान्यग्नौ न्यस्य पचतौषधीस्तदनुखादत ॥ ५५१ ॥
ततश्च चक्रिरे ते तु तथैव स्वामिशासनम् । तदादि जज्ञिरे कुंभकाराः प्रथमकारवः ॥ ५५२ ॥
लोकानां गृहहेतोश्च प्रभुर्व्यधित वर्द्धकीन् । विश्वस्य सुखसृष्ट्यै हि महापुरुषसृष्टयः ॥ ५५३ ॥
गृहादिचित्रकृतये कृती चित्रकृतोऽपि सः । सूत्रयामास लोकानां क्रीडावैचित्र्यहेतुना ॥ ५५४ ॥
कुविंदान्[2] कल्पयामास लोकसंव्यानहेतवे । सर्वकल्पद्रुमस्थाने ह्येकः कल्पद्रुमः प्रभुः ॥ ५५५ ॥
रोम्णां नखानां वृध्या च बाध्यमाने भृशं जने । जगदेकपिता स्वामी नापितानप्यसूत्रयत् ॥ ५५६ ॥
तानि पंचापि शिल्पानि प्रत्येक विंशभेदतः । शतधा प्रासरल्लोके स्रोतांसि सरितामिव ॥ ५५७ ॥
तृणहारकाष्ठहारकृषिवाणिज्यकान्यपि । कर्माण्यासूत्रयामास लोकानां जीविकाकृते ॥ ५५८ ॥
स्वामी सामदानभेददंडोपायचतुष्टयम् । जगद्व्यवस्थानगरीचतुष्पथमकल्पयत् ॥ ५५९ ॥
द्वासप्ततिकलाकांडं भरतं सोध्यजीगपत् । ब्रह्म ज्येष्ठाय पुत्राय ब्रूयादिति नयादिव ॥ ५६० ॥

---

१ सिन्धुरो गजस्तस्य स्कन्धारूढ. । २ कुविन्दान् तन्तुवायकान् ।

भरतोऽपि स्वसोदर्यांस्तनयानितरानपि । सम्यगध्यापयत्पात्रे विद्या हि शतशाखिका ॥ ९६१ ॥
नाभेयो बाहुबलिनं भिद्यमानान्यनेकशः । लक्षणानि च हस्त्यश्वस्त्रीपुंसानामजिज्ञपत् ॥ ९६२ ॥
अष्टादशलिपीर्ब्राह्म्या अपसव्येन[1] पाणिना । दर्शयामास सव्येन सुंदर्या गणितं पुनः ॥ ९६३ ॥
मानोन्मानावमानानि प्रतिमानानि वस्तुषु । पोतान् प्रोतांश्च मण्यादीन् प्रभुः प्रावर्तयत्तदा ॥ ९६४ ॥
राजाध्यक्षकुलगृहसाक्षिभिः समजायत । व्यवहारस्तदादिष्टोविवादिप्रतिवादिनाम् ॥ ९६५ ॥
नागोपचर्या[2] धनुर्वेदश्चिकित्सोपासने रणः । अर्थशास्त्रं बंधघातवधगोष्ठयस्ततोऽभवन् ॥ ९६६ ॥
असौ माता पिता भ्राता भार्या पुत्रो गृहं धनम् । ममेत्यादि च ममताभूज्जनानां तदादिका ॥ ९६७ ॥
दृष्ट्वा स्वामिनमुद्वाहे प्रसाधितमलंकृतम् । प्रसाधयदलंचक्रे लोकोऽपि स्वं ततः परम् ॥ ९६८ ॥
तदा दृष्ट्वा प्रभुकृतं पाणिग्रहणमादिमम् । लोकोऽपि कुरुतेऽद्यापि ध्रुवो[3] ह्यध्वा महत्कृतः ॥ ९६९ ॥
दत्तकन्योपयमनं प्रभूद्वाहात्प्रभृत्यभूत् । चूडोपनयनक्ष्वेडापृच्छा अपि ततोऽभवत् ॥ ९७० ॥
एतच्च सर्वं सावद्यमपि लोकानुकंपया । स्वामी प्रवर्त्तयामास जानन् कर्त्तव्यमात्मनः ॥ ९७१ ॥
तदाम्नायात्कलादीदमद्यापि भुवि वर्त्तते । अर्वाचीनैर्बुद्धिमद्भिर्निबद्धं शास्त्ररूपतः ॥ ९७२ ॥
स्वामिनः शिक्षया दक्षो लोकोऽभूदखिलोऽपि सः । अंतरेणोपदेष्टारं पशवंति[4] नरा अपि ॥ ९७३ ॥
तदोग्रभोगराजन्यक्षत्रभेदैश्चतुर्विधान् । जनानासूत्रयद्विश्वस्थितिनाटकसूत्रभृत् ॥ ९७४ ॥
आरक्षपुरुषा उग्रा उग्रदंडाधिकारिणः । भोगा मंत्र्यादयो भर्तुस्त्रायस्त्रिंशा हरेरिव ॥ ९७५ ॥

---

१ अपसव्येन दक्षिणेन । २ नागोपचर्या गजादिपूजा । ३ ध्रुवः स्थिरः । ४ पशवन्ति पशुवदाचरन्ति ।

राजन्या जज्ञिरे ते ये समानवयसः प्रभोः । अवशेषास्तु पुरुषा बभूवुः क्षत्रिया इति ॥ ९७६ ॥
विरचय्य नवामेवं व्यवहारनयस्थितिम् । नवोढामिव बुभुजे नवां राज्यश्रियं विभुः ॥ ९७७ ॥
यथापराधं दंडेषु दंडं प्रायुंक्त नाभिभूः । व्याधितेषु यथाव्याधि चिकित्सक इवागदम् ॥ ९७८ ॥
दंडभीतस्तदा लोकश्चक्रे चौर्यादिकं न हि । एकैव दंडनीतिर्हि सर्वान्यायाहिजांगुली ॥ ९७९ ॥
क्षेत्रोद्यानगृहादीनां मर्यादां कोपि कस्यचित् । नात्यक्रमत् प्रभोराज्ञामिव लोकः सुशिक्षितः ॥ ९८० ॥
कालेऽवर्षज्जलधरः सस्यनिष्पत्तिहेतवे । न्यायधर्मं जगद्भर्तुर्गर्जाव्याजात्स्तुवन्निव ॥ ९८१ ॥
सस्यक्षेत्रैरिक्षुवाटैर्गोकुलैश्चाकुलास्तदा । रेजुर्जनपदाः स्वर्द्धया स्वाम्यगर्भाभिधायिनः ॥ ९८२ ॥
हेयादेयविवेकज्ञीकृतैर्लोकैर्व्यधाद्विभुः । प्रायेण भरतक्षेत्रं विदेहक्षेत्रसंनिभम् ॥ ९८३ ॥
राज्याभिषेकात्प्रभृति पृथिवीं परिपालयन् । त्रिषष्टिं पूर्वलक्षाणि नाभिभूरत्यवाहयत् ॥ ९८४ ॥
प्रभुः स्मरकृतावासे मधुमासे समेयुषि । अगादन्येद्युरुद्याने परिवारानुरोधतः ॥ ९८५ ॥
पुष्पवासगृहे तत्र पुष्पाभरणभूषितः । आसांचक्रे जगत्स्वामी पुष्पमास इवांगवान् ॥ ९८६ ॥
गुंजद्भिः फुल्लमाकंदमकरंदोन्मदाद्विभिः । मधुलक्ष्मीर्बभूव स्वागतिकीव जगत्प्रभोः ॥ ९८७ ॥
पूर्वरंग इवारब्धे पंचमोच्चारिभिः पिकैः । अदर्शयल्लतालास्यं मलयानिललासकः ॥ ९८८ ॥
कामुकेभ्य इवाश्लेषपादघातमुखासवान् । ददुः कुरबकाशोकबकुलेभ्यो मृगेक्षणाः ॥ ९८९ ॥

१ सर्वे ये अन्यायास्त एव अहय. सर्पास्तेषु जागुली तदाख्यौषधी । २ परिवारस्य अनुरोधत आग्रहतः । ३ पुष्पमासो वसन्तः । ४ स्वागतिकी स्वागतपृच्छिका ।

तिलकः प्रबलामोदप्रमोदितमधुव्रतः । अशोभयद्युवत्यालस्थलीमिव वनस्थलीम् ॥ ९९० ॥
पुष्पस्तबकभारेण ननाम लवलीलता । पीनोरसिजभारेण भूयसेव कृशोदरी ॥ ९९१ ॥
सहकारलतां मंदं मंदं मुग्धां वधूमिव । विदग्धकामुक इव सस्वजे मलयानिलः ॥ ९९२ ॥
जंबूकदंबमाकंदचंपकाशोकयष्टिभिः । प्रवासिनो हंतुमलं याष्टीक[1] इव मन्मथः ॥ ९९३ ॥
प्रत्यग्रपाटलापुष्पसंपर्कसुरभीकृतः । वारिवत्कस्य न ददौ मुदं मलयमारुतः ॥ ९९४ ॥
अंतःसारो मधुरसैर्मधूको मधुभांडवत् । मधुपैरुपसर्पद्भिश्चक्रे कलकलाकुलः ॥ ९९५ ॥
गोलिकाधनुरभ्यासं कर्तुं कुसुमधन्विना । गोलिकाः सज्जिता मध्ये कदंबकुसुमच्छलात् ॥ ९९६ ॥
इष्टापूर्त्त[2]प्रियेणेव वसंतेन प्रकल्पिता । वासंती भृंगपांथानां मकरंदरसप्रपा ॥ ९९७ ॥
सिंदुवारेण दुर्वारकुसुमामोदसंपदा । चक्रे घ्राणविषेणेव महामोहः प्रवासिनाम् ॥ ९९८ ॥
वसंतोद्यानपालेन चंपकेषु नियोजिताः । आरक्षा इव निःशंकं भ्रमंति स्म मधुव्रताः ॥ ९९९ ॥
उत्तमानुत्तमानामप्यवनीरुहवीरुधाम् । श्रियं मधुर्दिदेश स्त्रीपुंसानामिव यौवनम् ॥ १००० ॥
तत्रावचेतुं कुसुमान्यारंभत मृगीदृशः । महातीर्थे वसंतस्य दातुमर्घमिवोत्सुकाः ॥ १००१ ॥
अस्मास्वायुधभूतासु स्मरस्यान्यैः किमायुधैः । इति बुध्येव कामिन्यः कुसुमान्यवचिच्यिरे ॥ १००२ ॥
उच्चितेषु च पुष्पेषु तद्वियोगरुजार्दिता । अरोदीदिव वासंती मंजुगुंजन्मधुव्रता ॥ १००३ ॥
मल्लीमुच्चित्य गच्छंती काचित्तल्लग्नवाससा । तस्थौ निषिध्यमानेव तया मान्यत्रगा इति ॥ १००४ ॥

१ दण्डधारकः । २ इष्टापूर्त्त नाम परोपकारार्थे वापीकूपप्रपादीना करण ।

अहो संसारकूपेऽस्मिन् जीवाः कुर्वंति कर्मभिः । अरघट्टघटीन्यायेनैहिरेयाहिरां क्रियाम् ॥ १०२० ॥
धिग्धिग्मोहांधमनसां जन्मिनां जन्म गच्छति । सर्वथापि मुधैवेदं सुप्तानामिव शर्वरी ॥ १०२१ ॥
एते रागद्वेषमोहा उद्यंतमपि देहिनाम् । मूलाद्धर्मं निकृंतंति मूषिका इव पादपम् ॥ १०२२ ॥
अहो विवर्ध्यते मुग्धैः क्रोधो न्यग्रोधवृक्षवत् । अपि वर्द्धयितारं स्वं यो भक्षयति मूलतः १०२३ ॥
न किंचिन्मानवा मानाधिरूढा गणयंत्यमी । मर्यादालंघिनो हस्त्यारूढा हस्तिपका इव ॥ १०२४ ॥
कपिकच्छूबीजकोशीमिव मायां दुराशयाः । उपतापकरीं नित्यं न त्यजंति शरीरिणः ॥ २०२५ ॥
दुग्धं तुषोदकेनेवांजनेनेव सितांशुकम् । निर्मलोऽपि गुणग्रामो लोभेनैकेन दूष्यते ॥ १०२६ ॥
कषाया भवकारायां चत्वारो यामिका इव । यावज्जाग्रति पार्श्वस्थास्तावन्मोक्षः कुतो नृणाम् ॥ १०२७ ॥
अंगनालिंगनव्यग्रा भूतार्त्ता इव देहिनः । समंततः क्षीयमाणमप्यात्मानं न जानते ॥ १०२८ ॥
तत्तत्प्रकारैराहारैरात्मनोन्माद आत्मनः । उत्पाद्यतेऽनर्थकृतं सिंहारोग्यमिवौषधैः ॥ १०२९ ॥
सुगंधीदं सुगंधीदं किं श्रयामीति लंपटः । मूढो भ्रमरवद्भ्राम्यन्न जातु लभते रतिम् ॥ १०३० ॥
आपातरमणीयैर्धिग्रमणीप्रायवस्तुभिः । प्रतारयति लोकः स्वं बालं क्रीडनकैरिव ॥ १०३१ ॥
वेणुवीणादिनादेषु दत्तकर्णो निरंतरम् । स्वार्थाद्भ्रंशयति निद्रालुरिव शास्त्रानुचिंतनात् ॥ १०३२ ॥
युगपद्विषयैरेभिर्वातपित्तकफैरिव । लुप्यते प्रबलैर्भूतैश्चैतन्यं धिक् शरीरिणाम् ॥ १०३३ ॥
एवं संसारवैराग्यचिंतासंततितंतुभिः । निःस्यूतमानसो यावद्बभूव परमेश्वरः ॥ १०३४ ॥

---

१ एहिरेयाहि इति यस्या क्रियाया भवति सा एहिरेयाहिरा क्रिया । २ न्यग्रोधो वटवृक्षः ।

तावत्सारस्वतादित्यवह्न्यश्चारुणा अपि । गर्दतोयास्तुपिताश्वा व्यावाधा मरुतस्तथा ॥ १०३५ ॥
रिष्टाश्चेति नवभेदा ब्रह्मलोकांतिवासिनः । देवा लोकांतिकाः पादांतिकमेत्य जगत्प्रभोः ॥ १०३६ ॥
मूर्ध्नि न्यस्तैरंजलिभिः पद्मकोशसहोदरैः । आसूत्रितापरोत्तंसा इवैवं ते व्यजिज्ञपन् ॥ १०३७ ॥
चतुर्भिः कलापकं ॥

शक्रचूडामणिविभांभोमग्नचरणांबुज । भरतक्षेत्रनिर्नष्टमोक्षमार्गप्रदीपक ॥ १०३८ ॥
लोकव्यवस्था प्रथमा यथा नाथ प्रवर्त्तिता । प्रवर्त्तय तथा धर्मतीर्थं कृत्यं निजं स्मर ॥१०३९॥ युग्मं ॥
एवं देवास्ते प्रभुं विज्ञपय्य स्वं स्वं स्थानं ब्रह्मलोके दिवीयुः ।
प्रव्रज्येच्छुः स्वाम्यपि स्वं निशांतं सद्योऽयासीन्नंदनोद्यानमध्यात् ॥ १०४० ॥

इत्याचार्यश्रीहेमचन्द्रसूरिविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये प्रथमपर्वणि भगवज्जन्मव्यवहार-
राज्यस्थितिप्रकाशनो नाम द्वितीय सर्ग ॥ २ ॥

---

१ आत्मूनिता रचिता अपरे उत्तंसा यैस्ते ।

# तृतीयः सर्गः ।

आजूहवदथ स्वामी सामंतादीन् समंततः । भरतं बाहुबल्यादींस्तनयानितरानपि ॥ १ ॥
प्रभुर्बभाषे भरतं राज्यमादत्स्व वत्स नः । वयं संयमसाम्राज्यमुपादास्यामहेऽधुना ॥ २ ॥
स्वामिनो वचसा तेन स्थित्वा क्षणमधोमुखः । प्रांजलिर्भरतो नत्वा जगादैवं सगद्गदम् ॥ ३ ॥
त्वत्पादपद्मपीठाग्रे लुठतो मे यथासुखम् । रत्नसिंहासने स्वामिन्नासीनस्य तथा नहि ॥ ४ ॥
त्वदग्रे धावतः पद्भ्यां यथा मम सुखं विभो । सलीलसिंधुरस्कंधाधिरूढस्य तथा नहि ॥ ५ ॥
त्वत्पादपंकजच्छायानिलीनस्य यथा सुखम् । जायते मे सितच्छत्रच्छायच्छन्नस्य नो तथा ॥ ६ ॥
त्वया विरहितः स्यां चेत्तत्किं साम्राज्यसंपदा । त्वत्सेवासुखदुग्धाब्धे राज्यसौख्यं हि बिंदुवत् ॥ ७ ॥
स्वाम्यपीत्यवदद्राज्यमस्माभिस्तावदुज्झितम् । पृथ्व्यां च पार्थिवाभावे मात्स्यो[1] न्यायः प्रवर्तते ॥ ८ ॥
पृथिवीं तदिमां वत्स यथावत्परिपालय । आदेशकारकोऽसि त्वमादेशोऽप्ययमेव नः ॥ ९ ॥
सिद्धादेशं प्रभोरेवं स लंघितुमनीश्वरः । आमेत्यभाषत गुरुष्वेषैव विनयस्थितिः ॥ १० ॥
प्रणम्य स्वामिनं मूर्ध्ना विनीतो भरतस्ततः । सिंहासनमलंचक्रे पित्र्यं वंशमिवोन्नतम् ॥ ११ ॥
स्वाम्यादेशादथामात्यसामंतानीकपादिभिः । प्रभोरिव सुरैश्चक्रेऽभिषेको भरतस्य तु ॥ १२ ॥
तदा च शुशुभे छत्रं पार्वणेंदुसहोदरम् । स्वामिनः शासनमिवाखंडं भरतमूर्द्धनि ॥ १३ ॥

---

१ मात्स्यो न्यायो यथा गुरुलघुमत्स्या परस्परं भक्षयन्ति तद्वद्राजान विना लोका अपि एव कुर्वन्ति ।

तत्पार्श्वयोश्चकासाते आपतंतौ च चामरौ । भरतार्द्धद्वयोदेष्यच्छ्रियो[1] दूताविवागतौ ॥ १४ ॥
चकासामास वासोभिर्मुक्तालंकरणैरपि । गुणैरिव स्वैरत्यंतविशदैर्नृपनात्मजः ॥ १५ ॥
शशीव स नवो राजा महामहिमभाजनम् । नमश्चक्रे राजचक्रेणात्मकल्याणकाम्यया ॥ १६ ॥
अथो ददौ बाहुबलिप्रभृतिभ्यो यथोचितम् । अन्येभ्योऽपि च पुत्रेभ्यो विभज्य विषयान्[2] विभुः ॥१७॥
ततश्च सांवत्सरिकं दानमारभत प्रभुः । कल्पद्रुम इव स्वेच्छाप्रार्थनानुगुणं नृणाम् ॥ १८ ॥
यो येनाऽर्थी स तद्गृह्णात्वेवमाघोषणां विभुः । चतुष्पथ[3]प्रतोल्यादिस्थानेषूच्चैरकारयत् ॥ १९ ॥
चिरभ्रष्टानि नष्टानि प्रक्षीणस्वामिकानि च । अतिप्रणष्टसेतूनि गिरिकुंजगतानि च ॥ २० ॥
श्मशानस्थानगूढानि गुप्तानि च गृहांतरे । रजतस्वर्णरत्नादिधनान्याहृत्य सर्वतः ॥ २१ ॥
वासवादिष्टधनदप्रेरिता जृंभकाः सुराः । ददतोऽपूरयन् भर्तुः पयांसीव पयोमुचः ॥ २२ ॥
त्रिभिर्विशेषकम् ॥
एकां कोटीं हिरण्यस्य लक्षान्यष्टौ च नाभिभूः । दिने दिने ददौ सूरोदयादाभोजनक्षणम् ॥ २३ ॥
वत्सरेण हिरण्यस्य ददौ कोटीशतत्रयम् । अष्टाशीतिं च कोटीनां लक्षाशीतिं च नाभिभूः ॥ २४ ॥
जातसंसारवैराग्या दीक्षया स्वामिनो जनाः । शेषामात्रमदोऽगृह्णन्भिक्षादानेऽपि नाधिकम् ॥ २५ ॥
अथ वार्षिकदानांते वासवश्चलितासनः । भक्त्यान्य इव भरतो भगवंतमुपास्थितः ॥ २६ ॥
समं सुरवरैरंभस्कुंभहस्तैर्जगत्पतेः । दीक्षोत्सवाभिषेकं स चक्रे राज्याभिषेकवत् ॥ २७ ॥

---

१ भरतार्द्धद्वयस्योदय गमिष्यन्त्याः श्रियो दूतौ इव । २ विषयान् देशान् । ३ चत्वरप्रकोष्ठादिस्थानेषु ।

मंक्षूपनीतं तदधिकारिणेव वलारिणा । दिव्यालंकारवस्त्रादि पर्यधत्त जगद्विभुः ॥ २८ ॥
अनुत्तरविमानानां विमानमिव किंचन । सुदर्शनाख्यां शिबिकां पत्ये हरिरसूनयत् ॥ २९ ॥
दत्तहस्तो महेंद्रेण शिबिकामारुरोह ताम् । प्रभुः प्रशमनिःश्रेणीमिव लोकाग्रवेश्मनः ॥ ३० ॥
आदौ रोमांचितैर्मर्त्यैरमर्त्यैस्तदनंतरम् । उदध्रे शिबिका मूर्त्तपुण्यभार इवात्मनः ॥ ३१ ॥
वर्यमंगलतूर्याणि ताडितानि सुरासुरैः । अपूरयन् दिशो नादैः पुष्करावर्त्तका इव ॥ ३२ ॥
चकासे चामरद्वंद्वं पार्श्वतस्त्रिजगत्पतेः । नैर्मल्यमिव मूर्तिस्थं परलोकेहलोकयोः ॥ ३३ ॥
प्रीणितश्रवणो नृणामुच्चैर्जयजयारवः । चक्रे पत्युर्वंदिवृंदैरिव वृंदारकव्रजैः ॥ ३४ ॥
नाथोऽपि शिबिकारूढः पथि गच्छन्नराजत । सुरोत्तमविमानस्थशाश्वतप्रतिमोपमः ॥ ३५ ॥
भगवंतं यथायांतं दृष्ट्वा सर्वेपि नागराः । संभ्रमादन्वधावंत पितरं बालका इव ॥ ३६ ॥
दूरतः स्वामिनं द्रष्टुं जीमूतमिव केकिनः । उच्चपादपशाखासु केचिदारुरुहुर्नराः ॥ ३७ ॥
केचिच्च स्वामिनं द्रष्टुमारूढा मार्गवेश्मसु । चंद्रातपमिव प्रौढं सूर्यातपमजीगणन् ॥ ३८ ॥
अश्वान्नारुरुहुः केपि कालक्षेपासहिष्णवः । त्वरितं स्वयमेवाश्वा इव पुप्लुविरे पथि ॥ ३९ ॥
अंतः प्रविश्य लोकानां केपि वारामिवातपः । अग्रे प्रादुर्भवंति स्म स्वामिनो दर्शनेच्छया ॥ ४० ॥
अभि त्रिभुवनाधीशं धावंत्यः काश्चिदंगनाः । वेगात्त्रुटितहारेण लाजांजलिमिवामुचन् ॥ ४१ ॥
आगच्छतो जगद्भर्तुरग्रे तस्थुर्दिदृक्षया । कटिस्थबालाश्चारूढवानरा इव वीरुधः ॥ ४२ ॥

१ मक्षु शीघ्र । २ वलारिणा इन्द्रेण । ३ पुष्करावर्तकाः प्रलयमेघाः । ४ लाजाञ्जलि अक्षतांजलि । ५ वीरुधो लताः ।

भुजावुन्नयतः सख्योः काश्चिदालंब्य सत्वरम् । कृत्वा पक्षाविवागच्छन् कुचकुंभभरालसाः ॥ ४३ ॥
गतिभंगकरान् भारान् स्वान्नितंबान् मृगीदृशः । निर्निडः काश्चन स्वामिप्रेक्षणक्षणकांक्षया ॥ ४४ ॥
शुभ्रकौसुंभवसना वर्त्मवेश्मकुलांगनाः । पूर्णपात्रं दधुः काश्चित्सेन्दुसंध्यासहोदराः ॥ ४५ ॥
काश्चिदप्यंचलान्पाणिपद्मैश्चपललोचनाः । चामराणीव चलयामासुरालोकने प्रभोः ॥ ४६ ॥
काश्चिदप्यभिनाभेयं नार्यो लाजान्निचिक्षिपुः । आत्मनः पुण्यबीजानि वपंत्य इव निर्भरम् ॥ ४७ ॥
चिरं जीव चिरं नंदेत्याद्याशीर्वचनानि च । काश्चिजगुर्निजकुलसुवासिन्य इवोच्चकैः ॥ ४८ ॥
निश्चलाक्ष्यश्चलाक्ष्योऽपि मंक्षुगा मंदगा अपि । प्रभुं पश्यंत्योनुयांत्यश्चाभूवन् पुरयोषितः ॥ ४९ ॥
नभस्यथ समापेतुरपि देवाश्चतुर्विधाः । महाविमानैः कुर्वाणा एकच्छायं महीतलम् ॥ ५० ॥
मदांभोवर्षिभिः केचित्कुंजरैर्निर्जरोत्तमाः[१] । आपतंतो विदधिरे दिवं मेघमयीमिव ॥ ५१ ॥
अपरे गगनांभोधेस्तरंडैस्तुरगोत्तमैः । कशानौदंडसहिता आपतन् पतिमीक्षितुम् ॥ ५२ ॥
मूर्तिमद्भिः पवमानैरिवातिशयिरंहसा । स्यंदनैर्द्युसदः केचिदासदन्नाभिनंदनम् ॥ ५३ ॥
अन्योन्यं वाहनक्रीडाप्रतिज्ञातपणा इव । प्रतीक्षांचक्रिरे मित्रमपि न त्रिदिवौकसः ॥ ५४ ॥
स्वाम्यसौ स्वाम्यसावेवं कथयंतो मिथः सुराः । वाहनानि स्थिरीचक्रुः प्राप्तग्रामा इवाध्वगाः ॥ ५५ ॥
विमानहर्म्यैः करिभिस्तुरगैः स्यंदनैरपि । नभस्यभूद्द्वितीयेव विनीता नगरी तदा ॥ ५६ ॥
परिवव्रे जगन्नाथः प्रकृष्टसुरमानुषैः । मानुषोत्तरशिखरीवाहस्करनिशाकरैः ॥ ५७ ॥

१ निर्जरोत्तमाः देवोत्तमाः । २ तरण्डैर्नौभि. ।

पार्श्वयोर्भरतबाहुबलिभ्यामुपसेवितः । रोधोभ्यामिव[1] पाथोधिर्बभासे वृषभध्वजः ॥ ५८ ॥
अष्टानवत्या तनयैर्विनीतैरपरैरपि । अन्वगामि जगत्स्वामी यूथनाथ इव द्विपैः ॥ ५९ ॥
माता पत्न्यौ च पुत्र्यौ च स्त्रियोऽन्या अपि साश्रवः । सावश्यायकणाः पद्मिन्य इव प्रभुमन्वगुः ॥६०॥
विमानमिव सर्वार्थसिद्धं प्राक्तनजन्मनि । नाम्ना सिद्धार्थमुद्यानमाससाद जगत्पतिः ॥ ६१ ॥
तस्माच्च शिबिकारत्नात्संसारादिव निर्ममः । समुत्ततार नाभेयस्तत्राशोकतरोस्तले ॥ ६२ ॥
तानि वस्त्राणि माल्यानि भूषणानि च नाभिभूः । उज्झांचकार सपदि कषायानिव सर्वतः ॥ ६३ ॥
कोमलं धवलं सूक्ष्मं स्यूतं चंद्रकरैरिव । देवदूष्यं देवराजः स्कंधदेशे न्यधाद्विभोः ॥ ६४ ॥
तदा च चैत्रबहुलाष्टम्यां[2] चंद्रमसि स्थिते । नक्षत्रमुत्तराषाढामह्नोभागे च पश्चिमे ॥ ६५ ॥
भवजयजयारावकोलाहलमिषाद्भृशम् । उद्गिरद्भिर्मुदमिव वीक्ष्यमाणो नरामरैः ॥ ६६ ॥
उच्चखान चतसृभिर्मुष्टिभिः शिरसः कचान् । चतसृभ्यो दिग्भ्यः शेषामिव[3] दातुमनाः प्रभुः ॥ ६७ ॥
त्रिभिर्विशेषकम् ॥
प्रतीच्छति स्म सौधर्माधिपतिः कुंतलान् प्रभोः । वस्त्रांचले वर्णांतरतंतुमंडनकारिणः ॥ ६८ ॥
मुष्टिना पंचमेनाथ शेषान् केशान् जगत्पतिः । समुच्चिखनिषन्नेवं ययाचे नमुचिद्विषा ॥ ६९ ॥
नाथ त्वदंसयोः स्वर्णरुचोर्मरकतोपमा । वातानीता विभात्येषा तदास्तां केशवल्लरी ॥ ७० ॥
तथैव धारयामास तामीशः केशवल्लरीम् । याच्ञामेकांतभक्तानां स्वामिनः खंडयंति न ॥ ७१ ॥

१ रोधोभ्या तटाभ्या । २ चैत्रबहुलाष्टम्या चैत्रकृष्णाष्टम्या । ३ शेषा प्रसादमाला । ४ समुत्खनितुमिच्छन् ।

सौधर्मेशः क्षीरसिंधौ केशान् क्षिप्त्वाऽभ्युपेत्य च । रंगाचार्य इवारक्षत्तुमुलं मुष्टिसंज्ञया ॥ ७२ ॥
कृतषष्ठतपःकर्मा कृतसिद्धनमस्कृतिः । देवासुरमनुष्याणां समक्षमथ नाभिभूः ॥ ७३ ॥
सावद्ययोगं सकलं प्रत्याख्यामीत्युदीरयन् । मोक्षाध्वनो रथमिव चारित्रं प्रत्यपद्यत ॥ ७४ ॥ युग्मम् ॥
स्वामिदीक्षोत्सवेनासीन्नारकाणामपि क्षणम् । शरदातपतप्तानामिवाभ्रच्छायया सुखम् ॥ ७५ ॥
ज्ञानं प्रभोर्मर्त्यक्षेत्रमनोद्रव्यप्रकाशकम् । मनःपर्यायमुत्पेदे दीक्षासंकेतभागिव ॥ ७६ ॥
वार्यमाणाः सुहृद्वर्गैरुध्यमानाश्च बंधुभिः । निषिध्यमानाश्च भरतेश्वरेणापि मुहुर्मुहुः ॥ ७७ ॥
स्मरंतः स्वामिनः पूर्वप्रसादमतिशायिनम् । तत्पादपद्मविरहस्यासहाः षट्पदा[1] इव ॥ ७८ ॥
हित्वा पुत्रकलत्रादि राज्यं च तृणलीलया । या गतिः स्वामिनोऽस्माकमपि सैवेति निश्चयात् ॥ ७९ ॥
नृपाः कच्छमहाकच्छादय आददिरे मुदा । दीक्षां सहस्राश्चत्वारो भृत्यानामेष हि क्रमः ॥ ८० ॥
चतुर्भिः कलापकम् ॥

आदिनाथं प्रणम्याथ शचीनाथादयः सुराः । एवं विरचयामासू रचितांजलयः स्तुतिम् ॥ ८१ ॥
गुणांस्तव यथावस्थान्वयं वक्तुमनीश्वराः । स्तुमस्तथापि प्रज्ञा हि त्वत्प्रभावाद्भृशायते[2] ॥ ८२ ॥
त्रसस्थावरजंतूनां हिंसायाः परिहारतः । स्वामिन्नभयदानैकसत्रिणे भवते नमः ॥ ८३ ॥
नमस्तुभ्यं मृषावादपरित्यागेन सर्वथा । पथ्यतथ्यप्रियवचःसुधारसपयोधये ॥ ८४ ॥
भगवन्नदत्तादानप्रत्याख्यानखिलाध्वनि । प्रथमायाध्वनीनाय[3] नमस्तुभ्यं जगत्पते ॥ ८५ ॥

१ भ्रमराः । २ भृशं भवतीति भृशायते अतिशयिता भवति । ३ अध्वनीनाय पान्थाय ।

अखंडितब्रह्मचर्यमहातेजोविवस्वते[1] । भगवन्मन्मथध्वांतमथनाय नमोऽस्तु ते ॥ ८६ ॥
सर्वमेकपदे नाथ पृथिव्यादिपरिग्रहं । पलालवत्[2] त्यक्तवते तुभ्यं मुक्त्यात्मने नमः ॥ ८७ ॥
तुभ्यं नमः पंचमहाव्रतभारककुद्मते[3] । संसारसिंधुतरणकमठाय[4] महात्मने ॥ ८८ ॥
महाव्रतानां पंचानामिव पंचापि सोदराः । बिभ्रते समितीस्तुभ्यमादिनाथ नमो नमः ॥ ८९ ॥
आत्मारामैकमनसे वचःसंवृत्तिशालिने । सर्वचेष्टानिवृत्ताय नमस्तुभ्यं त्रिगुप्तये ॥ ९० ॥
इति नाथमभिष्टुत्य यथास्थानं ययुस्तदा । जन्माभिषेकवन्नंदीश्वरमध्येन नाकिनः ॥ ९१ ॥
प्रणम्य नाथं भरतबाहुबल्यादयोऽपि ते । जग्मुर्निजनिजस्थानं कथंचिदमरा इव ॥ ९२ ॥
अनुप्रव्रजितैः कच्छमहाकच्छादिभिर्नृपैः । अनुयातः प्रभुर्मौनी क्ष्मां विहर्तुं प्रचक्रमे ॥ ९३ ॥
भगवान् पारणाहेऽपि भिक्षां न प्राप कुत्रचित् । भिक्षादानानभिज्ञो हि तदैकांतऋजुर्जनः ॥ ९४ ॥
केऽपि वेगपराभूतोच्चैःश्रवस्कांस्तुरंगमान् । शौर्यनिर्जितदिङ्नागानपरे नागकुंजरान् ॥ ९५ ॥
रूपलावण्यविजिताप्सरसः केऽपि कन्यकाः । विद्युद्विभ्रमधारीणि केचिदाभरणानि तु ॥ ९६ ॥
नानावर्णानि संध्याभ्राणीव वासांसि केचन । माल्यदामानि मंदारदामस्पर्द्धीनि केपि च ॥ ९७ ॥
केचित्कांचनराशिं च मेरुशृंगसहोदरम् । रोहणाचलचूलाभं रत्नकूटमथापरे ॥ ९८ ॥
स्वामिने ढौकयामासुर्लोका भिक्षार्थमीयुषे । राजानमेव नाथं स्म जानते ते हि पूर्ववत् ॥ ९९ ॥

पंचभिः कुलकम् ॥

१ विवस्वते सूर्याय । २ पलालवत् तृणवत् । ३ ककुद्मते वृषरूपाय । ४ कमठाय कूर्माय ।

भिक्षामलभमानोऽपि स्वाम्यदीनमनाः सदा । विहरन् जंगमं तीर्थमिव पृथ्वीमपावयत् ॥ १०० ॥
सप्तधातुविनाभूतशरीर इव सुस्थितः । भगवान्क्षुत्पिपासादीनधिसेहे परीषहान् ॥ १०१ ॥
अनुयांतः स्वामिनोऽन्ते पोता[1] इव समीरणम् । तथैव विरहंति स्म राजानो दीक्षिताः स्वयम् ॥ १०२ ॥
अथ क्षुदादिभिः क्लांतास्तत्वज्ञानविवर्जिताः । स्वबुध्यानुगुणं दध्युस्ते राजन्यास्तपस्विनः ॥ १०३ ॥
किंपाकानीव नात्त्येष फलानि मधुराण्यपि । न स्वादून्यपि पिबति क्षाराणीव पयांसि च ॥ १०४ ॥
परिकर्मानपेक्षश्च न स्नाति न विलिंपति । वस्त्रालंकारमाल्यानि नोपादत्ते च भारवत् ॥ १०५ ॥
आलिंग्यते शैल इव वातोद्भूताध्वधूलिभिः । नितांतं सहते मूर्ध्नि ललाटंतपमातपम् ॥ १०६ ॥
शयनादिविहीनोऽपि नायासमनुगच्छति । न परिक्लिश्यते शीतोष्णाभ्यां गिरिवरे[2]भवत् ॥ १०७ ॥
न हि क्षुधां गणयति न जानाति तृषामपि । सवैरः क्षत्रिय इव निद्रामपि न सेवते ॥ १०८ ॥
अस्माननुचरीभूतान् कृतागस[3] इवाधुना । न प्रीणयति दृष्ट्यापि संकथायास्तु का कथा ॥ १०९ ॥
अपि पुत्रकलत्रादिपरिग्रहपराङ्मुखः । न जानीमः किमपि यच्चित्ते चिंतयति प्रभुः ॥ ११० ॥

अष्टभिः कुलकम् ।

अथ कच्छमहाकच्छौ भर्तुरभ्यर्ण[4]सेवकौ । आत्मवृंदपुरोभूतावित्यूचाते तपस्विभिः ॥ १११ ॥
क्वैष स्वामी क्षुधिजयी क्व वयं वान्नकीटकाः । क्व वा जितपिपासोयं क्व वयं वारिदर्दुराः[5] ॥ ११२ ॥
क्व चायमातपजयी क्व च्छायामत्कुणा वयम् । क्व शीतापरिभूतोऽयं क्व शीतकपयो वयम् ॥ ११३ ॥

---

१ नावः । २ गिरिहास्तिवत् । ३ कृतापराधान् । ४ समीपसेवकौ । ५ वारिदर्दुरा जलभेकाः ।

क्व च निद्रादरिद्रोयं क्व निद्राजगरा वयम् । क्वायं नित्यमनासीनो वयं क्वासनपंगवः ॥ ११४ ॥
व्रतेऽनुगमनं भर्त्तुस्तदस्माभिः प्रचक्रमे । उदन्वल्लंघनविधौ काकैरिव गैरुत्मतः ॥ ११५ ॥
किं निजान्येव राज्यानि गृह्णीमो जीविकाकृते । किं तु तानि गृहीतानि भरतेन क्व गम्यताम् ॥ ११६ ॥
किं वा व्रजामो भरतमेव जीवनहेतवे । अस्माकं स्वामिनं हित्वा गतानां तत एव ह्रीः ॥ ११७ ॥
तदार्यौ कार्यमूढानां किं कार्यं ब्रूतमद्य नः । अग्रेपि नित्यमासन्नौ भावाभिज्ञौ युवां विभोः ॥ ११८ ॥
तावप्येवं बभापाते स्वयंभूरमणांबुधेः । आसाद्यते यदिस्ताँघो भावोपि स्वामिनस्तदा ॥ ११९ ॥
अग्रेपि स्वामिनादिष्टमेव नित्यमकृष्वहि । अधुना कृतमौनस्तु नादिशत्येष किंचन ॥ १२० ॥
वित्थ यूयं यथा नैव विद्मो नावां तथैव हि । गतिः समाना सर्वेषां ब्रूतावां किमु कुर्वहे ॥१२१॥
संभूयाऽऽलोच्य सर्वेपि गंगातीरवनानि ते । भेजुर्बुभुजिरे स्वैरं कंदमूलफलाद्यथ ॥ १२२ ॥
प्रावर्त्तंत ततः कालात्तापसा वनवासिनः । जटाधराः कंदफलाद्याहारा इव भूतले ॥ १२३ ॥
अथ कच्छमहाकच्छतनयौ विनयान्वितौ । स्वाम्यादेशात् दूरदेशांतराणि गतपूर्विणौ ॥ १२४ ॥
आयांतौ नमिविनमिनामानौ तद्घनाध्वना । अपश्यतां स्वपितरावित्यचिंतयतां च तौ ॥१२५॥ युग्मम् ॥
नाथे वृषभनाथेपि किमनाथाविवेदृशीम् । अवस्थां प्रतिपेदाते पितरावावयोरिमौ ॥ १२६ ॥
क्व तच्चीनांशुकमिदं किरातार्हं क्व वल्कलम् । क्व सोंगरागो वपुषि भूरजः क्व पशूचितम् ॥ १२७ ॥
क्व माल्यगर्भो धम्मिल्लः क्व जटा वटवृक्षवत् । क्व गजारोहणं क्वैष पादचारः पदातिवत् ॥ १२८ ॥

१ गरुडस्य । २ अभिप्रायज्ञौ । ३ अन्तः ।

त्रिसंध्यं च प्रणम्यैवं ययाचाते कृतांजली । आवयोर्नापरः स्वामी स्वामिन् राज्यप्रदो भव ॥ १४४ ॥
अन्येद्युर्धरणो नागकुमाराणामधीश्वरः । आगः समाययौ तत्र स्वामिपादान्विवंदिषुः ॥ १४५ ॥
स्वामिनं सेवमानौ तौ याचमानौ श्रियं ततः । बालाविव ऋजू नागराजः साश्चर्यमैक्षत ॥ १४६ ॥
स तौ जगाद पीयूषस्यंदसोदरया गिरा । कौ युवां किं च याचेथे दृढं विरचिताग्रहौ ॥ १४७ ॥
संवत्सरं जगत्स्वामी महादानं किमीप्सितम् । प्रददावनवच्छिन्नं तदानीं क्व गतौ युवाम् ॥ १४८ ॥
वर्त्तते संप्रति स्वामी निर्ममो निष्परिग्रहः । रोपतोपविनिर्मुक्तो निराकांक्षो वपुष्यपि ॥ १४९ ॥
स्वामिनः सेवकः कश्चिदेषोपीति सगौरवम् । धरणं पन्नगाधीशं प्रत्यूचतुरुभावपि ॥ १५० ॥
भृत्यावावामसौ भर्त्ता क्वचिदप्यादिशत्स्वयम्[1] । राज्यं विभज्य सर्वेभ्यः स्वपुत्रेभ्यो ददावथ ॥ १५१ ॥
अपि प्रदत्तसर्वस्वो दातासौ राज्यमावयोः । अस्ति नास्तीति का चिंता कार्या सेवैव सेवकैः ॥ १५२ ॥
याचेथां भरतं गत्वा स्वामिवत्स्वामिभूरपि । इत्युक्तौ धरणेंद्रेण पुनस्तावेवमूचतुः ॥ १५३ ॥
विश्वस्वामिनवाप्यामुं कुर्वः स्वाम्यंतरं[2] न हि । कल्पपादपमासाद्य कः करीरं[3] निषेवते ॥ १५४ ॥
आवां याचावहे नान्यं विहाय परमेश्वरम् । पयोमुचं विमुच्यान्यं याचते चातको[4]ऽपि किम् ॥ १५५ ॥
स्वस्त्यस्तु भरतादिभ्यस्तव किं चिंतया तया । स्वामिनोऽस्माद्यद्भवति तद्भवत्वपरेण किम् ॥ १५६ ॥
तदुक्तिमुदितोऽवादीदथेदं पन्नगेश्वरः । पातालपतिरेपोऽस्मि स्वामिनोऽस्यैव किंकरः ॥ १५७ ॥
महात्यागौ महासत्वौ स्वाम्यसावेव नापरः । सेवनीय इति दृढा प्रतिज्ञा साधु साधु वः ॥ १५८ ॥

---

१ क्वचिदप्यादिदेश च इत्यपि क्वचित्पाठः । २ अन्यं स्वामिन । ३ करीराख्य वृक्ष । ४ चातकश्चापपक्षी ।

भुवनस्वामिनोऽमुष्य सेवया राज्यसंपदः । पुमांसमुपसर्पंति पाशाकृष्टा इव द्रुतम् ॥ १५९ ॥
सेवया चास्य वैताढ्यगिरौ विद्याधरेन्द्रता । नितांतसुलभैवेह प्रालंबफलवन्नृणाम् ॥ १६० ॥
सेवामात्रेण चामुष्य भवनाधिपतिश्रियः । अयत्नप्राप्यतां यांति पादाधःस्थनिधानवत् ॥ १६१ ॥
अमुं च सेवमानानां पुंसामुपनमत्यलम् । वशंवदा व्यंतरेन्द्रश्रीः कार्मणवशादिव ॥ १६२ ॥
अस्यैव सेवकं ज्योतिष्पतिश्रीरपि सत्वरम् । स्वयं वृणीते सुभगं स्वयंवरवधूरिव ॥ १६३ ॥
भवंत्यस्यैव सेवातः पौरंदर्योऽपि संपदः । वसंतादिव जायंते विचित्राः कुसुमर्द्धयः ॥ १६४ ॥
अस्यैव सेवनादाशु लभंते दुर्लभामपि । अहमिंद्रश्रियं मुक्तेरिव यामिं[1] कनीयसीम् ॥ १६५ ॥
अमुमेव जगन्नाथं सेवमानः शरीरभाक् । प्राप्नोत्यपुनरावृत्ति सदानंदमयं पदम्[2] ॥ १६६ ॥
इह त्रिभुवनाधीशः सिद्धरूपः परत्र च । असाविव भवेद्देही स्वामिनोऽस्यैव सेवया ॥ १६७ ॥
दासोऽहं स्वामिनोऽमुष्य युवामपि च सेवकौ । तत्सेवायाः फलं विद्याधरैश्वर्यं ददामि वाम् ॥ १६८ ॥
स्वामिसेवासमेवैतद्बुध्येथां हंत मान्यथा । उद्योतोऽरुणजन्मापि सूर्यजन्मैव यद्भुवि ॥ १६९ ॥
संबोध्यैवं ददौ गौरीप्रज्ञप्तिप्रमुखास्तयोः । अष्टचत्वारिंशद्विद्यासहस्रीः पाठसिद्धिदाः ॥ १७० ॥
आदिदेश च वैताढ्ये गत्वा श्रेणिद्वये युवाम् । नगराणि परिष्ठाप्य कुर्वाथां राज्यमक्षयम् ॥ १७१ ॥
नत्वार्हंतं तौ विमानं पुष्पकाख्यं विकृत्य च । आरुह्य च प्रचलितौ पन्नगस्वामिना समम् ॥ १७२ ॥
स्वामिसेवातरुफलभूतां तां संपदां नवाम् । गत्वा पित्रोः कच्छमहाकच्छयोस्तावशंसताम् ॥ १७३ ॥

१ यामि भगिनीम् । २ सदानदमय पद मोक्षपद ।

ज्ञापयामासतुः स्वाँश्च गत्वायोध्यापतेश्च तौ । मानिनां मानसिद्धिर्हि सफला स्थानदर्शिनाम् ॥ १७४ ॥
तत्र स्वजनमादाय सर्वं परिजनं च तौ । विमानवरमारोह्य प्रतिवैताढ्यमीयतुः ॥ १७५ ॥
प्रांतयोर्लवणांभोधिवीचीनिचयचुंबितम् । पूर्वापरदिशोरंतर्मान[1]दंडमिव स्थितम् ॥ १७६ ॥
आघाटभूतं भरतदक्षिणोत्तरभागयोः । पंचाशतं योजनानि दक्षिणोत्तरयोः पृथुम् ॥ १७७ ॥
षट् योजनानि सक्रोशान्यवगाढं महीतले । उ[2]त्सेधं धारयंतं च पंचविंशतियोजनीम् ॥ १७८ ॥
प्रसारिताभ्यां बाहुभ्यामिव दूराब्धिमाश्रिणा । गंगासिंधुस्रवंतीभ्यां समाश्लिष्टं समंततः ॥ १७९॥
भरतार्धश्रियो लीलाविश्रामसदने इव । खंडप्रपातातमिस्राभिधाने दधतं गुहे ॥ १८० ॥
सिद्धायतनकूटेन शाश्वतप्रतिमाजुषा । बिभ्राणमद्भुतां शोभां सुमेरुमिव चूलया ॥ १८१ ॥
नानारत्नमयान्युच्चैर्लीलास्थानानि नाकिनाम् । नवग्रैवेयकाणीव नवकूटानि बिभ्रतम् ॥ १८२ ॥
ऊर्ध्वं योजनविंशत्या दक्षिणोत्तरपार्श्वयोः । दधानं व्यंतरावासश्रेण्यौ निव[3]सने इव ॥ १८३ ॥
आमूलचूलिकं चारुकलधौतशिलामयम् । पृथिव्यां पादकटकमिवैकं विच्युतं दिवः ॥ १८४ ॥
मरुदांदोलितोद्दामशाखिशाखाभुजैर्मुहुः । आह्वयंतमिवारात्तौ वैताढ्यगिरिमापतुः ॥ १८५ ॥

दशभिः कुलकम् ॥

क्ष्मातलाद्दशयोजिन्या उपरिष्टान्नमिर्नृपः । तत्राद्रौ दक्षिणश्रेण्यां चक्रे पंचाशतं पुरीः ॥ १८६ ॥
प्राक्किन्नरनरगीतं बाहुकेतुपुरं ततः । पुंडरीकं हरिकेतु सेतुकेतुपुरं तथा ॥ १८७ ॥

---

१ सीमारूप । २ उत्सेधमौन्नत्य । ३ वस्त्रे इव ।

स्वर्गलीलापुरं तथा ॥ १८८ ॥
सर्पारिकेतुनगरं श्रीबाहु श्रीगृहं तथा । लोहार्गलारिजये च सुकृतमुख्यपि ॥ १८९ ॥
वज्रार्गलपुरं वज्रविमोकनगरं तथा । तथा महीसारपुरंजये विलासयोनिपत्तनम् ॥ १९० ॥
चतुर्मुखी बहुमुखा रता च विरतापि च । आखंरूलपुरं चापि कुसुमपुर्यपि ॥ १९१ ॥
अपराजितकांचीदामाख्ये सुविनयं नभः । क्षेमंकरं सहचिह्नपुरं चंद्राभासपुरं तथा ॥ १९२ ॥
संजयंती शक्रपुरं जयंती वैजयंत्यपि । विजया क्षेमंकरी च चित्रकूटं त्रिकूटकम् ॥ १९३ ॥
रविभासपुरं सप्तभूतलावासमेव च । सुविचित्रं महाघ्रं च नित्योद्योतिनी तथा ॥ १९४ ॥
वैश्रवणकूटशशिपुरे रविपुरं तथा । विमुखीवाहिन्यौ सुमुखी स्वयं नमिः ॥ १९५ ॥
श्रीरथनूपुरचक्रवालं तु नगरोत्तमम् । एषां पुराणां मध्यस्थमध्युवास नागराजस्य[1] शासनात् ॥ १९६ ॥
तथैव चोत्तरश्रेण्यां विनमिः पर्यसूत्रयत् । षष्टिं पुराणि सद्योपि किलिकिलं तथा ॥ १९७ ॥
पुर्यर्जुनी वारुणी च वैरिसंहारिणी तथा । कैलासवारुणी विद्युद्दीप्तं मेघकम् ॥ १९८ ॥
चारुचूडामणिश्चैव चंद्राभूषणं तथा । वंशवत्कुसुमचूलं हंसगर्भं च वसुमत्यपि ॥ १९९ ॥
शंकरं लक्ष्मिहर्म्यं च चामरं विमलं तथा । असुमत्कृतं च शिवमंदिरं ततः ॥ २०० ॥
सर्वसिद्धस्तुतं चैव सर्वशत्रुंजयं तथा । केतुमालांकनगरमिंद्रकांताभिधं लिकान्यपि ॥ २०१ ॥
महानंदनाशोकं च वीतशोकं विशोककम् । सुखालोकालकतिलकनभस्तिलकं ततः ॥ २०२ ॥
मदिरं कुमुदकुंदं ततो गगनवल्लभम् । युवतीतिलकसंज्ञमवनीतिलकं ततः ॥ २०२ ॥

१ धरणेन्द्रस्य । २ सुखालोक-अलकतिलक-नभस्तिलक चेति नामत्रय ।

सगंधर्वं मुक्तहारं ततोऽनिमिषविष्टपम् । अग्निज्वाला गुरुज्वाला श्रीनिकेतपुरं तथा ॥ २०३ ॥
ततो जयश्रीनिवासं रत्नकुलिशपत्तनम् । वसिष्ठाश्रयं द्रविणजयं चाथ सभद्रकम् ॥ २०४ ॥
भद्रासद्मपुरं तस्मात्फेनशिखरमप्यथ । गोक्षीरवरशिखराभिधानं तदनंतरम् ॥ २०५ ॥
वर्यक्षोभशिखरकं गिरिशिखरकं ततः । धरणीवारणीसंज्ञं सुदर्शनपुरं ततः ॥ २०६ ॥
दुर्गं दुर्धरमाहेंद्रं विजयं च सुगंधिनी । सुरतनागरपुरं ततो रत्नपुराभिधम् ॥ २०७ ॥
एषां प्रधानभूतं तु पुरं गगनवल्लभम् । विनमिः स्वयमध्यष्टा(ष्ठा)धरणेंद्रमधिष्ठितः ॥ २०८ ॥
ते च विद्याधरश्रेण्यौ शुशुभाते महर्द्धिके । ऊर्ध्वस्थव्यंतरश्रेण्याविवाधःप्रतिबिंबिते ॥ २०९ ॥
ग्रामाननेकशः कृत्वा तौ शाखानगराणि[1] च । स्थापयामासतुः स्थानौचित्याजनपदानपि ॥ २१० ॥
यस्माद्यस्माजनपदान्नीत्वा तत्राहिता नराः । तत्संज्ञयैव तत्रापि तान्यां जनपदाः कृताः ॥ २११ ॥
तेष्वथो नमिविनमी पुरेष्वधिसभं विभुं । स्थापयामासतुर्नाभिनंदनं मनसीव तौ ॥ २१२ ॥
मा विद्यादुर्मदा विद्याधराः कार्षुः स्म दुर्नयम् । धरणेंद्रस्ततस्तेषां मर्यादामेवमादिशत् ॥ २१३ ॥
जिनानां जिनचैत्यानां तथा चरमवर्ष्मणाम् । प्रतिमां प्रतिपन्नानां सर्वेषां चानगारिणाम् ॥२१४॥
पराभवं लंघनं च ये करिष्यंति दुर्मदाः। विद्यास्त्यक्ष्यंति तान् सद्यः कृतालस्यानिव श्रियः ॥२१५॥ युग्मं ॥
सात्मस्त्रीकं हनिष्यंति ये नरं येऽपि च स्त्रियम् । रमयिष्यंत्यनिच्छंतीर्विद्यास्त्यक्ष्यंति तान् क्षणात् ॥२१६॥

---

१ शाखानगराणि नगराद्बहिःस्थितानि उपपुराणि ।

उच्चैरुदीर्य मर्यादामेवमाचंद्रकालिकीम्[1] । अलीलिखदहिस्वामी[2] रत्नभित्तिप्रशस्तिषु ॥ २१७ ॥
विद्याधराधिराजत्वे सप्रसादं निवेश्य तौ । विरचय्य व्यवस्थां च धरणेंद्रस्तिरोदधे ॥ २१८ ॥
गौरीणां नाम्ना गौरेया मनूनां मनुपूर्वकाः । गंधारीणां तु गांधारा मानवीनां तु मानवाः ॥ २१९ ॥
कौशिकीनां तु विद्यानां कौशिकीपूर्वका मताः । विद्यानां भूमितुंडानां कीर्तिता भूमितुंडकाः ॥ २२० ॥
विद्यानां मूलवीर्याणां विश्रुता मूलवीर्यकाः । शंकुकानां शंकुकास्तु पांडुकीनां तु पांडुकाः ॥ २२१ ॥
कालीनां कालिकेयास्तु श्वपाकीनां श्वपाककाः । मातंगीनां तु मातंगाः पार्वतीनां तु पार्वताः ॥ २२२ ॥
वंशालयानां विद्यानां ख्याता वंशालया इति । विद्यानां पांसुमूलानां प्रथिताः पांसुमूलकाः ॥ २२३ ॥
विद्यानां वृक्षमूलानां विख्याता वृक्षमूलकाः। स्वस्वविद्याख्यया ख्याता निकायाः षोडशाऽभवन्॥२२४॥
षड्भिः कुलकं ॥

एवं विद्याधराणां तु निकाया नमिभूभुजा । आदीयंत विभज्याष्टावष्टौ विनमिना पुनः ॥ २२५ ॥
स्वके स्वके निकाये च स्वकाय इव भक्तितः । स्थापयांचक्रिरे ताभ्यां विद्याधिपतिदेवताः ॥ २२६ ॥
तौ नित्यमृषभस्वामिमूर्तिपूजाकृतक्षणौ[3] । धर्मानाबाधया भोगान् बुभुजाते सुराविव ॥ २२७ ॥
द्वीपांतजगतीजालकटकेषु कदापि तौ । रेमाते सह कांताभिः शक्रेशानाविवापरौ ॥ २२८ ॥
सुमेरुशैलोद्यानेषु कदाचिन्नंदनादिषु । सदानंदौ विजह्राते स्वैरिणौ तौ समीरवत् ॥ २२९ ॥
नंदीश्वरादितीर्थेषु जग्मतुस्तौ कदाचन । शाश्वतप्रतिमार्चायै श्राद्धश्रीणां[4] फलं ह्यदः ॥ २३० ॥

---

१ यावचन्द्रोदयं । २ धरणेन्द्रः । ३ ऋषभस्वामिमूर्तिपूजाया कृतोत्सवौ । ४ श्रावकश्रीणा ।

तौ कदाचिद्विदेहादिक्षेत्रेषु श्रीमदर्हताम् । गत्वा समवसरणे पपतुर्वाक्सुधारसम् ॥ २३१ ॥
चारणश्रमणेभ्यश्च कदाचिद्धर्मदेशनाम् । तौ शुश्रुवतुरुत्कर्णौ गीतं युवमृगाविव ॥ २३२ ॥
सम्यक्त्ववंतावक्षीणकोशौ विद्याधरावृतौ । त्रिवर्गा[1]बाधया राज्यं यथावत्तौ प्रचक्रतुः ॥ २३३ ॥
ते तु कच्छमहाकच्छादयो राजन्यतापसाः । गंगाया दक्षिणे कूले मृगा इव वनेचराः ॥ २३४ ॥
वल्कलाच्छादनधराः पादपा इव जंगमाः । आहारमुद्वांतमिवास्पृशंतो गृहमेधिनाम् ॥ २३५ ॥
चतुर्थषष्ठादितपःपरिशोषितधातुकम् । धारयंतः कृशतरं रिक्तभस्त्रो[2]पमं वपुः ॥ २३६ ॥
भुंजानाः पारणाहेपि शीर्णपर्णफलादिकम् । हृदये भगवत्पादान् ध्यायंतोऽस्थुरनन्यगाः ॥ २३७ ॥
॥ चतुर्भिः कलापकम् ॥
आर्यानार्येषु मौनेन विहरन् भगवानपि । संवत्सरं निराहारश्चिंतयामासिवानिदम् ॥ २३८ ॥
प्रदीपा इव तैलेन पादपा इव वारिणा । आहारेणैव वर्त्तंते शरीराणि शरीरिणाम् ॥ २३९ ॥
द्विचत्वारिंशता भिक्षादोषैर्भृशमदूषितः । स तु वृत्त्या माधुकर्या[3] काले ग्राह्योऽनगारिणा ॥ २४० ॥
अद्यापि यदि वाहारमतिक्रांतदिनेष्विव । न गृह्णाम्यभिग्रहाय किं तत्तिष्ठेत्पुनर्यदि ॥ २४१ ॥
अमी सहस्राश्चत्वार इवाभोजनपीडिताः । तदा भंगं ग्रहीष्यंति भाविनो मुनयोऽपरे ॥ २४२ ॥
स्वामी मनसिकृत्यैवं भिक्षार्थं चलितस्ततः । पुरं राजपुरं प्राप पुरमंडलमंडनम् ॥ २४३ ॥
तस्मिन् पुरे बाहुबलिसूनोः सोमप्रभस्य तु । राज्ञः कुमारेण तदा स्वप्ने श्रेयांसभूभुजा ॥ २४४ ॥

१ धर्मार्थकामाबाधया । २ रिक्ता या चर्ममयी भस्त्रा सा उपमा यस्य तत् । ३ मधुकरो भ्रमरस्तत्सम्बन्धिन्या ।

कोप्यजल्पन्मम हयान् गृहाणार्कहयोपमान् । किमातिथेयाग्रहणादयोग्यान्विदधासि नः ॥ २५९ ॥
कोप्युवाचाददस्व रथान् सनाथान्[1] जात्यवाजिभिः । किमेभिर्ननु कर्त्तव्यं पादचारिणि भर्त्तरि ॥ २६० ॥
कोप्यूचेऽमूनि पक्वानि सहकारफलानि नः । उपाददस्व प्रभो मावमंस्थाः प्रणयिनं जनम् ॥ २६१ ॥
कोप्यभाषिष्ट तांबूलवल्लीपत्राण्यमूनि मे । क्रमुकाण्यप्युपाददस्व प्रसीदैकांतवत्सल ॥२६२॥
बभाषे कश्चिदप्येवमपराद्धं नु किं मया । यदशृण्वन्निव स्वामिन्नुत्तरं न प्रयच्छसि ॥ २६३ ॥
इत्यर्थ्यमानोऽकल्पत्वाद[2]गृह्णन् किमपि प्रभुः । गेहं गेहमुपेयाय ऋक्षमृक्षमिवोडुपः ॥ २६४ ॥
प्रातःकाले शकुंतीना[3]मिव कोलाहलं तदा । पौराणां परिशुश्राव श्रेयांसः स्वाश्रयस्थितः ॥ २६५ ॥
किमेतदिति तेनानुयुक्तो वेत्रधराग्रणीः । इति विज्ञपयामास पुरोभूय कृतांजलिः ॥ २६६ ॥
लुठद्भिः पादपीठाग्रे किरीटस्पृष्टभूतलम् । इंद्रैर्नरेंद्रैरिव यः सेव्यते दृढभक्तिभिः॥ २६७ ॥
जीवनोपायकर्माणि लोकेष्वेकानुकंपया । दर्शयांचक्रिरे येन पदार्था इव भानुना ॥ २६८ ॥
विभज्य भरतादीनां युष्माकं चापि भूरियम् । ददे येन स्वशेषेव तदा दीक्षां जिघृक्षता ॥२६९॥
यः स्वयं चाददे सर्वं सावद्यपरिहारतः । कर्माष्टकमहापंकशोषग्रीष्मातपं तपः ॥ २७० ॥
व्रतात्प्रभृति नाथोऽसौ निःसंगो ममतोज्झितः । निराहारो विहरते पादाभ्यां पावयन्महीम् ॥ २७१ ॥
॥ पंचभिः कुलकम् ॥
सूर्यातपान्नोद्विजते न छायामनुमोदते । तुल्य एवोभयत्रापि स्वाम्ययं सानुमानिव ॥ २७२ ॥

१ सनाथान् सहितान् । २ अकल्पत्वात् अदेयत्वात् । ३ शकुन्तीना पक्षिणाम् ।

न विरज्यत्यसौ शीतादशीते च न रज्यति । वज्रकाय इव स्वामी यत्र तत्रावतिष्ठते ॥ २७३ ॥
युगमात्रं दत्तदृष्टिरमृद्नन् कीटिकामपि । पादचारं करोत्येष संसारकरिकेशरी ॥ २७४ ॥
प्रत्यक्षीकारनिर्देश्या जगत्रितयदेवता । इह भाग्यवशादायात्ययं ते प्रपितामहः ॥ २७५ ॥
गवामिवानुगोपालं धावतां स्वामिनं ह्यमुम् । असौ सकलपौराणां कलः कलकलोऽधुना ॥ २७६ ॥
दृष्ट्वा स्वामिनमायांतं युवराजोऽपि तत्क्षणम् । अधावत्पादचारेण पत्तीनप्यतिलंघयन् ॥ २७७ ॥
छत्रोपानहमुत्सृज्य युवराजेऽभिधाविनि । अच्छत्रोपानहा पर्षत् तच्छायेवान्वधावत ॥ २७८ ॥
संभ्रमाडुच्छलन् लोलकुंडलो युवराट् बभौ । स्वामिनोऽग्रे पुनर्बाललीलामाकलयन्निव ॥ २७९ ॥
गृहांगणजुषो भर्त्तुर्लुठित्वा पादपंकजे । श्रेयांसोऽमार्जयत्केशैर्भ्रमरभ्रमकारिभिः ॥ २८० ॥
समुत्थाय जगद्भर्त्तुर्विधाय त्रिः प्रदक्षिणाम् । ननाम पादौ हर्षाश्रुवारिभिः क्षालयन्निव ॥ २८१ ॥
स ऊर्द्ध्वीभूय पुरतः स्वामिनो मुखपंकजम् । ईक्षांचक्रे मुदा चंद्रं चकोर इव पार्वणम् ॥ २८२ ॥
ईदृशं क्व मया दृष्टं लिंगमित्यभिचिंतयन् । विवेकशाखिनो बीजं जातिस्मरणमाप सः ॥ २८३ ॥
विवेद चैवं यत्पूर्वविदेहे चक्रवर्त्त्यभूत् । भगवान् वज्रनाभोऽयं जातोऽहं चास्य सारथिः॥ २८४ ॥
तस्मिन्नेव भवे भर्त्तुर्वज्रसेनाभिधः पिता । ईदृशं तीर्थकृल्लिंगं धारयन्नीक्षितो मया ॥ २८५ ॥
स्वामिनो वज्रसेनस्य पादांते समुपात्तवान् । वज्रनाभः परिव्रज्यामहमप्यस्य पृष्ठतः ॥ २८६ ॥
अर्हतो वज्रसेनस्य मुखादश्रौषमित्यहम् । भरते वज्रनाभोऽसौ भावी प्रथमतीर्थकृत् ॥ २८७ ॥

१ युगमात्र हस्तचतुष्कपरिमाण । २ लिङ्ग वेष । ३ विवेकवृक्षस्य । ४ तीर्थङ्करलिङ्ग । ५ समुपाददे इत्यपि पाठः ।

स्वयंप्रनादींश्च नवान् पर्याटममुना सह । अधुना वर्त्तते स्वामी ममैष प्रपितामहः ॥ २८८ ॥
दिष्ट्या दृष्टो मया नाथः समग्रजगतामपि । अनुग्रहीतुं मामेष साक्षान्मोक्ष इवागतः ॥ २८९ ॥
अत्रांतरे कुमारस्य प्राभृते केनचिन्मुदा । नवेक्षुरससंपूर्णा ढौकयांचक्रिरे घटाः ॥ २९० ॥
ततो विज्ञातनिर्दोषभिक्षादानविधिः स तु । गृह्यतां कल्पनीयोऽयं रस इत्यवदद्विभुम् ॥ २९१ ॥
प्रभुरप्यंजलीकृत्य पाणिपात्रमधारयत् । उत्क्षिप्योत्क्षिप्य सोपीक्षुरसकुंभानलोठयत् ॥ २९२ ॥
भूयानपि रसः पाणिपात्रे भगवतो ममौ । श्रेयांसस्य तु हृदये ममुर्न हि मुदस्तदा ॥ २९३ ॥
स्त्यानो नु स्तंभितोन्वासीत् व्योम्नि लग्नशिखो रसः । अंजलौ स्वामिनोऽचिंत्यप्रभावाः प्रभवः खलु २९४
ततो भगवता तेन रसेनाकारि पारणम् । सुरासुरनृणां नेत्रैः पुनस्तद्दर्शनामृतैः ॥ २९५ ॥
दिवि दुंदुभयो नेदुः प्रतिनादोन्मदिष्णवः । श्रेयांसश्रेयसां ख्यातिकरा वैतालिका इव ॥ २९६ ॥
रत्नवृष्टिरभूच्छ्रेयांसौकसि त्रिदिवौकसाम् । सममानंदसंभूतजननेत्राश्रुवृष्टिभिः ॥ २९७ ॥
दिवो देवाः पञ्चवर्णपुष्पवृष्टिं वितेनिरे । पृथ्वीं पूजयितुमिव स्वामिपादपवित्रिताम् ॥ २९८ ॥
सर्वामरद्रुकुसुमनिस्यंदैरिव संचितैः । चक्रुर्गंधांबुभिर्वृष्टिं त्रिविष्टपसदस्तदा ॥ २९९ ॥
विदधानो दिवं दीव्यद्विचित्राभ्रमयीमिव । चेलोत्क्षेपः सुरनरैश्चक्रे चामरसोदरः ॥ ३०० ॥
[3]राधशुक्लतृतीयायां दानमासीत्तदक्षयम् । पर्वाक्षयतृतीयेति ततोऽद्यापि प्रवर्तते ॥ ३०१ ॥

---

१ श्रेयासकल्याणाना । २ वैतालिका बन्दिनः । ३ राधशुक्लतृतीयाया वैशाखशुक्लतृतीयाया ।

श्रेयांसोपज्ञमवनौ[1] दानधर्मः प्रवृत्तवान् । स्वाम्युपज्ञमिवा[2]शेषव्यवहारनयक्रमः ॥ ३०२ ॥
स्वामिपारणकाद्देवसंपाताच्चाथ विस्मिताः । राजानो नागराश्चान्येऽप्येयुः श्रेयांसवेश्मनि ॥ ३०३ ॥
तदा कच्छमहाकच्छादयः क्षत्रियतापसाः । आजग्मुरुद्दाममुदः स्वामिपारणवार्त्तया ॥ ३०४ ॥
राजानो नागराश्चान्ये जना जानपदा अपि । पुलकोत्फुल्लवपुषः श्रेयांसमिदमूचिरे ॥३०५ ॥
भोभोः कुमार धन्योसि नृणामपि शिरोमणिः । यदिक्षुरसलेशोऽपि स्वामिना ग्राहितस्त्वया ॥ ३०६ ॥
प्रदीयमानमस्माभिः सर्वस्वमपि नात्तवान् । नामन्यत तृणायापि प्रसन्नोऽस्मासु न प्रभुः ॥ ३०७ ॥
संवत्सरमटन् स्वामी ग्रामाकरपुराटवीः । कस्याप्यादत्त नातिथ्यं धिगस्मान् भक्तमानिनः ॥ ३०८ ॥
दूरेऽस्तु वस्तुग्रहणं दूरे वेश्मसु विश्रमः । अद्य यावन्न वाचापि स्वामी नः समभावयत् ॥ ३०९ ॥
पुत्रवत्[3]त्रातपूर्वी नः पूर्वलक्षाण्यनेकशः । असं[4]स्तव इवेदानीं प्रभुरस्मासु वर्त्तते ॥ ३१० ॥
श्रेयांसस्तानुवाचैवं किमेवमभिधीयते । नह्ययं पूर्ववत्स्वामी परिग्रहपरो नृपः ॥ ३११ ॥
इदानीं वर्तते भर्ता भवावर्त्ता[5]न्निवर्तितुम् । कृतनिःशेषसावद्यव्यापारविरतिर्यतिः ॥ ३१२ ॥
स्नानांगरागनेपथ्यवस्त्राणि स्वीकरोति सः । यो भोगेच्छुः स्वामिनस्तु तद्विरक्तस्य किं हि तैः ॥ ३१३ ॥
कन्यकाः स हि गृह्णाति यः कामविवशो जनः । स्वामिनो जितकामस्य कामिन्यः काममश्म[6]वत् ॥३१४॥
हस्त्यश्वादि स गृह्णाति यो महीराज्यमिच्छति । भर्त्तुः संयमसाम्राज्यभाजस्तद्दग्धवस्त्रवत् ॥ ३१५ ॥

---

१ श्रेयासोपज्ञ प्रथम श्रेयासेन प्रकटीकृतो दानधर्मः प्रवृत्तवान् । २ स्वाम्युपज्ञ प्रथम ऋषभस्वामिना प्रकटीकृतः अशेषव्यवहारनयक्रमः प्रवृत्तवान् । ३ त्रातपूर्वी रक्षितपूर्वी । ४ अपरिचय इव । ५ ससाररूपजलावर्त्तात् । ६ अश्मवत् पाषाणवत् ।

फलादिकं स गृह्णाति सजीवं यो हि हिंसकः । स्वामी त्वखिलजंतूनामसौ जीवाभयप्रदः ॥ ३१६ ॥
एषणीयं कल्पनीयं प्रासुकं च जगत्पतिः । आदत्तेऽन्नादि तन्मुग्धा भवंतो न हि जानते ॥ ३१७ ॥
ऊचिरे युवराजं ते स्वामिना ज्ञापितं पुरा । यत्किंचिदपि शिल्पादि तन्मात्रं जानते जनाः ॥ ३१८ ॥
न ज्ञापितमिदं भर्त्रा न जानीमस्ततो वयम् । त्वया पुनः कुतो ज्ञातमिति शंसितुमर्हसि ॥ ३१९ ॥
व्याजहार कुमारोपि भगवद्दर्शनान्मम । जातिस्मरणमुत्पन्नं धीरिव ग्रंथदर्शनात् ॥ ३२० ॥
अमुना स्वामिना सार्धमष्टौ जन्मांतराण्यहम् । भृत्यो ग्रामांतराणीव पर्यटं स्वर्गमर्त्ययोः ॥ ३२१ ॥
इतो भवात्तृतीयस्मिन्नतिक्रांतभवे प्रभोः । पिताभवद्वज्रसेनो विदेहभुवि तीर्थकृत् ॥ ३२२ ॥
तदंतिके प्रव्रजितः स्वामी पश्चादहं पुनः । तज्जन्मस्मरणादेतदज्ञायि सकलं मया ॥ ३२३ ॥
तथा मे तातपादानां सुबुद्धिश्रेष्ठिनोपि च । त्रयाणामपि स्वप्नानां प्रत्यक्षमधुना फलम् ॥ ३२४ ॥
श्यामो मेरुर्मया दृष्टः पयोभिः क्षालितश्च यत् । तपःक्षाम स हि स्वामीक्षुरसैः पारणाद्भात् ॥ ३२५ ॥
युध्यमानोऽरिभिर्यस्तु राज्ञा दृष्टः प्रभुर्हि सः । मत्पारणकसांनिध्यात्पराजिग्ये परीषहान् ॥ ३२६ ॥
सुबुद्धिश्रेष्ठिना यच्च दृष्टमादित्यमंडलात् । गोसहस्रं च्युतं न्यस्तं मयाथार्कोंधिकं बभौ ॥ ३२७ ॥
आदित्यो भगवानेष गोसहस्रं तु केवलम्[1] । तद्भ्रष्टं पारणेनाद्य मयाऽयोजि बभौ च सः ॥ ३२८ ॥
एतच्छ्रुत्वा च ते सर्वे श्रेयांसं साधु साध्विति । भाषमाणाः प्रमुदिताः स्थानं निजनिजं ययुः ॥ ३२९ ॥
कृतपारणकः स्वामी श्रेयांससदनात्ततः । जगामान्यत्र नैकत्र तिष्ठेच्छद्मस्थतीर्थकृत् ॥ ३३० ॥

१ केवल केवलज्ञान ।

भगवत्पारणस्थानातिक्रमं कोपि मा व्यधात् । इति रत्नमयं तत्र श्रेयांसः पीठमादधे ॥ ३३१ ॥
त्रिसंध्यमपि तद्रत्नपीठं भक्तिभरानतः । श्रेयांसः पूजयामास साक्षात्पादाविव प्रभोः ॥ ३३२ ॥
किमेतदिति लोकेन पृष्टः सोमप्रभात्मजः । आदिकृन्मंडलमिदमिति [1]तं शंसति स्म तत् ॥ ३३३ ॥
यत्र यत्र प्रभुर्भिक्षामग्रहीत्तत्र तत्र च । पीठं लोकोऽकृतादित्यपीठं तच्च क्रमादभूत् ॥ ३३४ ॥
स्वामी संप्राप सायाह्ने निकुंजमिव कुंजरः । बहली[2]मंडले बाहुबलेस्तक्षशिलापुरीम् ॥ ३३५ ॥
यस्याश्च बहिरुद्याने तस्थौ प्रतिमया प्रभुः । गत्वाथ बाहुबलये तदायुक्तैर्न्यवेद्यत ॥ ३३६ ॥
अथादिक्षत्पुरीरक्षान् क्ष्मापतिस्तत्क्षणादपि । विचित्रं हट्टशोभादि नगरे क्रियतामिति ॥ ३३७ ॥
पदे पदेऽभवद्भास्तंभतोरणमालिका । लंबमानमहालुंबिचुंबिताध्वन्यमौलिका ॥ ३३८ ॥
मंचाः प्रतिपथं चासन् रत्नभाजनभासुराः । विमानानीव भगवद्दर्शनायातनाकिनाम् ॥ ३३९ ॥
अनिलांदोलितोद्दामपताकामालिकाछलात् । पूः सहस्रभुजीभूय ननर्तेव मुदा तदा ॥ ३४० ॥
नव्यकुंकुमपानीयछटाभिरभितोप्यभूत् । सद्यो रचितमंगल्यांगरागेव वसुंधरा ॥ ३४१ ॥
भगवद्दर्शनोत्कंठारजनीजानि[3]संगमात् । पुरं तदानीमुन्निद्रमभूत्कुमुदखंडवत् ॥ ३४२ ॥
प्रातः स्वं पावयिष्यामि लोकं च स्वामिदर्शनात् । इतीच्छतो बाहुबलेः साभून्मासोपमा निशा ॥ ३४३ ॥
तस्यामीषद्विभातायां विभावर्यां जगद्विभुः । प्रतिमां पारयित्वागात्क्वचिदन्यत्र वायुवत् ॥ ३४४ ॥
प्रातश्च बद्धमुकुटैर्महद्भिर्मंडलेश्वरैः । भूयिष्ठैरिव मार्तंडैः परितः परिवारितः ॥ ३४५ ॥

१ त लोक । २ बहलीदेशे । ३ रजनीजानिश्चन्द्र ।

उपायानामिवा[1]गारैरर्थशास्त्रैरिवांगिभिः । शुक्राद्यैरिव भूयिष्ठैर्वरिष्ठैर्मन्त्रिभिर्वृतः ॥ ३४६ ॥
जगद्वंघनजंघालै[2]र्लक्षसंख्यैस्तुरंगमैः । गूढपक्षैः पक्षिराजैरिव विष्वग्विराजितः ॥ ३४७ ॥
क्षरन्मदजलासारशमितक्षितिरेणुभिः । उत्तुंगैः शोभितो नागैर्नगैरिव सनिर्झरैः ॥ ३४८ ॥
वसंतश्रीप्रभृत्यंतःपुरस्त्रीभिः सहस्रशः । पातालकन्याभिरिवासूर्यपश्याभिरावृतः ॥ ३४९ ॥
सचामराभ्यां च वारस्त्रीभ्यां सेवितपार्श्वकः । सराजहंसाभ्यां गंगायमुनाभ्यां प्रयागवत् ॥ ३५० ॥
धवलेनातपत्रेणोपरिस्थेनातिहारिणा । राकानिशीथ[3]शशिना सानुमानिव शोभितः ॥ ३५१ ॥
सुवर्णदंडहस्तेन प्रतीहारेण चाग्रतः । शोध्यमानपथो देवनंदिना[4] देवराडिव ॥ ३५२ ॥
अन्वीयमानोऽश्वारूढै रत्नाभरणभूषितैः । पौरैरिभ्यैरसंख्यातैः श्रीदेव्या इव पुत्रकैः ॥ ३५३ ॥
शिलोच्चयशिलापृष्ठमिव पंचाननो[5] युवा । भद्रद्विपपतिस्कंधमध्यारूढः सुरेंद्रवत् ॥ ३५४ ॥
विराजमानः शिरसि तरंगीभूतकांतिना । रत्नमयकिरीटेन चूलयेवामराचलः ॥ ३५५ ॥
बिभ्रन्मुक्ताकुंडले च वदनस्य श्रिया जितौ । सेवाकृते समायाते जंबूद्वीपविधू[6] इव ॥ ३५६ ॥
स्थूलमुक्तामणिमयं हारयष्टिं च धारयन् । हृदये मंदिरे लक्ष्म्या वप्रसब्रह्मचारिणम् ॥ ३५७ ॥
दोर्मूलयोर्दधानश्च जात्यजांबूनदांगदौ[7] । दृढौ नवलतावेष्टाविवोच्चैर्भुजशाखिनौ ॥ ३५८ ॥
मुक्तामणिमयौ बिभ्रत्कंकणौ मणिबंधयोः । लावण्यसरितस्तीरवर्तिफेनच्छटोपमौ ॥ ३५९ ॥

---

१ उपाया. सामादयः । २ जङ्घालैः वेगिभिः । ३ पूर्णिमार्द्धरात्रचन्द्रेण । ४ तदाख्येन इद्रप्रतिहारसुरेण । ५ पञ्चाननः केशरी । ६ जम्बूद्विपचद्रौ इव । ७ जात्यसुवर्णकेयूरौ ।

अंगुलीये च बिभ्राणः कांतिपल्लवितांबरे । मणी इवानणीयांसौ पाण्योः फणिफणश्रियोः ॥ ३६० ॥
चोलकेनांगलग्नेन सूक्ष्मश्वेतेन शोभितः । असंलक्ष्यविच्छेदेन श्रीचंदनविलेपनात् ॥ ३६१ ॥
चारुमंदाकिनीवीचिनिचयस्पर्द्धिनी पटीम् । धारयन् परितो राकाचंद्रमाश्चंद्रिकामिव ॥ ३६२ ॥
विचित्रवर्णरुचिरेणांतरीयेण रोचितः । नानाधातू[2]पत्यकया निषेवित इवाचलः ॥ ३६३ ॥
महाबाहुर्बाहुबलिः पाणिभ्यां वर्तयन् शृणिम्[3] । श्रीणामाकर्षणक्रीडाकुटिकां[4]मुद्वणामिव ॥ ३६४ ॥
बंदिवृंदजयजयारावपूरितदिग्मुखः । स्वामिपादपवित्रस्योपवनस्यांतिकं ययौ ॥ ३६५ ॥
एकविंशत्या कुलकम् ।
अवरुह्य करिस्कंधाद्वैनतेय[5] इवांबरात् । छत्रादिप्रक्रियां त्यक्त्वा तदुद्यानं विवेश सः ॥ ३६६ ॥
व्योमेव चंद्ररहितं सुधाकुंडमिवासुधम् । तदस्वामिकमुद्यानमपश्यदृषभात्मजः ॥ ३६७ ॥
क नाम भगवत्पादा नयनानंददायिनः । इत्यपृच्छद्दर्तु[6]च्छेच्छः सर्वानुद्यानपालकान् ॥ ३६८ ॥
तेप्यूचुः किंचिदप्यग्रे यामिनीव ययौ विभुः । यावत्कथयितुं यामस्तावद्देवोऽप्युपाययौ ॥ ३६९ ॥
हस्तविन्यस्तचिंबु[7]को बाष्पायितविलोचनः । अथेदं चिंतयामास ताम्यंस्तक्षशिलापतिः ॥ ३७० ॥
स्वामिनं पूजयिष्यामि समं परिजनैरिति । मनोरथो मुधा माभूदृद्धिबीजमिवोषरे[8] ॥ ३७१ ॥
चिरं कृतविलंबस्य लोकानुग्रहकाम्यया । धिगियं मम सा जज्ञे स्वार्थभ्रंशेन मूर्खता ॥ ३७२ ॥

---

१ महान्तौ । २ नानाविधधातुमय्या पर्वतासन्नभूम्या । ३ शृणिं वज्र । ४ कुटिका आकर्षणशस्त्र । ५ वैनतेयो गरुड' । ६ महेच्छः । ७ चिबुकं मुखाधोभागः । ८ ऊषरे क्षारभूमौ ।

धिगियं वैरिणी रात्रिर्धिगियं च मतिर्मम । अंतरायकरी स्वामिपादपद्मविलोकने ॥ ३७३ ॥
विज्ञातमप्यविज्ञातं ज्ञानुमानप्यज्ञानुमान् । दृशावप्यदृशावेव पश्यामि स्वामिनं न यत् ॥ ३७४ ॥
अत्र प्रतिमया तस्थौ रात्रिं त्रिभुवनेश्वरः । अयं पुनर्बाहुबलिः सौधे सुष्वाप निस्त्रपः ॥ ३७५ ॥
अथ बाहुबलिं दृष्ट्वा चिंतासंतानसंकुलम् । उवाच सचिवो वाचा शोकशल्यविशल्यया ॥३७६॥
अत्र स्वामिनमायातं नापश्यमिति शोचसि । किं देव नित्यं वास्तव्यः स एव हृदि दृश्यते ॥ ३७७ ॥
कुलिशांकुशचक्राब्जध्वजमत्स्यादिलांछितैः । दृष्टैः स्वामिपदन्यासैर्दृष्टः स्वाम्येव ज्ञावतः ॥ ३७८ ॥
श्रुत्वेति स्वामिनस्तानि पदबिंबानि ज्ञक्तितः । सांतःपुरपरीवारः सुनंदासूरवंदत ॥ ३७९ ॥
पदान्येतानि मास्मातिक्रामत् कोपीति बुद्धितः । धर्मचक्रं रत्नमयं तत्र बाहुबलिर्व्यधात् ॥३८०॥
अष्टयोजनविस्तारं चतुर्योजनमुच्छ्रितम् । सहस्रारं बज्जौ बिंबं सहस्रांशोरिवाखिलम् ॥ ३८१ ॥
त्रिजगत्स्वामिनस्तस्य प्रज्ञावादतिशायिनः । सद्यस्तत्कृतमेवेद्धि दुष्करं द्युसदामपि ॥ ३८२ ॥
तत्तथापूजयद्राजा पुष्पैः सर्वत आहृतैः । समलक्षि यथा पौरैः पुष्पाणामिव पर्वतः ॥ ३८३ ॥
तत्र प्रवरसंगीतनाटकादिज्ञिरद्भुतम् । नंदीश्वरे शक्र इव स चक्रेऽष्टाह्निकोत्सवम् ॥ ३८४ ॥
आरक्षकानर्चकांश्च तत्रादिश्य विशांपतिः । नमस्कृत्य च कृत्यज्ञो जगाम नगरीं निजाम् ॥३८५॥
ज्ञगवानप्यनायत्तः[1] समीरण इवास्खलन् । नानाविधतपोनिष्ठो विविधाज्ञिग्रहोद्यतः ॥ ३८६ ॥
यवनाडंब इत्यादिम्लेच्छदेशेषु मौनज्ञाक् । अनार्यान् ज्ञद्रकीकुर्वन् दर्शनेनापि देहिनः ॥ ३८७ ॥

---

१ अनायत्तः स्वाधीनः ।

उपसर्गैरसंस्पृष्टः सहमानः परीषहान् । सहस्रमेकं वर्षाणां व्यहरद्विनलीलया ॥ ३८८ ॥

॥ त्रिभिर्विशेषकम् ॥

अयोध्याया महापुर्याः शाखानगरमुत्तमम् । ययौ पुरिमतालाख्यं भगवान् वृषभध्वजः॥ ३८९ ॥

तस्य चोत्तरतो रम्यं द्वितीयमिव नंदनम् । उद्यानं शकटमुखं नाम न्यविशत प्रभुः ॥ ३९० ॥

कृताष्टमतपास्तत्र न्यग्रोधस्य तरोरधः । प्रतिमास्थोऽप्रमत्ताख्यं गुणस्थानं प्रपन्नवान् ॥ ३९१ ॥

ततश्चापूर्वकरणमारूढः प्रतिपद्यत । शुक्लध्यानं सवीचारं पृथक्त्वेन वितर्कयुक् ॥ ३९२ ॥

प्राप्यानिवृत्तिं च सूक्ष्मसंपरायगुणं ततः । क्षणात् क्षीणकषायत्वं प्रतिपेदे जगद्गुरुः ॥ ३९३ ॥

हत्वा ध्यानेन तेनैव लोभं किट्टीकृतं[1] क्षणात् । उपशांतकषायो[2]ऽभूत्कतकेन यथा जलम् ॥ ३९४ ॥

ऐक्यश्रुतमवीचारं शुक्लध्यानं द्वितीयकम् । क्षणादासादयदथ क्षीणमोहोंतिमक्षणे ॥ ३९५ ॥

पंच ज्ञानावरणानि दृष्ट्या[3]वृत्तिचतुष्टयम् । अंतरायांश्च पंचेति घातिशेषमनाशयत् ॥ ३९६ ॥

अथ व्रतात्सहस्राब्द्यां[4] फाल्गुनैकादशीदिने । कृष्णे तथोत्तराषाढास्थिते चंद्रे दिवामुखे ॥ ३९७ ॥

उत्पेदे केवलज्ञानं त्रिकालविषयं विभोः । हस्तस्थितमिवाशेषं दर्शयद्भुवनत्रयम् ॥ ३९८ ॥

॥ युग्मम् ॥

दिशः प्रसेदुरभवन्वायवः सुखदायिनः । नारकाणामपि तदा क्षणं सुखमजायत ॥ ३९९ ॥

---

१ किट्टीकृत चूर्णीकृत । २ कषायाः क्रोधादयश्चत्वारः जलपक्षे कषायशब्देन मालिन्यादिदोषा ग्राह्याः । ३ दर्शनावरणचतुष्टय । ४ सहस्रवर्षेषु गतेषु ।

अथेंद्राणामशेषाणामासनानि चकंपिरे । तन्नोदितुमिव स्वामिकेवलोत्सवकर्मणे ॥ ४००॥
प्रणेदुरिंद्रलोकेषु महाघंटाः पटुस्वनाः । सद्यो दूत्य इव स्वस्वलोकाकारणकर्मणि[1] ॥४०१॥
यियासोः स्वामिपादांते सौधर्माधिपतेः सुरः । ऐरावणो गजीभूय चिंतामात्रादुपस्थितः ॥ ४०२ ॥
विराजमानस्तन्वा स लक्षयोजनमानया । दिदृक्षुः स्वामिनं मेरुरिव जंगमतां गतः ॥ ४०३ ॥
अंगप्रभाभिर्नीहारधवलाभिः समंततः । ककुभां चांदनमिव वितन्वानो विलेपनम् ॥ ४०४ ॥
गंडस्थानगलद्दानजलैरतिसुगंधिभिः । स्वर्गांगणभुवं कुर्वन् कस्तूरीस्तवकांकिताम् ॥४०५॥
कर्णतालैस्तालवृंतैरिव लोलैर्निवारयन् । कपोलतलसंपातिगंधांधमधुपावलीम् ॥ ४०६ ॥
कुंभस्थलपराभूतबालमार्तंडमंडलः । आनुपूर्वीपीनवृत्तशुंडानुकृतनागराट्[2] ॥ ४०७ ॥
मध्वा[3]भनेत्रदशनस्ताम्रपत्राभतालुकः । भंभावृत्तशुभग्रीवः पृथुगात्रांतरालकः ॥ ४०८ ॥
अधिज्यीकृतधन्वाभपृष्ठवंशः कृशोदरः । चंद्रमंडलसंकाशनखमंडलमंडितः ॥ ४०९ ॥
सुगंधिदीर्घनिःश्वासश्चलदीर्घकरांगुलिः । दीर्घौष्ठपल्लवो दीर्घमेह्नो[4] दीर्घवालधिः[5] ॥ ४१० ॥
घंटाभ्यां पार्श्वयोश्चंद्रार्काभ्यां मेरुरिवांकितः । देवद्रुकुसुमावेष्टं कक्षानाडीं च धारयन् ॥ ४११ ॥
मुखानि हेमपट्टालंकृतभालानि तस्य च । बभुर्दिगष्टकश्रीणामिव विभ्रमभूमयः ॥ ४१२ ॥
अष्टौ मुखे मुखे दंतास्तिरश्चीनायतोन्नताः । दृढाश्चकासिरे तस्य महाद्रेरिव दंतकाः ॥ ४१३ ॥
दंते दंते पुष्करिणी स्वादुनिर्मलपुष्करा । गिरौ वर्षधरे वर्षधरे ह्रद इवाभवत् ॥ ४१४ ॥

१ आकारणकर्मणि आह्वानकर्मणि । २ नागराट् शेष. । ३ मधुवर्णनेत्रदन्तः । ४ दीर्घलिङ्ग । ५ दीर्घपुच्छ ।

पुष्करिण्यां पुष्करिण्यामष्टावंभोरुहाणि च । अब्देवीभिः कृतानीव मुखानि बहिरंभसः ॥ ४१५ ॥
दलानि विपुलान्यष्टांभोरुहेऽभोरुहेऽपि च । क्रीडत्सुरस्त्रीविश्रामांतरीपाणीव[1] रेजिरे ॥ ४१६ ॥
दले दलेऽष्टसंख्यानि नाटकानि विरेजिरे । चतुर्विधैरभिनयैः सनाथानि पृथक् पृथक् ॥ ४१७ ॥
द्वात्रिंशदासन् पात्राणि नाटके नाटकेऽपि च । निर्झरा इव सुस्वादरसकल्लोलसंपदः ॥ ४१८ ॥
वासवः सपरीवारस्तं वारणवरं ततः । अग्रासनेऽध्यारुरोह कुंभाग्रच्छन्ननासिकः ॥ ४१९ ॥
आसीनसपरीवारवासवो वारणाधिपः । सहसा सकलः कल्पः सौधर्म इव सोऽचलत् ॥ ४२० ॥
क्षणादपि तदुद्यानमृषभस्वामिपावितम् । स प्राप पालक इव स्ववपुः संक्षिपन् क्रमात् ॥ ४२१ ॥
इंद्राः समं देवगणैरपरेऽप्यच्युतादयः । अहंपूर्विकयेवेयुस्तत्रोच्चैर्दधतस्त्वराम् ॥ ४२२ ॥
ततः समवसरणस्यावनीमेकयोजनाम् । अमृजन्वायुकुमाराः स्वयं मार्जितमानिनः ॥ ४२३ ॥
गंधांबुवृष्टिभिर्मेघकुमाराः सिषिचुः क्षितिम् । सुगंधिबाष्पैः सोत्क्षिप्तधूपार्घैर्वैष्यतः प्रभोः॥ ४२४ ॥
व्यंतराः स्वर्णमाणिक्यरत्नाश्मभिरुदंशुभिः । आत्मानमिव भक्त्या तद्बबंधुर्वसुधातलम् ॥ ४२५ ॥
तत्राधोमुखवृंतानि[2] प्रोज्झतानीव भूतलात् । पंचवर्णानि पुष्पाणि सुगंधान्यकिरंश्च ते ॥ ४२६ ॥
तोरणानि विचक्रुश्च रत्नमाणिक्यकांचनैः । चतसृष्वपि ते दिक्षु तद्भूषाकंठिका इव ॥ ४२७ ॥
अन्योन्यदेहसंक्रांतप्रतिबिंबैर्बभासिरे । आलिंगिता इवालीभिस्तत्रोच्चैः शालभंजिकाः[3] ॥ ४२८ ॥

---

१ अंतरीपाणि द्वीपस्थानानि । २ अधोमुखानि वृंतानि पुष्पबन्धनस्थानानि येषां । ३ पुत्तलिका ।

स्निग्धेंद्रनीलघटिता मकरास्तेषु रेजिरे । प्रणश्यन्मकरकेतुत्यक्तकेतुभ्रमप्रदाः[1] ॥ ४२९ ॥
भगवत्केवलज्ञानकल्याणभवया मुदा । हंसा इव दिशां रेजुः श्वेतछत्राणि तत्र च ॥ ४३० ॥
ध्वजाश्च भ्रेजिरे तत्र भूदेव्यातिप्रमोदतः । उत्तंभिता इव भुजाः स्वयं नर्त्तितुकामया ॥ ४३१ ॥
तोरणानामधस्तेषां बलिपट्टेष्विवोच्चकैः । मंगलस्याष्टचिह्नानि स्वस्तिकादीनि जज्ञिरे ॥ ४३२ ॥
तदोपरितनं वप्रं विमानपतयो व्यधुः । रत्नमयं रत्नगिरेराहृतां मेखलामिव ॥ ४३३ ॥
नानामणिमयान्यासन् कपिशीर्षाणि तत्र च । अंशुभिः सूत्रयंति द्यां चित्रवर्णांशुकामिव ॥ ४३४ ॥
मध्यभागे पुनः स्वांगद्योतिभिरिव पिंडितैः । प्राकारं कनकैर्ज्योतिष्पतयस्तत्र चक्रिरे ॥ ४३५ ॥
रत्नैर्विरचयामासुः कपिशीर्षाणि तत्र च । सुरासुरवधूवक्त्ररत्नादर्शायितानि ते ॥ ४३६ ॥
रूप्यवप्रश्च भवनपतिभिस्तद्बहिष्कृतः । भक्तितो मंडलीभूत इव वैताढ्यपर्वतः ॥ ४३७ ॥
तस्योपरि विशालानि कपिशीर्षाणि जज्ञिरे । सौवर्णान्यंबुजानीव दिविषद्दीर्घिकाजले ॥ ४३८ ॥
भवनाधिपतिज्योतिष्पतिवैमानिकश्रियाम् । एकैककुंडलेनेव सा त्रिवप्रीकृता बभौ ॥ ४३९ ॥
माणिक्यतोरणास्तत्र पताकामालभारिणः । रश्मिजालैर्विरचितान्यपताका इवाभवन् ॥ ४४० ॥
प्रतिवप्रं च चत्वारि गोपुराणि चकाशिरे । चतुर्विधस्य धर्मस्य क्रीडावातायना[2] इव ॥ ४४१ ॥
इंद्रनीलमणिस्तंभायितधूमलतामुचः । द्वारे द्वारे धूपपद्योऽमुच्यंत व्यंतरामरैः ॥ ४४२ ॥
प्रतिद्वारं च चक्रे तैर्वापी कांचनपंकजा । समवसरणवप्र इव द्वारचतुष्कभृत् ॥ ४४३ ॥

१ प्रणश्यन् यो मकरकेतुः कामस्तेन त्यक्तो यः केतुस्तस्य भ्रमप्रदाः । २ क्रीडागवाक्षाः ।

तत्रान्यदपि यत्कृत्यं तत्सर्वं व्यंतरा व्यधुः । साधारणे हि समवसरणे तेऽधिकारिणः ॥ ४५८ ॥
चतुर्विधानां देवानामथ कोटीभिरावृतः । भगवान् समवसर्तुं प्रचचाल दिवामुखे ॥ ४५९ ॥
सहस्रपत्राण्यब्जानि सौवर्णानि तदा नव । विदधुर्निदधुश्चाग्रे क्रमेण स्वामिनः सुराः ॥ ४६० ॥
विदधे तेषु च स्वामी पादन्यासं द्वयोर्द्वयोः । पुरः संचारयामासुराशु शेषाणि नाकिनः ॥ ४६१ ॥
पूर्वद्वारेण समवसरणं प्राविशत्ततः । चक्रे च चैत्यवृक्षस्य जगन्नाथः प्रदक्षिणाम् ॥ ४६२ ॥
तीर्थं नत्वा प्राङ्मुखोऽथ जगन्मोहतमश्छिदे । स्वामी सिंहासनं भेजे पूर्वाचलमिवार्यमा ॥ ४६३ ॥
रत्नसिंहासनस्थानि दिक्ष्वन्यास्वपि तत्क्षणम् । भगवत्प्रतिबिंबानि व्यंतरास्त्रीणि चक्रिरे ॥ ४६४ ॥
देवाः प्रभोः सदृग्रूपमंगुष्ठस्यापि न क्षमाः । कर्त्तुं तादृंशि तान्यासन् पुनः स्वामिप्रभावतः ॥ ४६५ ॥
आविर्बभूवानुशिरःकायभामंडलं विभोः । खद्योतपोतवद्यस्य पुरो मार्त्तंडमंडलम् ॥ ४६६ ॥
प्रतिध्वानैश्चतस्रोपि दिशो मुखरयन् भृशम् । अंभोद इव गंभीरो दिवि दध्वान दुंदुभिः ॥ ४६७ ॥
भगवानेक एवायं स्वामीत्यूर्ध्वीकृतो भुजः । धर्मेणेव प्रभोरग्रे रेजे रत्नमयध्वजः ॥ ४६८ ॥
प्रविश्य पूर्वद्वारेण कृत्वा च त्रिःप्रदक्षिणाम् । तीर्थनाथं च तीर्थं च नत्वा प्राकार आदिमे ॥ ४६९ ॥
स्थानं विहाय साधूनां साध्वीनां च तदंतरे । पूर्वदक्षिणदिश्यूर्ध्वास्तस्थुर्वैमानिकस्त्रियः ॥ ४७० ॥ युग्मम् ॥
प्रविश्यापाच्यद्वारेण विधिना तेन नैर्ऋते । क्रमेणास्थुर्भवनेशज्योतिष्कव्यंतरस्त्रियः ॥ ४७१ ॥
प्रविश्य प्रत्यग्द्वारात्प्राग्विधिपूर्वं मरुद्दिशि । अतिष्ठन् भवनपतिज्योतिष्कव्यंतराः सुराः ॥ ४७२ ॥

१ पतङ्गशिशुवत् । २ अपाच्यद्वारेण दक्षिणद्वारेण । ३ वायुदिशि ।

प्रविश्योदीच्यद्वारेण तेनैव विधिना क्रमात् । ऐशान्यां कल्पदेवाश्च नरा नार्योऽवतस्थिरे ॥४७३॥
तत्रादावागतोऽल्पर्द्धिरागच्छंतं महर्द्धिकम् । नमतिस्मागतं तु प्राग्नमन्नेव जगाम च ॥ ४७४ ॥
नियंत्रणा तत्र नैव विकथा न च काचन । विरोधिनामपि मिथो न मात्सर्यं भयं न च ॥ ४७५ ॥
द्वितीयस्य तु वप्रस्य तिर्यंचस्तस्थुरंतरे । वाहनानि तृतीयस्य प्राकारस्य तु मध्यतः ॥ ४७६ ॥
प्राकारस्य तृतीयस्य बाह्यदेशेऽभवन् पुनः । विशंतः केपि निर्यांतः केपि तिर्यङ्नरामराः ॥ ४७७ ॥
अथ सौधर्मकल्पेंद्रो नमस्कृत्य कृतांजलिः । रोमांचितो जगन्नाथमिति स्तोतुं प्रचक्रमे ॥ ४७८ ॥
स्वामिन् क्व धीदरिद्रो[1]ऽहं क्व च त्वं गुणपर्वतः । अभिष्टोष्ये तथापि त्वां भक्त्यातिमुखरीकृतः[2] ॥४७९॥
अनंतैर्दर्शनज्ञानवीर्यानंदैर्जगत्पते । रत्नै रत्नाकर इव त्वमिहैको विराजसे ॥ ४८० ॥
देवेह भरतक्षेत्रे चिरं नष्टस्य सर्वथा । धर्मस्यासि प्ररोहाय बीजमेकं तरोरिव ॥ ४८१ ॥
अनुत्तरसुराणां त्वं तत्रस्थानामिह स्थितः । वेत्सि छिनत्सि संदेहं न माहात्म्यावधिस्तव ॥ ४८२ ॥
फलं त्वद्भक्तिलेशस्य निवासः स्वर्गभूमिषु । यत्सुराणां समग्राणां महर्द्धिद्युतिभास्वताम् ॥ ४८३ ॥
देव त्वद्भक्तिहीनानां तपांस्यतिमहांत्यपि । अबोद्धृणा[3]मिव ग्रंथाभ्यासः क्लेशाय केवलम् ॥ ४८४ ॥
यस्त्वां स्तवीति यो द्वेष्टि समस्त्वमुभयोस्तयोः । शुभाशुभं फलं किं तु भिन्नं चित्रीयते[4] हि नः ॥४८५॥
द्युश्रिया[5]पि न तोषो मे नाथ नाथाम्यदस्ततः । भगवन् भूयसी भूयात्त्वयि भक्तिर्ममाक्षया ॥ ४८६ ॥
इत्यभिष्टुत्य नत्वा च निषसाद कृतांजलिः । नारीनरनरदेवदेवानामग्रतो हरिः ॥ ४८७ ॥

---

१ धिया बुद्ध्या दरिद्रः । २ अतिवाचालीकृतः । ३ अबोधकाना । ४ आश्चर्यं करोति । ५ स्वर्गलक्ष्म्या ।

इतोऽपि च विनीतायां विनीतो भरतेश्वरः । आजगाम नमस्कर्तुं मरुदेवां दिवामुखे ॥ ४८८ ॥
तनूजविरहोद्भूतैरश्रांतैरस्रवारिभिः[1] । जातनीलिकया[2] लुप्तलोचनाब्जां पितामहीम् ॥ ४८९ ॥
ज्येष्ठपौत्रो नमत्येष देवि त्वत्पादपंकजे । स्वयं विज्ञपयन्नेवं भरतः प्रणनाम ताम् ॥ ४९० ॥ युग्मम् ॥
स्वामिनी मरुदेवापि भरतायाशिषं ददौ । हृद्यमांतीं शुचमिव गिरमित्युज्जगार च ॥ ४९१ ॥
मां त्वां महीं प्रजां लक्ष्मीं विहाय तृणवत्तदा । एकाकी गतवान् वत्सो दुर्मेरा[3] मरुदेव्यहो ॥ ४९२ ॥
सूनोश्चंद्रातपच्छायमातपत्रं क्व मूर्द्धनि । सर्वांगसंतापकरः क्वेदानीं तपनातपः ॥ ४९३ ॥
सलीलगतिभिर्यानैर्यानं हस्त्यादिभिः क्व तत् । वत्सस्य पादचारित्वं क्वेदानीं पथिकोचितम् ॥ ४९४ ॥
क्व तद्वारवधूत्क्षिप्तचारुचामरवीजनम् । मत्सूनोः क्वाधुना दंशमशकाद्यैरुपद्रवः ॥ ४९५ ॥
क्व तद्देवसमानीतदिव्याहारोपजीवनम् । क्व भिक्षाभोजनं तस्याभोजनं चापि संप्रति ॥ ४९६ ॥
रत्नसिंहासनोत्संगे महर्द्धि क्व तदासनम् । मत्सूनोः खड्गिन[4] इव क्व निरासनताऽधुना ॥ ४९७ ॥
आरक्षैरातमरक्षैश्च रक्षिते क्व पुरे स्थितिः । सूनोः क्व वासः सिंहाहिदुःश्वापदपदे वने ॥ ४९८ ॥
क्व तद्दिव्यांगनागीतं कर्णामृतरसायनम् । सूनोः क्वोन्मत्तफेरंड[5]फूत्काराः कर्णसूचयः ॥ ४९९ ॥
अहोकष्टमहोकष्टं यन्मे सूनुस्तपात्यये । पद्मखंड इव मृदुः सहते वारिविद्रवम्[6] ॥ ५०० ॥
हिमर्त्तौ हिमसंपातसंक्लेशविवशां दशाम् । अरण्ये मालतीस्तंभ इव याति निरंतरम् ॥ ५०१ ॥

१ अश्रुजलैः । २ नीलिका नेत्ररोगविशेषः । ३ दुःखेन म्रियते सा दुर्मेरा । ४ गण्डकाख्यपशोः । ५ फेरण्डाः सर्पा. । ६ जलोपद्रव ।

यथोचितमथो दत्त्वा पुष्कलं पारितोषिकम् । विससर्ज नरेन्द्रस्तो मरुदेवामुवाच च ॥ ५१७ ॥
देवि त्वं सर्वदापीदमादिक्षः करुणाक्षरम् । भिक्षाहारो यदेकाकी वत्सो मे दुःखभाजनम् ॥ ५१८ ॥
त्रैलोक्यस्वामिताभाजः स्वसूनोस्तस्य संप्रति । पश्य संपदमित्युक्त्वा रोहयामास तां गजे ॥ ५१९ ॥
सुवर्णवज्रमाणिक्यभूषणैस्तुरगैर्गजैः । पत्तिभिः स्यंदनैर्मूर्त्तश्रीमयैः[1] सोऽचलत्ततः ॥ ५२० ॥
सैन्यैर्भूषणभाःपुंजकृतैर्जंगमतोरणैः । गच्छन् दूरादपि नृपोऽपश्यद्रत्नपुरं पुरः ॥ ५२१ ॥
मरुदेवामथावादीद्भरतः परतो ह्यदः । प्रभो समवसरणं देवि देवैर्विनिर्मितम् ॥ ५२२ ॥
अयं जयजयारावतुमुलस्त्रिदिवौकसाम् । श्रूयते तातपादाब्जसेवोत्सवमुपेयुषाम् ॥ ५२३ ॥
गंभीरमधुरं मातर्दिव्ययं दुंदुभिर्नदन् । तनोति हृदयानंदं वैतालिक इव प्रभोः ॥ ५२४ ॥
स्वामिपादाब्जवंदारुवृंदारकविमानभूः[2] । अनणुः[3] किंकिणीनादः श्रवणातिथिरेष[4] नः ॥ ५२५ ॥
स्वामिदर्शनहृष्टानां क्ष्वेडानादो[5] दिवौकसाम् । स्तनितं स्तनयित्नूनामिवैष श्रूयते दिवि ॥ ५२६ ॥
गंधर्वाणामियं गीतिर्ग्राम[6]रागपवित्रिता । स्वामिवाचो भुजिष्येव[7] पुष्यत्यानंदमद्य नः ॥ ५२७ ॥
शृण्वन्त्यास्ततो देव्या मरुदेव्या व्यलीयत । आनंदाश्रुपयःपूरैः पंकवन्नीलिका दृशः ॥ ५२८ ॥
साऽपश्यत्तीर्थकृल्लक्ष्मीं सूनोरतिशयान्विताम् । तस्यास्तद्दर्शनानंदात्तन्मयत्वमजायत ॥ ५२९ ॥
सारुह्य क्षपकश्रेणिमपूर्वकरणक्रमात् । क्षीणाष्टकर्मा युगपत्केवलज्ञानमासदत् ॥ ५३० ॥

---

१ मूर्त्तिमल्लक्ष्मीमयै. । २ स्वामिचरणकमलवन्दनकरदेवविमानजन्मा । ३ महान् । ४ कर्णगोचरः । ५ सिंहनादः । ६ ग्रामाः स्वरभेदाः । ७ भुजिष्या दासी ।

करिस्कंधाधिरूढैव स्वामिनी मरुदेव्यथ । अंतकृत्केवलित्वेन प्रपेदे पदमव्ययम् ॥ ५३१ ॥
एतस्यामवसर्पिण्यां सिद्धोऽसौ प्रथमस्ततः । सत्कृत्य तद्वपुः क्षीरनीरधौ निदधेऽमरैः ॥ ५३२ ॥
तदादि च प्रववृते लोके मृतकपूजनम् । यत्कुर्वंति महांतो हि तदाचाराय कल्पते ॥ ५३३ ॥
ततो विज्ञाततन्मोक्षो हर्षशुग्भ्यां समं नृपः । अभ्रच्छायार्कतापाभ्यां शरत्काल इवानशे ॥ ५३४ ॥
संत्यज्य राज्यचिह्नानि पदातिः सपरिछदः । उदग्द्वारेण समवसरणं प्रविवेश सः ॥ ५३५ ॥
चतुर्भिर्देवनिकायैः स्वामी परिवृतस्तदा । ददृशे भरतेशेन दृक्चकोरनिशाकरः ॥ ५३६ ॥
त्रिश्च प्रदक्षिणीकृत्य भगवंतं प्रणम्य च । मूर्ध्नि बद्धांजलिः स्तोतुमिति चक्री प्रचक्रमे ॥ ५३७ ॥
जयाखिलजगन्नाथ जय विश्वाभयप्रद । जय प्रथमतीर्थेश जय संसारतारण ॥ ५३८ ॥
अद्यावसर्पिणीलोकपद्माकरदिवाकर । त्वयि दृष्टे प्रभातं मे प्रनष्टतमसोऽभवत् ॥ ५३९ ॥
भव्यजीवमनोवारिनिर्मलीकारकर्मणि । वाणी जयति ते नाथ कतकक्षोदसोदरा ॥ ५४० ॥
तेषां दूरे न लोकाग्रं कारुण्यक्षीरसागर । समारोहंति ये नाथ त्वच्छासनमहारथम् ॥ ५४१ ॥
लोकाग्रतोपि संसारमग्रिमं देव मन्महे । निष्कारणजगद्बंधुर्यत्र साक्षात्त्वमीक्ष्यसे ॥ ५४२ ॥
त्वद्दर्शनमहानंदस्यंदनिःष्यंदलोचनैः । स्वामिन् मोक्षसुखास्वादः संसारेप्यनुभूयते ॥ ५४३ ॥
रागद्वेषकषायाद्यै रुद्धं जगदरातिभिः । इदमुद्वेष्ट्यते नाथ त्वयैवाभयसत्रिणा ॥ ५४४ ॥
स्वयं ज्ञापयसे तत्वं मार्गं दर्शयसि स्वयम् । स्वयं च त्रायसे विश्वं त्वत्तो नाथामि नाथ किम् ॥ ५४५ ॥

---

१ हर्षशोकाभ्या । २ लोकाग्र मोक्ष । ३ त्वद्दर्शनमहानन्दनिर्झरानिश्चलनेत्रैः ।

नानावस्कंदसंग्रामहतग्रामभुवो मिथः । मिथीभूयेह तिष्ठंति राजानस्तव पर्षदि ॥ ५४६ ॥
त्वत्पर्षद्यमायातः करटी करटस्थलीम् । करेण केशरिकरं कृष्ट्वा कंडूयते मुहुः ॥ ५४७ ॥
इतश्च महिषमिव महिषोऽयं मुहुर्मुहुः । स्नेहतो जिह्वया मार्ष्टि हेषमाणमिमं हयम् ॥ ५४८ ॥
लीलालोलितलांगूल उत्कर्णो नमिताननः । घ्राणेन व्याघ्रवदनं जिघ्रत्ययमितो मृगः ॥ ५४९ ॥
पार्श्वयोरग्रतः पश्चाद्वलंतं निजपोतवत् । अयं तरुणमार्जारः समाश्लिष्यति मूषिकाम् ॥ ५५० ॥
अयं च निर्भयो भोगं कुंडलीकृत्य कुंडली । अदभ्रबभ्रोरभ्यर्णे निषीदति वयस्यवत् ॥ ५५१ ॥
देव ये केचिदन्येपि जीवाः शाश्वतवैरिणः । निर्वैरास्तेऽत्र तिष्ठंति त्वत्प्रभावोऽसमो ह्ययम् ॥ ५५२ ॥
इति स्तुत्वा जगन्नाथमपक्रम्याश्रितक्रमः । निषसाद महीनाथो ह्युसन्नाथस्य पृष्ठतः ॥ ५५३ ॥
क्षेत्रे योजनमात्रेऽपि सत्वानां कोटिकोटयः । ममुस्तस्मिन् निराबाधं तीर्थनाथप्रभावतः ॥ ५५४ ॥
प्रभुर्योजनगामिन्या सर्वभाषास्पृशा गिरा । पंचत्रिंशदतिशयजुषेमां देशनां व्यधात् ॥ ५५५ ॥
आधिव्याधिजरामृत्युज्वालाशतसमाकुलः । प्रदीप्तांगारकल्पोऽयं संसारः सर्वदेहिनाम् ॥ ५५६ ॥
न युज्यते तद्विदुषः प्रमादोऽत्र मनागपि । कः प्रमाद्यति बालोऽपि निशोल्लंघ्ये मरुस्थले ॥ ५५७ ॥
संसाराब्धाविहानेकयोन्यावर्त्ताकुलेऽटताम् । दुर्लभं मानुषं जन्म महारत्नमिवोत्तमम् ॥ ५५८ ॥
परलोकसाधनेन मानुष्यमपि देहिनाम् । पादपो दोहदेनेव सफलीभवति ध्रुवम् ॥ ५५९ ॥

---

१ नानाविधाक्रमणसंग्रामहतग्रामभुवः । २ करटी गजः । ३ शब्द कुर्वाण । ४ कुण्डलीकृत्य कुण्डलाकार कृत्वा । ५ कुण्डली सर्पः । ६ अदभ्रबभ्रोर्महानकुलस्य । ७ पञ्चत्रिंशदतिशयसेविन्या । ८ अनेकयोनिरूपावर्त्तंगकुले ।

आपातमात्रमधुरा परिणामेऽतिदारुणाः । शठवाच इवात्यंतं विषया विश्ववंचकाः ॥ ५६० ॥
पदार्थानामशेषाणां संसारोदरवर्तिनाम् । संयोगा विप्रयोगांताः पतनांता इवोच्छ्रयाः[1] ॥ ५६१ ॥
आयुर्धनं यौवनं च स्पर्द्धयेव परस्परम् । सत्वरं गत्वराण्येव[2] संसारेऽस्मिन् शरीरिणाम् ॥ ५६२ ॥
संसारस्यास्य गतिषु चतसृष्वपि जातुचित् । नास्त्येव सुखलेशोऽपि स्वादु नीरं मराविव ॥ ५६३ ॥
तथाहि क्षेत्रदोषेण परमाधार्मिकैरपि । मिथश्चाक्लिश्यमानानां नारकाणां कुतः सुखम् ॥ ५६४ ॥
शीतवातातपांभोभिर्वधबंधक्षुदादिभिः । विविधं बाध्यमानानां तिरश्चामपि किं सुखम् ॥ ५६५ ॥
गर्भवासजनिव्याधिजरादारिद्र्यमृत्युजैः । क्रोडीकृतानाम्[3]असुखैर्मनुष्याणां कुतः सुखम् ॥ ५६६ ॥
अन्योन्यमत्सरामर्षकलहच्यवनासुखैः । सुखलेशोपि नैवास्ति कदाचिद्द्युसदामपि ॥ ५६७ ॥
अज्ञानाज्जन्मिनो भूयो भूयः संसारसन्मुखं । तथापि परिसर्पंति नीचाभिमुखमंबुवत् ॥ ५६८ ॥
तद्भव्याश्चेतनावंतो निजेनानेन जन्मना । मापोषयत संसारं दुग्धेनेव भुजंगमम् ॥ ५६९ ॥
संसारवासजं दुःखं विचार्य तदनेकधा । सर्वात्मना हि मोक्षाय यतध्वं हे विवेकिनः ॥ ५७० ॥
गर्भवासभवं दुःखं नरकासुखसंनिभम् । संसारवन्न मोक्षेऽस्ति जीवानां हंत जातुचित् ॥ ५७१ ॥
घटीमध्याकृष्यमाणनारकार्तिसहोदरा[4] । नेह प्रसवजन्मापि जायते जातु वेदना ॥ ५७२ ॥
बहिरंतःपरिक्षिप्तशल्यतुल्या भवंति च । नाधयो व्याधयो नापि तत्र बाधानिबंधनम् ॥ ५७३ ॥

---

१ उच्छ्रया अत्युन्नतप्रदेशाः । २ नश्वराणि । ३ अङ्कस्थापिताना । ४ कुम्भीमध्यात् आकृष्यमाणस्य नारकस्य पीडासदृशी ।

अग्रदूती कृतांतस्य तेजःसर्वस्वतस्करी । पराधीनत्वजननी न जरा तत्र सर्वथा ॥ ५७४ ॥
संजायते नारकिकतिर्यक्नृद्युसदामिव । न तत्र मरणं भूयो भवभ्रमणकारणम् ॥ ५७५ ॥
किंतु तत्र महानंदं सुखमद्वैतमव्ययम् । रूपं च शाश्वतं ज्योतिः केवलालोकभास्करम् ॥ ५७६ ॥
स च संप्राप्यते मोक्षः शीलयद्भिर्निरंतरम् । ज्ञानदर्शनचारित्ररत्नत्रितयमुज्ज्वलम् ॥ ५७७ ॥
तत्र जीवादितत्वानां संक्षेपाद्विस्तरादपि । यथावदवबोधो यः सम्यक्ज्ञानं तदुच्यते ॥ ५७८ ॥
मतिश्रुतावधि मनःपर्यायैः केवलेन च । अमीभिः सान्वयैर्भेदैस्तत्तु पंचविधं मतम् ॥ ५७९ ॥
अवग्रहादिभिर्भिन्नं बाह्याद्यैरितरैरपि । इंद्रियानिंद्रियभवं मतिज्ञानमुदीरितम् ॥ ५८० ॥
विस्तृतं बहुधा पूर्वैरंगोपांगैः प्रकीर्णकैः । स्याच्छब्दलांछितं ज्ञेयं श्रुतज्ञानमनेकधा ॥ ५८१ ॥
देवनैरयिकाणां स्यादवधिर्भवसंभवः । षड्विकल्पस्तु शेषाणां क्षयोपशमलक्षणः ॥ ५८२ ॥
ऋजुर्विपुल इत्येवं स्यान्मनःपर्ययो द्विधा । विशुद्ध्यप्रतिपाताभ्यां तद्विशेषोऽवगम्यताम् ॥ ५८३ ॥
अशेषद्रव्यपर्यायविषयं विश्वलोचनम् । अनंतमेकमत्यक्षं केवलज्ञानमुच्यते ॥ ५८४ ॥
रुचिः श्रुतोक्ततत्वेषु सम्यक्श्रद्धानमुच्यते । जायते तन्निसर्गेण गुरोरधिगमेन वा ॥ ५८५ ॥
तथाह्यनाद्यंतभवावर्त्तवर्त्तिषु देहिषु । ज्ञानदृष्ट्यावृतिवेद्यांतरायाभिधकर्मणाम् ॥ ५८६ ॥
सागरोपमकोटीनां कोट्यस्त्रिंशत्परा स्थितिः । विंशतिर्गोत्रनाम्नोश्च मोहनीयस्य सप्ततिः ॥ ५८७ ॥

॥ युग्मम् ॥

---

१ पराधीनत्वोत्पादनी । २ देवनारकाणा । ३ आगमोक्ततत्वेषु ।

ततो गिरिसरिद्ग्रावघोलनान्यायतः स्वयम् । क्षीयंते सर्वकर्माणि फलानुभवतः क्रमात् ॥ ५८८ ॥
एकोनत्रिंशदेकोनविंशत्येकोनसप्ततिः । सागराणां कोटिकोटीः स्थितिमुन्मूल्य कर्मणाम् ॥ ५८९ ॥
देशोनैकावशिष्टाब्धिकोटिकोटौ तु जन्मिनः । यथा प्रवृत्तिकरणाद्ग्रंथिदेशं समियूति ॥ ५९० ॥
॥ युग्मम् ॥
रागद्वेषपरीणामो दुर्भेदो ग्रंथिरुच्यते । दुरुच्छेदो दृढतरः काष्ठादेरिव सर्वदा ॥ ५९१ ॥
तीराभ्यर्णान्महापोता इव वातसमाहताः । रागादिप्रेरिताः केपि व्यावर्त्तंते ततः पुनः ॥ ५९२ ॥
तत्रैव तत्परीणामविशेषादासतेऽपरे । स्खलस्खलितगमनान्यंभांसि सरितामिव ॥ ५९३ ॥
अपरे ये पुनर्भव्या भाविभद्राः शरीरिणः । आविष्कृत्य परं वीर्यमपूर्वकरणेन ते ॥ ५९४ ॥
अतिक्रामंति सहसा तं ग्रंथिं दुरतिक्रमम् । अतिक्रांतमहाध्वानो घट्टभूमिमिवाध्वगाः ॥ ५९५ ॥
॥ युग्मम् ॥
अथानिवृत्तिकरणादंतरकरणे कृते । मिथ्यात्वं विरलीकृत्य चतुर्गतिकजंतवः ॥ ५९६ ॥
आंतर्मुहूर्त्तिकं सम्यग्दर्शनं प्राप्नुवंति यत् । निसर्गहेतुकमिदं सम्यक् श्रद्धानमुच्यते ॥ ५९७ ॥ युग्मम् ॥
गुरूपदेशमालंब्य भव्यानामिह देहिनाम् । सम्यक्श्रद्धानं तु यत्तद्भवेदधिगमोद्भवम् ॥ ५९८ ॥
तच्च स्यादौपशमिकं सास्वादनमथापरम् । क्षायोपशमिकं वेद्यं क्षायिकं चेति पंचधा ॥ ५९९ ॥
तत्रौपशमिकं भिन्नकर्मग्रंथेः शरीरिणः । सम्यक्त्वलाभे प्रथमेंतर्मुहूर्त्तं प्रजायते ॥ ६०० ॥

---

१ समायान्ति । २ भतिष्यत्कल्याणाः ।

तथोपशांतमोहस्योपशमश्रेणियोगतः । मोहोपशमजमौपशमिकं तु द्वितीयकम् ॥ ६०१ ॥
त्यक्तसम्यक्त्वभावस्य मिथ्यात्वाभिमुखस्य च । तथाभ्युदीर्णानंतानुबंधिकस्य शरीरिणः ॥ ६०२ ॥
यः सम्यक्त्वपरीणाम उत्कर्षेण षडावलिः । जघन्येनैकसमयस्तत्सास्वादनमीरितम् ॥ ६०३ ॥ युग्मम् ॥
अथ तृतीयं मिथ्यात्वमोहक्षयशमोद्भवम् । सम्यक्त्वपुद्गलोदयपरिणामवतो भवेत् ॥ ६०४ ॥
वेदकं नाम सम्यक्त्वं क्षपकश्रेणिमीयुषः । अनंतानुबंधिनां तु क्षये जाते शरीरिणः ॥ ६०५ ॥
मिथ्यात्वस्याथ मिश्रस्य सम्यग्जाते परिक्षये । क्षायीकसन्मुखीनस्य सम्यक्त्वांत्यांशभोगिनः ॥ ६०६ ॥
शुभभावस्य प्रक्षीणसप्तकस्य शरीरिणः । सम्यक्त्वं क्षायिकं नाम पंचमं जायते पुनः ॥ ६०७ ॥
सम्यग्दर्शनमेतच्च गुणतस्त्रिविधं भवेत् । रोचकं दीपकं चैव कारकं चेति नामतः ६०८ ॥
तत्र श्रुतोक्ततत्वेषु हेतूदाहरणैर्विना । दृढा या प्रत्ययोत्पत्तिस्तद्रोचकमुदीरितम् ॥ ६०९ ॥
दीपकं तद्यदन्येषामपि सम्यक्त्वदीपकम् । कारकं संयमतपःप्रभृतीनां तु कारकम् ॥ ६१० ॥
शमसंवेगनिर्वेदानुकंपास्तिक्यलक्षणैः । लक्षणैः पंचभिः सम्यक् सम्यक्त्वं तत्तु लक्ष्यते ॥ ६११ ॥
अनंतानुबंधिकषायाणामनुदयः शमः । स प्रकृत्या कषायाणां विपाकेक्षणतोऽपि वा ॥ ६१२ ॥
ध्यायतः कर्मविपाकं संसारासारतामपि । यत्स्याद्विषयवैराग्यं स संवेग इतीरितः ॥ ६१३ ॥
संसारवासः कारैव बंधनान्येव बंधवः । स संवेगस्य चिंतेयं या निर्वेदः स उच्यते ॥ ६१४ ॥
एकेंद्रियप्रभृतीनां सर्वेषामपि देहिनाम् । भवाब्धौ मज्जतां क्लेशं पश्यतो हृदयार्द्रता ॥ ६१५ ॥

---

१ विश्वासोत्पत्तिः । २ कषायपरिणामदर्शनात् ।

मन्मनत्वं काहलत्वं मूकत्वं मुखरोगिताम् । वीक्ष्याऽसत्यफलं कन्यालीकाद्यसत्यमुत्सृजेत् ॥ ६३० ॥
कन्यागोभूम्यलीकानि न्यासापहरणं तथा । कूटसाक्ष्यं च पंचेति स्थूलासत्यानि संत्यजेत् ॥ ६३१ ॥
दौर्भाग्यं प्रेष्यतां दास्यमंगच्छेदं दरिद्रताम् । अदत्तात्तफलं ज्ञात्वा स्थूलस्तेयं विवर्जयेत् ॥ ६३२ ॥
षंढत्वमिंद्रियच्छेदं वीक्ष्याब्रह्मफलं सुधीः । भवेत्स्वदारसंतुष्टोऽन्यदारान्वा विवर्जयेत् ॥ ६३३ ॥
असंतोषमविश्वासमारंभं दुःखकारणम् । मत्वा मूर्च्छाफलं कुर्यात्परिग्रहनियंत्रणम् ॥ ६३४ ॥
दशस्वपि कृता दिक्षु यत्र सीमा न लंघ्यते । ख्यातं दिग्विरतिरिति प्रथमं तद्गुणव्रतम् ॥ ६३५ ॥
भोगोपभोगयोः संख्या शक्त्या यत्र विधीयते । भोगोपभोगमानं तद्द्वितीयीकं गुणव्रतम् ॥ ६३६ ॥
आर्त्तं रौद्रमपध्यानं पापकर्मोपदेशिता । हिंसोपकारदानं च प्रमादाचरणं तथा ॥ ६३७ ॥
शरीराद्यर्थदंडस्य प्रतिपक्षतया स्थितः । योनर्थदंडतस्त्यागस्तृतीयं तु गुणव्रतम् ॥ ६३८ ॥ युग्मम् ॥
त्यक्तार्त्तरौद्रध्यानस्य त्यक्तसावद्यकर्मणः । मुहूर्त्तं समतायातं विदुः सामायिकव्रतम् ॥ ६३९ ॥
दिग्व्रते परिमाणं यत्तस्य संक्षेपणं पुनः । दिनरात्रौ च देशावकाशिकव्रतमुच्यते ॥ ६४० ॥
चतुष्पर्व्यां चतुर्थ्यादि कुव्यापारनिषेधनम् । ब्रह्मचर्यः क्रियास्नानादित्यागः पोषधव्रतम् ॥ ६४१ ॥
दानं चतुर्विधाहारपात्राच्छादनसद्मनाम् । अतिथिभ्योऽतिथिसंविभागव्रतमुदीरितम् ॥ ६४२ ॥
रत्नत्रयमिदं सम्यग्यतिभिः श्रावकैरपि । उपासनीयं सततं निर्वाणप्राप्तिहेतवे ॥ ६४३ ॥
आकर्ण्य देशनामेवमुत्थाय भरतात्मजः । ऋषभस्वामिनं नत्वर्षभसेनो व्यजिज्ञपत् ॥ ६४४ ॥

---

१ काहलो मुखध्वनिरोगविशेषः । २ समतायुक्त । ३ उपवासादि । ४ आच्छादन वस्त्र सद्म वसतिः । ५ मोक्षप्राप्तिहेतवे ।

स्वामिन्निह भवारण्ये कषायदवदारुणे । नव्यांबुद इवावर्षस्तत्वामृतमनुत्तरम् ॥ ६४५ ॥
तरंड इव मज्जद्भिः प्रपेव च पिपासितैः । कृशानुरिव शीतार्त्तैस्तापार्त्तैरिव पादपः ॥ ६४६ ॥
ध्वांतमग्नैर्दीप इव निधिर्दौस्थ्यस्थितैरिव । विषार्दितैरिव सुधा रोगितैरिव भेषजम् ॥ ६४७ ॥
विक्रांतद्विषदाक्रांतैरिव दुर्गं जगत्पते । भवभीतैरसि प्राप्तो रक्ष रक्ष दयानिधे ॥ ६४८ ॥
पितृभिर्भ्रातृभिर्भ्रातुःपुत्रैरन्यैश्च बंधुभिः । अनाप्तैरिव पर्याप्तं भवभ्रमणहेतुभिः ॥ ६४९ ॥
जगच्छरण्य शरणं संसारार्णवतारण । त्वामेवाश्रितवानस्मि दीक्षां देहि प्रसीद मे ॥ ६५० ॥
उक्त्वेति भरतस्यान्यैरेकोनैः पंचभिः शतैः । पुत्रैः पौत्रसप्तशत्या चान्वितो व्रतमाददे ॥ ६५१ ॥
भर्तुः केवलमहिमां क्रियमाणां सुरासुरैः । दृष्ट्वा मरीचिर्भरततनयो व्रतमग्रहीत् ॥ ६५२ ॥
विसृष्टा भरतेशेन ब्राह्म्यपि व्रतमग्रहीत् । गुरूपदेशः साक्ष्येव प्रायेण लघुकर्मणाम् ॥ ६५३ ॥
विमुक्ता बाहुबलिना जिघृक्षुः सुंदरी व्रतम् । भरतेन निषिद्धा तु श्राविका प्रथमाऽभवत् ॥ ६५४ ॥
भरतः स्वामिपादांते श्रावकत्वमशिश्रियत् । नहि भोगफले कर्मण्यभुक्ते भवति व्रतम् ॥ ६५५ ॥
नरतिर्यक्सुरेष्वेके तदानीं जगृहुर्व्रतम् । श्रावकव्रतमन्ये तु सम्यक्त्वमपरे पुनः ॥ ६५६ ॥
ते च कच्छमहाकच्छवर्जं राजन्यतापसाः । आगत्य स्वामिनः पार्श्वे दीक्षामाददिरे मुदा ॥ ६५७ ॥
साधवः पुंडरीकाद्याः साध्व्यो ब्राह्मीपुरस्कृताः । श्रावका भरताद्यास्तु श्राविकाः सुंदरीमुखाः ॥ ६५८ ॥ युग्मम् ॥
चतुर्विधस्य संघस्य व्यवस्थेयं तदाभवत् । अद्यापि वर्त्तते सेयं धर्मस्य परमं गृहम् ॥ ६५९ ॥

१ दौस्थ्यस्थितैर्दैन्यास्थितैः ।

तदानीं चतुरशीतेर्गणभृन्नामकर्मणाम् । व्रतीनामृषभसेनप्रभृतीनां सुमेधसाम् ॥ ६६० ॥
उत्पादो विगमो ध्रौव्यमिति पुण्यां पदत्रयीम् । उद्दिदेश जगन्नाथः सर्ववाङ्मयमातृकाम् ॥ ६६१॥युग्मं॥
स चतुर्दशपूर्वाणि द्वादशांगानि ते क्रमात् । ततो विरचयामासुस्त्रिपद्यनुसारतः ॥ ६६२ ॥
अथादाय दिव्यचूर्णपूर्णं स्थालं पुरंदरः । देवैर्वृतो देवदेवपादांतः समुपस्थितः ॥ ६६३ ॥
अथोत्थाय गणभृतां चूर्णक्षेपं यथाक्रमम् । कुर्वाणः सूत्रेणार्थेन तथा तदुभयेन च ॥ ६६४ ॥
द्रव्यैर्गुणैः पर्यायैश्च नयैरपि जगत्पतिः । ददावनुयोगानुज्ञां गणानुज्ञामपि स्वयम् ॥ ६६५ ॥ युग्मं ॥
ततोऽमरा नरा नार्यो दुंदुभिध्वानपूर्वकम् । वासक्षेपं विदधिरे तेषामुपरि सर्वतः ॥ ६६६ ॥
तस्थुर्गणधरास्तेपि रचितांजलिसंपुटाः । स्वामिवाचं प्रतीच्छंतो मेघांभ इव पादपाः ॥ ६६७ ॥
मृगेंद्रासनमारुह्य पूर्ववत्पूर्वदिङ्मुखः । अनुशिष्टिमयीं स्वामी विदधे देशनां पुनः ॥ ६६८ ॥
देशनोद्दामवेलायाः स्वामिवारिधिजन्मनः । मर्यादायाः प्रतिरूपा तदाऽपूर्यत पौरुषी ॥ ६६९ ॥
अत्रांतरे च कलशैरखंडैर्निस्तुषोज्ज्वलैः । विनिर्मितचतुःप्रस्थीप्रमाणस्थालसंस्थितः ॥ ६७० ॥
दिव्यपाविहितैर्गंधैर्द्विगुणीकृतसौरभः । प्रधानपुरुषोत्क्षिप्तो भरतेश्वरकारितः ॥ ६७१ ॥
देवदुंदुभिनिर्घोषप्रतिघोषितदिङ्मुखः । अन्वीयमानः प्रोद्गीतमंगलैर्ललनाजनैः ॥ ६७२ ॥
पौरैः स्वामिप्रभावोत्थः पुण्यराशिरिवावृतः । पूर्वद्वारेण समवसरणे प्राविशद्बलिः ॥ ६७३ ॥ चतुर्भिः
कलापकं ।

---

१ उत्पादविगमध्रौव्यानुसारतः । २ प्रतिगृह्णन्तः । ३ अनुशिष्टी शिक्षा । ४ समुद्रवेलासदृशी ।

प्रभुं प्रदक्षिणीकृत्य सोक्षिप्यत बलिः पुरः । वसुं कल्याण[1]सस्यानामिव बीजमनुत्तमम् ॥ ६७४ ॥
अंतरिक्षान्निपततोऽन्तरालेऽपि समाददे । तस्यार्धममरैर्मेघपानीयमिव चातकैः ॥ ६७५ ॥
तस्य भूमिगतस्यार्धं जग्राह भरतेश्वरः । शेषं तु गोत्रिण इव विभज्य जगृहुर्जनाः ॥ ६७६ ॥
पूर्वोत्पन्नाः प्रणश्यंति रोगाः सर्वे नवाः पुनः । षण्मासान्नैव जायंते बलेस्तस्य प्रभावतः ॥ ६७७ ॥
अथोत्थायोत्तरद्वारवर्त्मना निर्ययौ प्रभुः । अन्वीयमानो देवेंद्रैः पद्मखंड इवालिभिः ॥ ६७८ ॥
रत्नमयस्वर्णमयवप्रयोरंतरस्थिते । व्यश्राम्यद्भगवान् देवछंदे ईशानदिक्स्थिते ॥ ६७९ ॥
तदानीमृषभसेनो गणभृन्मुख[2]मंडनम् । भगवत्पादपीठस्थो विदधे धर्मदेशनाम् ॥ ६८० ॥
स्वामिनः खेदविनोदः शिष्याणां गुणदीपना । उभयतः प्रत्ययश्च गणभृद्देशनागुणाः ॥ ६८१ ॥
तस्मिन् गणधरे धर्मदेशनाविरते सति । प्रणम्य स्वामिनः सर्वे स्थानं निजनिजं ययुः ॥ ६८२ ॥
तीर्थे तत्र समुत्पन्ने गोमुखो नाम गुह्यकः । वराक्षमाला[3]शालिभ्यां दोर्भ्यां दक्षिणपार्श्वयोः ॥ ६८३ ॥
मातुलिंग[4]पाशभृद्भ्यां वामदोर्भ्यां च शोभितः । हेमवर्णो गजरथः पार्श्वस्थोऽभूत्ततो विभोः ॥ ६८४ ॥ युग्मम्
नामतोऽप्रतिचक्रेति हेमाभा गरुडासना । वरप्रदेषुभृत्चक्रिपाशिभिर्दक्षिणैर्भुजैः ॥ ६८५ ॥
वामहस्तैर्धनुर्वज्रचक्रांकुशधरैर्युता । तत्तीर्थभूरभूत् पार्श्वे भर्तुः शासनदेवता ॥ ६८६ ॥ युग्मम् ।
ततो विहर्तुमन्यत्र जगाम भगवानपि । महर्षिभिः परिवृतो नक्षत्रैरिव चंद्रमाः ॥ ६८७ ॥

---

१ कल्याणरूपधान्यानां । २ गणधरमुखाभरणरूपः । ३ वराक्षमालाशालिभ्यां वरदानचिह्नाक्षमालाचिह्नशालिभ्यां । ४ मातुलिङ्गफल "बिजोरु" ति भाषाया प्रसिद्ध ।

गच्छतः स्वामिनोऽनूवन् नक्त्येव तरवो नताः । अधोमुखाः कंटकाश्च शकुनाश्च प्रदक्षिणाः ॥ ६८८ ॥
ऋत्विंद्रियार्थानुकूल्यं वायोरप्यनुकूलता । नर्तुर्जघन्यतोप्यासीत्पार्श्वे कोटिर्दिवौकसाम् ॥ ६८९ ॥
नवांतरोद्भुतकर्मच्छेदालोकनयादिव । नावर्द्धत कचाः श्मश्रुनखाश्च त्रिजगत्पतेः ॥ ६९० ॥
स्वाम्यगाद्यत्र नो तत्र वैरमारीत्यवृष्टयः । दुर्भिक्षमतिवृष्टिर्वा नये च स्वान्यचक्रजे ॥ ६९१ ॥

विश्वविस्मयकरैरिति प्रभुर्नाभिनूरतिशयैः समन्वितः ।
संसरजगदनुग्रहैकधीः क्ष्मामिमां विहरति स्म वायुवत् ॥ ६९२ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये प्रथमपर्वणि भगवद्दीक्षाछद्मस्थविहा-
रकेवलज्ञानसमवसरणव्यावर्णनो नाम तृतीय सर्ग ॥ ३ ॥

---

१ मारी रोगोपद्रवः ईतयः प्रसिद्धाः । २ स्वचक्रपरचक्रजाते भये ।

चक्रपूजोत्सवश्चक्रे पौरैरपि महर्द्धिभिः । पूजितैः पूज्यमानो हि केन केन न पूज्यते ॥ १३ ॥
तस्योपयोगमादित्सुश्चक्ररत्नस्य दिग्जयम् । स्नानागारं ययौ राजा मंगलस्नानहेतवे ॥ १४ ॥
विमुक्ताभरणश्रेणिः शुभ्रस्नानीय[1]वस्त्रभृत् । न्यपदत्प्राङ्मुखस्तत्र स्नानसिंहासने नृपः ॥ १५ ॥
सुरद्रुपुष्पनिर्यासमयैरिव सुगंधिभिः । सहस्रपाकप्रमुखैस्तैलैरभ्यंजि भूपतिः ॥ १६ ॥
संवाहनाभिर्मांसास्थित्वग्रोमसुखहेतुभिः । चतुर्विधाभिस्त्रिविधैर्मृदुमध्यदृढैः करैः ॥ १७ ॥
मर्दनीयामर्दनीयस्थानविज्ञाः कलाविदः । नृपं संवाहयामासुः संवाहकनरास्ततः ॥ १८ ॥ त्रिभिर्विशेषकम्

आदर्शमिव भूपालमम्लानद्युतिभाजनम् । सूक्ष्मेण दिव्यचूर्णेनोद्वर्त्तयामासुराशु ते ॥ १९ ॥
काश्चित्करोद्धृतस्वर्णपयस्कुंभा वरस्त्रियः । उन्नाले[2]नव्यनलिना इव लावण्यवापयः ॥ २० ॥
[3]स्त्यानीभूय पयांसीव गतान्याधारतामपाम् । राजतानंबुकलशान्बिभ्रत्यः काश्चिदंगनाः ॥ २१ ॥
लीलानीलोत्पलभ्रांतिदायिनश्चारुपाणिषु । इंद्रनीलपयस्कुंभान्दधानाः काश्चन स्त्रियः ॥ २२ ॥
नखरत्नप्रभाजालवर्द्धमानाधिकश्रियः । दिव्यरत्नमयान्कुंभान् बिभ्रत्यः सुभ्रुवोऽपराः ॥ २३ ॥
सुगंधिभिः पवित्रांबुधाराभिर्धरणीधवम् । क्रमेण स्नपयामासुर्जिनेंद्रमिव देवताः ॥ २४ ॥
कृतस्नानोऽथ भूपालः कृतदिव्यविलेपनः । वासोभिः शोभितः शुभ्रैः ककुब्भासैरिवाभितः ॥ २५ ॥
ललाटपट्टे मांगल्यं चांदनं तिलकं दधत् । यशोद्रुमस्याभिनवं प्ररोहंतमिवांकुरम् ॥ २६ ॥

---

१ स्नानीय स्नानोचित । २ ऊर्ध्वनालानि नव्यानि नवानि नलिनानि यासु ताः । ३ स्त्यानीभूय घनीभूय ।

मुक्तामयानलंकारान् स्वयशःपुंजनिर्मलान् । तारकाप्रकरांस्तारांस्तारापथ इवोद्वहन् ॥ २७ ॥
चंचन्मरीचिनिचयभ्रीभितोष्णमरीचिना । प्रासादः कलशेनेव किरीटेन विभूषितः ॥ २८ ॥
मुहुरुत्क्षिप्यमाणाभ्यां वारनारीकरांबुजैः । कर्णोत्तंसायमानाभ्यां चामराभ्यां विराजितः ॥ २९ ॥
स्वर्णकुंभभृता श्वेतातपत्रेणोपशोभितः । श्रीसद्मपद्मभृत्पद्महृदेन हिमवानिव ॥ ३० ॥
सर्वदा संनिधानस्थैः प्रतीहारैरिवाश्रितः । भक्तैः षोडशभिर्यक्षसहस्रैः परिवारितः ॥ ३१ ॥
उत्तुंगकुंभशिखरस्थगितैकदिगाननम् । आरोहद्वासव इवैरावणं रत्नकुंजरम् ॥ ३२ ॥
स गर्जन्नूर्जितं जात्यकुंजरस्तत्क्षणादभूत् । उद्दाममदधाराभिर्धाराधर इवापरः ॥ ३३ ॥
उत्क्षिप्य पाणीन् कुर्वाणैर्दिवं पल्लवितामिव । युगपद्वंदिवृंदेन चक्रे जयजयारवः ॥ ३४ ॥
दुंदुभिस्ताड्यमानोऽथ नदन्नुच्चैर्दिशोऽपि हि । नादयामास मुखरगायनो गायनीरिव ॥ ३५ ॥
दूतीभूतानि निःशेषसैनिकाह्वानकर्मणि । प्रणेदुर्वर्यतूर्याणि मंगलान्यपराण्यपि ॥ ३६ ॥
गजैः सिंदूरभृत्कुंभैः सधातुभिरिवाद्रिभिः । अश्वैरनेकधाभूतरेवंताश्वभ्रमप्रदैः ॥ ३७ ॥
मनोरथैरिव निजैर्विशालैश्च महारथैः । पत्तिभिश्च महौजोभिः सिंहैरिव वशंवदैः ॥ ३८ ॥

---

१ गगनमार्गः । २ कर्णयोराभरणायमानाभ्या । ३ श्रीसद्मानि लक्ष्मीगृहाणि यानि पद्मानि तानि बिभर्तीति श्रीसद्मपद्मभृत् स चासौ पद्महृदस्तेन । ४ उच्चकुम्भशिखरेण आच्छादित एकदिङ्मुख येन सः । ५ धाराधरो मेघः । ६ मुख्यवाचालगायकः । ७ रेवन्तः सूर्याश्व । ८ महापराक्रमैः ।

प्रचचाल महीपालः पूर्वं पूर्वां दिशं प्रति । संव्यानमिव तन्वानः सैन्योत्थैः पांशुभिर्दिशाम् ॥३९॥ त्रिभिर्विशेषकम् ।

तत्सैन्याग्रेसरं यक्षसहस्राधिष्ठितं ततः । चक्ररत्नमभूद्दिवं भानोरिव नभश्चरम् ॥ ४० ॥
दंडरत्नधरो वाजिरत्नमारुह्य तत्परः । नाम्ना सुषेणः सेनानीरत्नं चक्रमिवाचलत् ॥ ४१ ॥
निःशेषशांतिकविधौ शांतमंत्र इवांगवान् । पुरोधारत्नमचलत्समं वसुमतीभुजा ॥ ४२ ॥
सैन्ये प्रत्याश्रयं दिव्यभोजनापादनक्षमम् । अचालीद्गृहरत्नं च सत्रशालेव जंगमा ॥ ४३ ॥
स्कंधावारादि निर्मातुं विश्व[3]कर्मेव सत्वरम् । अलं वर्धकिरत्नं च चचाल सह भूभुजा ॥ ४४ ॥
चचाल चर्मरत्नं च छत्रत्रयमिवाद्भुतम् । चक्रिणः सकलस्कंधावारविस्तारशक्तिमत् ॥ ४५ ॥
रत्ने च मणिकाकिण्यौ ध्वांतविध्वंसनक्षमे । सह प्रचेलतुर्भाभिः सूर्याचंद्रमसाविव ॥ ४६ ॥
ययौ सह नरेंद्रेण खड्गरत्नं च भासुरम् । सुरासुरवरास्त्राणामिव सारैर्विनिर्मितम् ॥ ४७ ॥
ततश्च सचमूचक्रश्चक्रभृद्भरतेश्वरः । प्रतीहारानुग इवागमच्चक्रानुगः पथि ॥ ४८ ॥
पवनेनानुकूलेनानुकूलैः शकुनैरपि । सर्वतो दिग्जयस्तस्याशंसि ज्यो[4]तिषिकैरिव ॥ ४९ ॥
विषमं सुसमीचक्रे सैन्यस्य पुरतो व्रजन् । सेनानीर्दंडरत्नेन मते[5]नेव कृषिक्षितिम् ॥ ५० ॥
रुरुचे पृतनोद्भूतरजोभिः कृतदुर्दिनम् । रथद्विपपताकाभिर्बलाकाभिरिवांबरम् ॥ ५१ ॥
अदृश्यमानपर्यंता सा चमूश्चक्रवर्त्तिनः । गंगालक्ष्मि द्वितीयेव सर्वत्राप्यस्खलद्गतिः ॥ ५२ ॥

१ संव्यानमुत्तरीयवस्त्र । २ अन्नशाला । ३ विश्वकर्मा देवशिल्पी । ४ ज्योतिर्विद्भिः । ५ मतेन हलाग्रेण ।

चीत्कृतैः स्यंदना वाहा हेषितैर्गर्जितैर्गजाः । अतत्वरन्निवान्योऽन्यं दिग्जयोत्सवकर्मणे ॥ ५३ ॥
अद्युतन् सादिनां कुंताः चमूत्खाते रजस्यपि । हसंत इव तच्छन्नान्दीधितीनुष्णदीधितेः ॥ ५४ ॥
आबद्धमुकुटै रेजे राजभी राजकुंजरः । भक्तिमद्भिर्वृतो गच्छन् शक्रः सामानिकैरिव ॥ ५५ ॥
गत्वा योजनपर्यंते तच्च चक्रमवास्थितम् । जज्ञे योजनमानं च तत्प्रयाणानुमानतः ॥ ५६ ॥
ततो योजनमानेन प्रयाणेन व्रजन्नृपः । गंगाया दक्षिणं कूलं प्रापत्कतिपयैर्दिनैः ॥ ५७ ॥
नृपोपि विपुलां गंगापुलिनोर्वीं निरंतरैः । विविधैः संकटीकुर्वन्नावासैर्विश्रमं व्यधात् ॥ ५८ ॥
क्षरत्करिमदांभोभिः पंकिला कूलमेदिनी । तदा मंदाकिनीनद्या प्रावृट्काल इवाभवत् ॥ ५९ ॥
जाह्नवीस्रोतसि स्वच्छे स्वच्छंदं जगृहुस्ततः । वारीणि वारणवरा वारिधौ वारिधा इव ॥ ६० ॥
अतिपारिप्लवत्वेनोत्प्लवमाना मुहुर्मुहुः । तत्र सस्नुस्तुरंगाश्च तरंगभ्रमदायिनः ॥ ६१ ॥
संप्रविष्टैः श्रमादंतर्गजाश्वमहिषोक्षभिः । जातनूतननक्रेव चक्रे विष्वक् सरिद्वरा ॥ ६२ ॥
अनुकूलयितुं कूलस्थितं नृपमिवांजसा । श्रमं गंगा हरच्चस्वास्तरंगोत्क्षिप्तसीकरैः ॥ ६३ ॥
महीभुजः सेव्यमाना महत्या सेनया तया । कृशीबभूव गंगापि सद्यः कीर्तिरिव द्विषाम् ॥ ६४ ॥
तत्सैन्यगजराजानामयत्नालानतां ययुः । भागीरथीतीररुहो देवदारुमहीरुहः ॥ ६५ ॥
अश्वत्थशल्लकीकार्णिकारोडुंबरपल्लवान् । लुलुवुः पर्शुभिर्हस्तिकृते हस्तिपकाः क्षणात् ॥ ६६ ॥

---

१ भल्लाः । २ तटमेदिनी । ३ उत्तमगजाः । ४ हस्तितुरगमहिषवृषै.। ५ जाता नूतना नक्रा मत्स्यविशेषा यस्या सा । ६ यत्न-विना गजबन्धनस्थानता । ७ अश्वत्थ. पिप्पलवृक्षः । ८ महामात्राः ।

कुर्वाणास्तोरणानीवोन्नमितैः कर्णपल्लवैः । विरेजुर्वाजिनो बद्धाः श्रेणीभूताः सहस्रशः ॥ ६७ ॥
मकुष्टमुद्गचणकयवादीनि जवात्पुनः । बंधूनामिव निदधुरश्वानामश्वपालकाः ॥ ६८ ॥
बभूवुः शिविरे तत्र चत्वाराणि त्रिकाणि च । आपणानां श्रेणयश्च विनीताया इव क्षणात् ॥ ६९ ॥
गुप्यद्गुरुस्थूलपट्टकुटीभिः पटचारुभिः । नास्मरन् पूर्वसौधानां सुस्थिताः सर्वसैनिकाः ॥ ७० ॥
शमीकर्कंधुबब्बूलप्रायान् द्रून् लिलिदुर्मयाः । दिशंत इव सैन्यानां कार्यं कंटकशोधनम् ॥ ७१ ॥
स्वच्छंदं जाह्नवीतीरतले सिकतिलेऽलुठन् । भृत्या इव स्वामिनोऽग्रे वेसराश्चलकेसराः ॥ ७२ ॥
केचिदाजह्रुरेधांसि सरिदंभांसि केचन । दूर्वादिभारकान् केचित्केचिच्छाकफलादिकम् ॥ ७३ ॥
प्रचख्नुश्चूलिकाः केचित्तंडुलान्केप्यखंडयन् । केचिदज्वालयन्नग्निमपचन् केचिदोदनम् ॥ ७४ ॥
सस्नुः केप्येकतस्तत्र स्वोकसीवोज्वलैर्जलैः । स्नाता धूपैरधूपायन् केप्यात्मानं सुगंधिभिः ॥ ७५ ॥
केचिद्बुभुजिरे स्वैरं पुरोभुंजानपत्तयः । सनारीका विलिलिपुः केचिदंगं विलेपनैः ॥ ७६ ॥
नामंस्त कटकायातं कोप्यात्मानं मनागपि । लीलोपलभ्यसर्वार्थे शिविरे चक्रवर्त्तिनः ॥७७॥ पंचभिःकुलकं।
अहोरात्रे व्यतिक्रांते तस्मिन् पुनरपि प्रगे । चक्ररत्नं जगामैकं योजनं चक्रवर्त्यपि ॥ ७८ ॥
एवंयोजनमानेन प्रयाणेन दिनेदिने । गच्छंश्चक्रानुगश्चक्री मागधं तीर्थमासदत् ॥ ७९ ॥
नवयोजनविस्तारं दैर्घ्ये द्वादशयोजनम् । पूर्वाब्धिरोधसि नृपः स्कंधावारं न्यवीविशत् ॥ ८० ॥

---

१ मकुष्टा धान्यकणविशेषाः । २ आपणाना हट्टाना । ३ विनीतानगर्य्याः । ४ शमीबदरीवृक्षवत् । ५ मया उष्ट्रा । ६ सिकतामये । ७ वेसरा अश्वतरा. । ८ लीलया उपलभ्याः सर्वार्था यस्मिन् । ९ प्रगे प्रात काले । १० शिविर ।

आवासान् सर्वसैन्यानां तत्र व्यधित वर्द्धकिः । एकां पौषधशालां च शालां धर्मैकदंतिनः ॥ ७१ ॥
राजा पौषधशालायामनुष्ठानविधित्सया । उत्ततार करिस्कंधात्पर्वतादिव केसरी ॥ ७२ ॥
तत्र प्रस्तारयामास दर्भसंस्तारकं नवम् । राजा संयमसाम्राज्यलक्ष्मीसिंहासनोपमम् ॥ ७३ ॥
मागधतीर्थकुमारं देवं मनसि कृत्य च । प्रपेदेऽष्टमभक्तं सोऽर्थसिद्धेर्द्वारमादिमम् ॥ ७४ ॥
स धौतांशुकभृत्त्यक्तनेपथ्यस्त्रग्विलेपनः । त्यक्तशस्त्रः पुण्यपोषौषधं पौषधमाददे ॥ ७५ ॥
दर्भसंस्तारके तस्मिन् प्रतिजाग्रत्स पौषधम् । निष्क्रियो नृपतिस्तस्थौ सिद्धः पद इवाव्यये[1] ॥ ७६ ॥
अष्टमांते नृपः पूर्णपौषधः पौषधौकसः । शरदभ्रादिवादित्यो निर्ययावधिकद्युतिः ॥ ७७ ॥
राजा सर्वार्थनिष्णातः[2] स्नातो बलिविधिं व्यधात् । यथाविधि विधिज्ञा हि विस्मरंति विधिं न हि ॥७८॥
उत्पताकध्वजस्तंभं प्रासादमिव जंगमम् । शस्त्रागारमिवानेकशस्त्रश्रेणिविभूषितम् ॥ ७९ ॥
चतुर्दिग्विजयश्रीणामिवाह्वानार्थमुच्चकैः । टणत्कारकृतो घंटाश्चतस्रश्चारु बिभ्रतम् ॥ ९० ॥
पवनैरिव जंघालैर्[3] धीरैः पंचाननैरिव[4] । अश्वैः सनाथं मध्यास्त स रथं रथिनां वरः ॥ ९१ ॥ त्रिभिर्विशेषकम् ।
राज्ञो भावविशेषज्ञो वासवस्येव मातलिः[5] । नुनोद सारथीरथ्यान् रश्मिचालनमात्रतः ॥ ९२ ॥
महाकरिगिरिस्तोमो महानोमकरोत्करः[6] । विलोलहयकल्लोलश्चित्रशस्त्राहिभीषणः ॥ ९३ ॥

---

१ अव्यये पदे मोक्षे । २ सर्वार्थपारगामी । ३ वेगिभिः । ४ पचाननै केशरिभिः । ५ मातलिनामा सारथिः । ६ महान्ति यानि अनासि शकटाः तान्येव मकरास्तेषामुत्करा यस्मिन् सः ।

उच्छलद्भूरजोवेलो रथनिर्घोषगर्जितः । द्वितीय इव पाथोधिः पाथोधिं प्रत्यगान्नृपः ॥ ९४ ॥

युग्मम् ।

संवर्द्धितांबुनिर्घोषस्त्रस्तनक्रकुलारवैः[1] । नाभिदघ्नं[2] रथेनांभोऽम्भोनिधिः सोऽभ्यगाह्यत ॥ ९५ ॥

न्यस्यैकं लस्तके[3] हस्तं द्वितीयं त्वटनीतटे[4] । सोधिज्यं विदधे धन्व पंचमींदुविडंबकम् ॥ ९६ ॥

पाणिना किंचिदाकृष्य धनुर्ज्यां भरतेश्वरः । धनुर्वेदोंकारमिवोच्चैष्टंकारमकारयत् ॥ ९७ ॥

पातालद्वारनिर्गच्छन्नागराजानुहारकम् । इषुधेराचकर्षेषुं निजनामांकितं नृपः ॥ ९८ ॥

सिंहकर्णिकया[5] मुष्ट्या धृत्वा पुंखाग्रभागके । शिंजिन्यां[6] निदधे बाणं वज्रदंष्ट्रमरातिषु ॥ ९९ ॥

सौवर्णकर्णतार्ङ्कपद्मनालतुलास्पृशम् । आकर्णांतं स आकर्षत् कांचनं तं शिलीमुखम् ॥ १०० ॥

प्रसरद्भिर्महीभर्तुर्नखरत्नमरीचिभिः । शुशुभे स महाबाणः सोदरैरिव[7] वेष्टितः ॥ १०१ ॥

आकृष्टकार्मुकांतस्थो दीप्यमानः स सायकः । व्यात्तांतकमुखप्रेंखज्जिह्वालीलामुपाददे[8] ॥ १०२ ॥

धनुर्मंडलमध्यस्थः स मध्यमजगत्पतिः[9] । शुशुभे परिवेषांतर्भानुमानिव[10] दारुणः ॥ १०३ ॥

चालयिष्यति किं स्थानान्निग्रहीष्यत्यथैष माम् । इतीव चुक्षोभ तदा सर्वतो लवणांबुधिः ॥ १०४ ॥

अथोर्वांशो बहिर्मध्ये मुखे पुंखे च सर्वदा । नागासुरसुपर्णादिदेवताभिरधिष्ठितम् ॥ १०५ ॥

आज्ञाकरं दूतमिव शिक्षाक्षरभयानकम् । अभिमागधतीर्थेशं विससर्ज शिलीमुखम् ॥ १०६ ॥युग्मम्॥

---

१ त्रस्तमकरकुलशब्दैः । २ नाभिप्रमाण । ३ लस्तको धनुर्मध्यभागः । ४ धनुरग्रे ज्यारोपणस्थाने । ५ सिंहकर्णाकारया । ६ शिञ्जिन्या धनुर्गुणे । ७ सहोदरैः । ८ प्रसारितयममुखचलज्जिह्वालीला । ९ पृथ्वीपतिर्भरतः । १० मण्डलान्तः स्थित. सूर्य इव ।

उद्दामपक्षसूत्कारवाचालितनभोंगणः । निर्ययौ तत्क्षणं वेगात्स पत्री पत्रिराडिव ॥ १०७ ॥
विद्युद्दंड इवांभोदादुल्काग्निर्गगनादिव । स्फुलिंग इव संस्पर्शोर्चैर्दैश्याग्निरिव तापसात् ॥ १०८ ॥
शिखीव सूर्योपलतो वज्रं वज्रिभुजादिव । निष्पतन्नृपकोदंडादशोभत स सायकः ॥१०९॥ संदानितकम्॥
योजनानि द्वादशातिक्रम्य पत्री क्षणेन सः । सभायां मागधेशस्य हृदि शल्यमिवापतत् ॥ ११० ॥
अकांडेकांडपातेन तेन मागधतीर्थराट् । उच्चैश्चुकोप दंडाभिघट्टनेनेव पन्नगः ॥ १११ ॥
चक्रीकुर्वन् भ्रुवोर्युग्मं कोदंडमिव दारुणम् । दधानश्चक्षुषी ताम्रे दीप्ताग्निविशिखाविव ॥ ११२ ॥
भस्त्रापुटे इवोत्फुल्लीकुर्वाणो नासिकापुटे । स्फोरयन्नधरदलं तक्षकाहेरिवानुजम् ॥ ११३ ॥
ललाटे घटयन् लेखाः केतूनिव नभस्तले । गृह्णन् दक्षिणहस्तेन वार्त्तिकोऽहिमिवायुधम् ॥ ११४ ॥
तारुयन्नासनं वामहस्तेनारिकपोलवत् । वाचं विपार्चिःसंध्रीचीमित्यूचे मागधाधिपः ॥ ११५ ॥
चतुर्भिः कलापकम् ॥
ऐरावणरदान् छित्वा कस्ताटंकान् चिकीर्षति । सौपर्णेयस्य कः पक्षैरवतंसान् विवित्सति ॥ ११६ ॥
कः पन्नगपतेर्मौलिमणिमालां जिघृक्षति । सहस्रदीधितेः को वा हयानपि जिहीर्षति ॥ ११७ ॥
अप्रार्थितप्रार्थकः को वीरमान्यविमृश्यकृत् । अस्माकमस्मिन् सदसि प्रचिक्षेप शरं कुधीः ॥ ११८ ॥
सुपर्ण इव सर्पस्य दर्पं तस्य हराम्यहम् । एवं ब्रुवाणो रभसादुत्तस्थौ मागधाधिपः ॥ ११९ ॥

---

१ गरुडः । २ अभ्रेः । ३ शिखी अग्निः । ४ अकस्माद्बाणपातेन । ५ दण्डताडनेन । ६ भस्त्रा चर्मनिर्मित अग्न्युत्पादकयंत्रं । ७ तक्षकनागस्य । ८ धूमकेतून् । ९ वार्त्तिको गारुडिकः । १० विषज्वालातुल्यां । ११ ताटङ्कान् भूषणविशेषान् । १२ अविचार्यकारी ।

बिलादिवोरगं कोशात्खड्गदंष्ट्रं चकर्ष सः । कंपयामास च व्योम्नि धूमकेतुभ्रमप्रदम् ॥ १२० ॥
वार्धिवेलेव दुर्वारः परिवारोऽपि तत्क्षणम् । युगपत्सकलोऽप्यस्य सकोपाटोपमुत्थितः ॥ १२१ ॥
खड्गैः केचिद्दिवं चक्रुः कृष्णविद्युन्मयीमिव । वसुनंदैश्च विशदैरनेकेंदुमयीमिव ॥ १२२ ॥
नितांतनिशितान् कुंतान् खे केचिदुदलालयन् । कृतांतदंतसकलश्रेणीभिरिव निर्मितान् ॥ १२३ ॥
परशून्केचिदुजाहुर्वह्निजिह्वासहोदरान् । स्वर्भानुभीमपर्यंतान् जगृहुः केपि मुद्गरान् ॥ १२४ ॥
वज्रकोट्युत्कटान्यन्ये शूलान्याददिरे करे । अपरे दंभदंभचंभान्दंभानुदक्षिपन् ॥ १२५ ॥
चक्रुः केऽपि करास्फोटं वैरिविस्फोटकारणम् । क्ष्वेडानादं व्यधुः केपि मेघनादमिवोर्जितम् ॥ १२६ ॥
केचिज्जहि जहीत्यूचुः केचिद्धर धरेति च । तिष्ठ तिष्ठेति केचिच्च याहि याहीति केचन ॥ १२७ ॥
इत्यभूच्चित्रसंरंभचेष्टो यावत्परिच्छदः । तस्य तावदमात्यस्तं सम्यग्बाणं न्यरूपयत् ॥ १२८ ॥
महासाराण्युदाराणि तत्र पत्रिणि मंत्रिराट् । दीव्यमंत्राक्षराणीवेत्यक्षराणि व्यलोकयत् ॥ १२९ ॥
राज्येन यदि वः कार्यं जीवितव्येन वा यदि । ततः सेवां कुरुध्वं नः स्वसर्वस्वोपढौकनात् ॥ १३० ॥
इत्यादिशति वः साक्षात्सुरासुरनरेशितुः । ऋषभस्वामिनः सूनुर्भरतश्चक्रवर्त्त्ययम् ॥ १३१ ॥
मंत्री दृष्ट्वाक्षराण्येवं विज्ञायावधिना च तत् । दर्शयन् स्वामिनो बाणमुच्चकैरित्यवोचत ॥ १३२ ॥
भोभोः सर्वे राजलोका धिग्वो रभसकारिणः । स्वामिनोऽर्थधियाऽनर्थदायिनो भक्तमानिनः ॥ १३३ ॥
भरतो भरतक्षेत्रे प्रथमश्चक्रवर्त्त्यभूत् । सूनुः प्रथमतीर्थेशऋषभस्वामिनो ह्ययम् ॥ १३४ ॥

१ बिलात् दरात् । २ वसुनन्दैर्युद्धसाधनविशेषैः । ३ स्वर्भानू राहुः । ४ साहसकारिणः ।

स एष याचते दंडं दिधारयिषते[1] च वः । पाकशासन[2]वच्चंडशासनः शासनं निजम् ॥ १३५ ॥
अपि शोष्येत पाथोधिर्मेरुरप्युद्ध्रियेत च । कृतांतोऽपि निहन्येतोत्क्षिप्येतापि वसुंधरा ॥ १३६ ॥
दंभोलिरपि दह्येत विधाप्येतापि वाडवः[3] । कथंचन न जीयेत चक्रवर्त्ती महीतले ॥ १३७ ॥ युग्मम् ॥
देवायं वार्यतां लोकः स्तोकधी[4]र्धीमतांवरः । प्रगुणीक्रियतां दंडश्चक्रिणे प्रणतो भव ॥ १३८ ॥
आकर्ण्य मंत्रिवाचं तां दृष्ट्वा तान्यक्षराणि च । गंधेभगंधमाघ्राय करीव प्रशशाम सः ॥ १३९ ॥
उपायनमुपादाय तं चेषुं मगधाधिपः । उपेत्य भरताधीशं नत्वा चैव व्यजिज्ञपत् ॥ १४० ॥
दिष्ट्या दृष्टिपथं प्राप्तोऽस्यधुना मम भूपतेः । स्वामिन् कुमुदखंडस्य शशांक इव पार्वणः ॥ १४१ ॥
भगवानृषभस्वामी प्रथमस्तीर्थकृद्यथा । प्रथमश्चक्रवर्ती त्वं तथा विजयसे भुवि ॥ १४२ ॥
सुरेभस्य प्रतीभः को वायोः प्रतिबली च कः । नभसः प्रतिमानं कः प्रतिमल्लश्च तेऽस्तु कः ॥ १४३ ॥
आकर्णाकृष्टकोदंडान्निर्यातं ते शिलीमुखम् । अलंभविष्णुः कः सोढुं बिडौजस इवाशनिम् ॥ १४४ ॥
प्रसादं कुर्वता त्वेष प्रमत्तस्य मम त्वया । कर्त्तव्यज्ञापनायेषुः प्रैषि वेत्रिपुमानिव ॥ १४५ ॥
अतः परमहं नाथ महीनाथशिरोमणे । शिरोमणिमिवाज्ञां ते धारयिष्यामि मूर्धनि ॥ १४६ ॥
स्वामिन् मागधतीर्थेऽस्मिन् स्थास्याम्यारोपितस्त्वया । तत्रैव प्राग्जयस्तंभ इव निर्दंभभक्तिभाक् ॥ १४७ ॥
एते वयमिदं राज्यमेष सर्वः परिच्छदः । त्वदीयमेवान्यदपि शाधि नः पूर्वपत्तिवत् ॥ १४८ ॥
इत्युक्त्वा सोऽर्पयामास चक्रिणे पत्रिणं सुरः । तच्च मागधतीर्थांभः किरीटं कुंडले अपि ॥ १४९ ॥

१ धारयितुमिच्छति । २ इन्द्रवत् । ३ वाडवाग्निः । ४ अल्पबुद्धिः ।

तच्च राजा प्रतीयेष मागधाधिपतिं च तम् । सच्चकार महांतो हि सेवोपनतवत्सलाः ॥ १५० ॥
अथो रथं वालयित्वा तथा तेनैव पार्थिवः । स्कंधावारं निजमगात्सुत्रामेवामरावतीम् ॥ १५१ ॥
अवरुह्य रथादंगं प्रक्षाल्य सपरिच्छदः । चकाराष्टमभक्तांतपारणं भरतेश्वरः ॥ १५२ ॥
तदा मागधनाथस्य महर्द्ध्या वसुधाधवः । चक्रस्येवोपनतस्य विदधेऽष्टाह्निकोत्सवम् ॥ १५३ ॥
आदित्यस्यंदनस्रस्तमिव तेजोभिरुल्बणम् । अष्टाह्निकोत्सवांते च चक्ररत्नं चचाल खे ॥ १५४ ॥
दक्षिणस्यां वरदामतीर्थं प्रति ययौ ततः । चक्रं तच्चक्रवर्ती च धातुं प्रादिरिवान्वगात् ॥ १५५ ॥
प्रयाणैः प्रत्यहं गच्छन् राजा योजनमात्रकैः । दक्षिणाब्धिं क्रमात्प्राप मानसं राजहंसवत् ॥ १५६ ॥
एलालवंगलवलीकक्कोलबहुले नृपः । सैन्यान्यावासयामास दक्षिणांभोधिरोधसि ॥ १५७ ॥
आवासान् सर्वसैन्यस्य पौपधौकश्च वर्द्धकिः । पूर्ववद्रचयामास शासनाच्चक्रवर्त्तिनः ॥ १५८ ॥
वरदामामरं चित्ते कृत्वाष्टमतपोऽकरोत् । नृपतिः पोषधागारे पोषधं च समाददे ॥ १५९ ॥
पोषधांते बहिर्भूत्वा नृपः पोषधवेश्मनः । उपाददे धनुः कालपृष्ठं प्रेष्ठो धनुर्भृताम् ॥ १६० ॥
सर्वतः स्वर्णरचितं खचितं रत्नकोटिभिः । आरुरोह रथं राजा वासागारं जयश्रियः ॥ १६१ ॥
अधिष्ठितो नृदेवेनात्युदाराकारधारिणा । प्रसाद इव देवेन शुशुभे स महारवः ॥ १६२ ॥
अनुकूलमरुल्लोलपताकामंकितांबरः । सस्यंदनवराम्भोधौ यानपात्रमिवाविशत् ॥ १६३ ॥
रथांगनाभिद्वयसं गत्वा जलनिधेर्जलम् । रथस्तस्थौ रथाग्रस्थसारथिः स्खलितैर्हयैः ॥ १६४ ॥

१ प्रष्ठो मुख्यः ।

आनतीकृत्य विदधेऽधिगुणं विशिखासनम् ॥ १६५ ॥
अंतेवासिनमाचार्य इव विश्वंभरापतिः । आनतीकृत्य विदधेऽधिगुणं विशिखासनम् ॥ १६६ ॥
संग्राममनाटकारंभनांदीनिर्घोषमुच्चकैः । आह्वानमंत्रकालस्य ज्याटंकारं चकार सः ॥ १६७ ॥
आकृष्य बाणधेर्बाणं न्यधाद्बाणासने नृपः । ज्वालांतरालरचिततिलकश्रीमलिम्लुचम् ॥ १६८ ॥
चक्रीकृतस्य धनुषो मध्ये धूर्भ्रमदायिनम्[1] । शिलीमुखं महीनाथः कर्णजाहमुपानयत् ॥ १६९ ॥
किंकरोमीति विज्ञीप्सुमिव कर्णांतमागतम् । विससर्ज शरं राजा वरदामाधिपं प्रति ॥ १७० ॥
शैलैः पतत्पविभ्रांत्या तार्क्ष्यभ्रांत्या च पन्नगैः । अब्धिना चापरौर्वाग्निभ्रांत्या सभयमीक्षितः ॥ १७१ ॥ युग्मम् ॥
गगनं द्योतयन्नुच्चैर्गत्वा द्वादशयोजनीम् । बाणः सोपतदुल्केव वरदामस्य पर्षदि ॥ १७२ ॥
विद्विषा प्रेषितं घातकारं नरमिवाग्रतः । पतितं प्रेक्ष्य तं बाणं चुकोप वरदामराट् ॥ १७३ ॥
उद्दामां वरदामेशो वाचमेवमवोचत ॥ १७४ ॥
उद्वेल इव पाथोधिरुद्भ्रांतभ्रूतरंगितः । कस्य वाचयितुं पत्रमद्योदक्षेपि मृत्युना ॥ १७५ ॥
केनाद्य केशरी सुप्तः पदा स्पृष्ट्वा प्रबोधितः । चिक्षेप यो रभसया मम पर्षदि पत्रिणम् ॥ १७६ ॥
कुष्ठीवोत्पन्नवैराग्यो[2] जीवितव्यस्य कोऽथवा । उत्थाय पाणिना बाणं तं कोपग्रहिलोऽग्रहीत् ॥ १७७ ॥
तमनेनैव बाणेन हन्मीति वरदामराट् । तानि तत्राक्षराण्येक्षांचक्रे पत्रिणि चक्रिणः ॥ १७८ ॥
मागधाधीश्वर इव वरदामेश्वरस्ततः । वरदामपतिः सद्योऽप्यशाम्यदिति चाब्रवीत् ॥ १७९ ॥
तान्यक्षराणि संप्रेक्ष्याहिर्नागदमनीमिव[3] । प्रजिहीर्षुर्विषाणाभ्यामुरभ्र इव दंतिनः ॥ १७९ ॥
मंडूक[4] इव कृष्णाहेश्चपेटां दातुमुत्सुकः । ...

१ धूर्भ्रमदायिन युगसभ्रमदायक । २ कुष्टरोगवान् । ३ नागदमनी औषधी । ४ मण्डूकः भेक । ५ शृङ्गाभ्या । ६ उरभ्रो मेष ।

पिपातयिषुरुर्वीध्रं[1] दशनाभ्यामिव द्विपः । मंदधीर्भरतेनास्मि युयुत्सुश्चक्रवर्तिना ॥ १८० ॥
भवत्वद्यापि नो किंचिद्विनष्टमिति स ब्रुवन् । उपायनान्युपानेतुं दिव्यानि स्वान् समादिशत् ॥ १८१ ॥
ततस्तं शरमादाय प्राभृतान्यद्भुतानि च । आर्षभिः[2] सोऽभ्यगादिंद्र इव श्रीऋषभध्वजम् ॥ १८२ ॥
स नत्वा तमुवाचैवमद्य क्ष्मापुरुहूत[3] ते । दूतेनेव समाहूतः पत्रिणेहमिहागमम् ॥ १८३ ॥
त्वामिहायातमुर्वीश न स्वयं यदुपागमम् । सहस्व मे तदज्ञस्य निह्नुते दोषमज्ञता ॥ १८४ ॥
श्रांतेनेवाश्रमः पूर्णं तृषितेनेव पल्वलम्[4] । स्वामिन्नस्वामिना स्वामी मया प्राप्तोसि संप्रति ॥ १८५ ॥
अद्यप्रभृति भूनाथ स्थापितोहमिह त्वया । स्थास्यामि भवतो वेलाधरो गिरिरिवोदधेः ॥ १८६ ॥
इत्युक्त्वा भरतेशाय निर्भरं भक्तिभागसौ । अर्पयामास तं बाणं न्यासीकृतमिवाग्रतः ॥ १८७ ॥
कटीसूत्रं रत्नमयं रोचीरोचितदिग्मुखम् । राज्ञः सोऽदात् तिग्मरोचीरोचीभिरिव गुंफितम् ॥ १८८ ॥
पुरतो भरतेशस्य ढौकयामास चोज्ज्वलम् । मुक्ताराशिं यशोराशिमिव स्वं चिरसंचितम् ॥ १८९ ॥
महीपतेरुपददाववदातोदितद्युतिम् । रत्नाकरस्य सर्वस्वमिव रत्नोत्करं च सः ॥ १९० ॥
तत्सर्वमग्रहीद्राजाऽन्वग्रहीद्वरदामपम् । अस्थापयच्च तत्रैव तं कीर्त्तनमिव[5] स्वकम् ॥ १९१ ॥
वरदामेशमाभाष्य सप्रसादं विसृज्य च । जगाम जगतीनाथो विजयी शिबिरं निजम् ॥ १९२ ॥
अवतीर्य रथात्स्नात्वाऽष्टमभक्तांतपारणम् । चक्रे समं परिजनैः स राजरजनीकरः[6] ॥ १९३ ॥
वरदामाधिपस्याथ स चक्रेऽष्टाहिकोत्सवम् । लोके महत्वदानाय महंत्यात्मीयमीश्वराः[7] ॥ १९४ ॥

१ उर्वीध्र पर्वत । २ आर्षभिर्भरतः । ३ हे पृथ्वीन्द्र । ४ अल्पजलाशयः । ५ कीर्तिकारकमिव । ६ राजसु रजनीकरश्चन्द्रः । ७ महन्ति पूजयन्ति ।

प्रति प्रतीचीं प्राचीनंबर्हि[1]रिन्य इवौजसा । चक्री चक्रानुगोऽचालीत्प्रभासाभिमुखं ततः ॥ १९५ ॥
पूरयन् रोदसी[2]रंध्रं नीरंध्रैः[3] सैन्यरेणुभिः । स प्रयाणैः कतिपयैः पयोधिं प्राप पश्चिमम् ॥ १९६ ॥
ततः क्रमुक[4]तांबूलीनालिकेरीवनाकुले । स्कंधावारं विनिदधे स रोधस्यपरोदधेः[5] ॥ १९७ ॥
प्रभासनाथमुद्दिश्याष्टमभक्तं व्यधात्ततः । राजा जग्राह च प्राग्वत्पौषधं पौषधौकसि ॥ १९८ ॥
पौषधांते समारुह्य स्यंदनं मेदिनीपतिः । प्रविवेश पयोराशिं पाशपाणि[6]रिवापरः ॥ १९९ ॥
अतिक्रम्य जलं चक्रनाभि[7]दघ्नं महीपतिः । स्यंदनं धारयामासाधिज्यं च विदधे धनुः ॥ २०० ॥
जयश्रीकेलिवल्लक्या[8] धनुर्यष्टेर्विशांपतिः । पाणिना वादयामास मौर्वीं तंत्रीमिवोच्चकैः ॥ २०१ ॥
शरं चकर्ष शरधे[9]र्नीरधेर्वेत्र[10]दंडवत् । आसयच्च नृपो बाणासनेऽतिथिमिवासने ॥ २०२ ॥
ततः प्रभासाभिमुखं तं चिक्षेप शिलीमुखम् । आदित्यबिंबादाकृष्टमिवैकं किरणं नृपः ॥ २०३ ॥
वेगाद्वायुरिवोल्लंघ्य वार्धेर्द्वादशयोजनीम् । द्यां भाभिर्भासयन् प्राप स प्रभासेशवेश्मनि ॥ २०४ ॥
क्रुद्धः सोपि शरं प्रेक्ष्य प्रेक्ष्य तत्राक्षराणि च । सद्योऽशाम्यन्नट इव प्रादुष्कृतरसांतरः ॥ २०५ ॥
तं पत्रिणमुपादायोपदामप्यपरां स्वयम् । ययौ भूपं प्रभासेशो नत्वा चैवं व्यजिज्ञपत् ॥ २०६ ॥
अद्य देव प्रभासोऽस्मि भासितः स्वामिना त्वया । रवेः करैः कमलानि कमलानि[11] भवंति हि ॥ २०७ ॥

---

१ प्राचीनबर्हिरिन्द्रः । २ रोदसी द्यावाभूमी । ३ नीरन्ध्रैर्घनैः । ४ क्रमुकाः पूगवृक्षाः । ५ अपरोदधेः पश्चिमसमुद्रस्य । ६ पाशपाणिर्वरुणः । ७ रथाङ्गनाभिप्रमाण । ८ जयलक्ष्मीक्रीडावीणायाः । ९ शरधेर्निषङ्गात् । १० वेत्राख्यो वृक्षविशेषः । ११ क जल अलन्ति भूषयन्तीति कमलानि ।

एष प्रत्यग्दिगंतस्थः सामंत इव ते प्रभो । सर्वदा शासनं मूर्ध्ना धास्याम्यवनिशासिनः ॥ २०८ ॥
इत्युक्त्वा भरतेशस्य तमादौ प्रहितं शरम् । खलूरिका (?) पत्तिरिव प्रभासपतिरार्पयत् ॥ २०९ ॥
कटकानि कटीसूत्रं चूडामणिमुरोमणिम्[1] । निष्कादि[2] चार्पयद्राज्ञे मूर्त्तं तेज इव स्वकम् ॥ २१० ॥
तस्याश्वासकृते सर्वं तदुर्वीपतिरग्रहीत् । प्रभोः प्रसादचिह्नं हि प्राभृतादानमादिमम्[3] ॥ २११ ॥
तत्रैव स्थापयित्वा तमालवाल इव पादपम् । स आययौ पुनः स्कंधावारं वैरिनिवारणः ॥ २१२ ॥
तत्कालं गृहिरत्नेन कल्पावैर्निरुद्धेव सः[4] । उपनीतैर्दिव्यभोज्यैर्विदधेऽष्टमपारणम् ॥ २१३ ॥
नृपः प्रभासदेवस्य चक्रे चाष्टाह्निकोत्सवम् । आदौ सामंतमात्रस्याप्युचिताः प्रतिपत्तयः[5] ॥ २१४ ॥
अनुदीपमिवालोकोऽनुचक्रं भूपतिर्ययौ । ततः सिंधोर्महासिंधो रोधः प्राप च दक्षिणम् ॥ २१५ ॥
पूर्वाभिमुखमुर्वीशो गत्वा तेनैव रोधसा । निकषा[6] सिंधुसदनं स्कंधावारं न्यवीविशत् ॥ २१६ ॥
अष्टमं विदधे तत्र सिंधुं मनसि कृत्य सः । आसनं सिंधुदेव्याश्चाचलद्वाताहतोर्मिवत् ॥ २१७ ॥
ततः सावधिनाज्ञासीदायातं चक्रवर्तिनम् । प्रभूतैः प्राभृतैर्दिव्यैस्तं चार्चितुमुपाययौ ॥ २१८ ॥
ततो जयजयेत्याशीःपूर्वकं सा नभःस्थिता । इत्यूचेऽत्रास्मि ते चक्रिन् किंकरी करवाणि किम् ॥ २१९ ॥
श्रीदेव्या इव सर्वस्वं निधीनामिव संततिम् । साष्टोत्तरं रत्नकुंभसहस्रं भूभुजे ददौ ॥ २२० ॥
सहोद्वोढुं प्रकृतयोरिव कीर्त्तिजयश्रियोः । योग्ये नृपतयेऽयच्छद्रत्नसिंहासने च सा ॥ २२१ ॥
नागराजशिरोरत्नान्युद्धृत्येव विनिर्मितान् । दीप्ररत्नमयान् राज्ञे सा ददौ बाहुरक्षकान् ॥ २२२ ॥

१ वक्षःस्थलमणिम् २ । दीनारविशेषादि । ३ उपायनग्रहण । ४ कल्पवृक्षेण । ५ सत्काराः । ६ समीपे ।

मध्योत्कीर्णार्कबिंबाभानदत्त कटकांश्च सा । मृदूनि मुष्टिग्राह्याणि दिव्यानि वसनानि च ॥ २२३ ॥
तत्सर्वं प्रतिजग्राह स सिंधोः सिंधुराडिव । तां स प्रसादालापेन प्रमोद्य विससर्ज च ॥ २२४ ॥
अथाभिनवराके[1]न्दुसोदरे स्वर्णभाजने । चकाराष्टमभक्तांतभोजनं भूभुजां विभुः ॥ २२५ ॥
सिंधुदेव्या नरदेवो विदधेऽष्टाह्निकोत्सवम् । दर्श्यमानपथश्चक्रेणाऽग्रेऽग्रे च चचाल सः ॥ २२६ ॥
दिशो दिक्पूर्वयाऽगच्छत्क्रमेण भरतेश्वरः । भरतार्द्ध[2]द्वयाघाटं प्राप वैताढ्यपर्वतम् ॥ २२७ ॥
नितंबे दक्षिणे तस्य स्कंधावारं न्यवीविशत् । अंतरीप[3]मिव क्ष्मापो विस्तारायामशोभितम् ॥ २२८ ॥
चकाराष्टमभक्तं च तत्र विश्वंभरापतिः । वैताढ्याद्रिकुमारस्य पर्यकंपिष्ट चासनम् ॥ २२९ ॥
उत्पन्नो भरतक्षेत्रे प्रथमश्चक्रवर्त्यसौ । इत्यज्ञासीदवधिना वैताढ्याद्रिकुमारकः ॥ २३० ॥
अथाभ्यगात्स भरतं व्योमस्थश्चाब्रवीदिदम् । प्रभो जय जयैषोऽस्मि सेवकस्ते प्रशाधि माम् ॥ २३१ ॥
स महार्घाणि रत्नानि रत्नालंकरणानि च । देवदूष्याणि च राज्ञे कोशायुक्त इवार्पयत् ॥ २३२ ॥
भद्रासनानि भद्राणि भूयांस्यवनिशासिने । प्रतापसंपदः क्रीडावेश्मानि विततार सः ॥ २३३ ॥
तस्य प्रत्यग्रहीत्तच्च सर्वं सर्वंसहा[4]पतिः । अलुब्धा अपि गृह्णंति भृत्यानुग्रहहेतुना ॥ २३४ ॥
नृपस्तमथ संभाष्य विससर्ज सगौरवम् । महांतो नावजानंति[5] नृमात्रमपि संश्रितम् ॥ २३५ ॥
चकाराष्टमभक्तांते पारणं पृथिवीपतिः । चक्रे च वैताढ्यगिरिदेवस्याष्टाह्निकोत्सवम् ॥ २३६ ॥
गुहां तमिस्रामुद्दिश्य चक्ररत्नं ततोऽचलत् । राजाप्यगात्तस्य पदान्वेषकस्येव पृष्ठतः ॥ २३७ ॥

---

१ अभिनवपूर्णिमाचन्द्रसदृशे । २ भरतार्द्धद्वयसीमान । ३ अन्तरीप द्वीप । ४ पृथ्वीपतिः । ५ अवजानन्ति अवज्ञा कुर्वन्ति ।

गत्वा तमिस्रासविधे सैन्यान्यावासयन्नृपः । विद्याधरपुराणीवावतीर्णानि गिरेरधः ॥ २३८ ॥
कृत्वा मनसि भूपालः कृतमालमथापरम् । चक्रेऽष्टमतपोऽचालीत्तस्य देवस्य चासनम् ॥ २३९ ॥
सोऽज्ञासीदवधिज्ञानादागतं चक्रवर्तिनम् । आजगामार्चितुं तं च चिराद्गुरुमिवातिथिम् ॥ २४० ॥
स्वामिन्तमिस्राद्वारेऽस्मिन् द्वारपाल इवास्मि ते । इति ब्रुवन् महीभर्तुः स सेवां प्रत्यपद्यत ॥ २४१ ॥
स्त्रीरत्नयोग्यं तिलकचतुर्दशमनुत्तमम् । दिव्याभरणसंभारं विततार स भूभुजे ॥ २४२ ॥
तद्योग्यानि च माल्यानि दिव्यानि वसनानि च । सोऽदाद्भाङ्क्षे धारितानि प्राक्तदर्थमिवादरात् ॥ २४३ ॥
राजा तदाददे सर्वं कृतार्था अपि भूभुजः । न त्यजंति दिशोदंडं चिह्नं दिग्विजयश्रियः ॥ २४४ ॥
प्रसादेनातिमहता संभाष्य विससर्ज तम् । शिष्यमध्ययनप्रांत उपाध्याय इवार्षभिः ॥ २४५ ॥
भून्य[1]स्तभाजनैरग्रे भुंजानै राजकुंजरैः । स्वांशैरिव पृथग्भूतैः समं चक्रे स पारणम् ॥ २४६ ॥
सोऽकरोत्कृतमालस्य देवस्याष्टाह्निकोत्सवम् । प्रभवः प्रणिपातेन गृहीताः किं न कुर्वते ॥ २४७ ॥
सुषेणाभिधमन्येद्युः सेनापतिमिलापतिः । समाहूय हरि[2]रिव नैगमेषिणमादिशत् ॥ २४८ ॥
सिंधुसागरवैताढ्यसीमानं सिंधुनिष्कुटम् । दक्षिणं साधयोत्तीर्य चर्मरत्नेन निम्नगाम् ॥ २४९ ॥
बदरीवणवत्तत्र म्लेच्छानायुधयष्टिभिः । ताडयित्वा चर्मरत्नसर्वस्वफलमाहरेः ॥ २५० ॥ युग्मं ॥
ततः स सेनाधिपतिर्मृगाधिपतिरोजसा । तेजसा तेजसां[3]नाथो धिष[4]णो धिषणा[5]गुणैः ॥ २५१ ॥

---

१ भूमिस्थापितपात्रैः । २ हरिरिन्द्रः । ३ सूर्यः । ४ धिषणो बृहस्पति. । ५ धिषणागुणैर्बुद्धिगुणै. ।

निम्नानां निकुटानां च जलस्थलभुवामपि । अन्येषामपि दुर्गाणां तज्जन्मेव प्रचारवित् ॥ २५२ ॥
संपूर्णलक्षणः सर्वम्लेच्छभाषाविचक्षणः । शिरसा शासनं भर्तुस्तत्प्रसादमिवाददे ॥ २५३ ॥

॥ त्रिभिर्विशेषकम् ॥

प्रणम्य स्वामिनं गत्वा स्वावासे निदिदेश सः । सामंतादीन् प्रयाणाय प्रतिछंदानिवात्मनः ॥ २५४ ॥
अथ स्नात्वा कृतबलिर्महार्घ्यस्वल्पभूषणः । संवर्मितः कृतप्रायश्चित्तकौतुकमंगलः ॥ २५५ ॥
जयश्रियालिंगनाय प्रक्षिप्तामिव दोर्लताम् । रत्नग्रैवेयकं दिव्यं धारयन् कंठकंदले ॥ २५६ ॥
शोभितश्चिह्नपट्टेन पट्टद्विप इवोच्चकैः । गृहीतास्त्रः कटौ बिभ्रन्मूर्त्तां शक्तिमिव क्षुरीम् ॥ २५७ ॥
बिभ्राणः स्वर्णतूणीरावतुच्छौ सरलाकृती । पृष्ठतोपि रणं कर्तुं दोर्दण्डाविव वैक्रियौ ॥ २५८ ॥
गणनेतृदंडनेतृश्रेष्ठिभिः सार्थवाहिभिः । संधिपालचराद्यैश्च युवराज इवावृतः ॥ २५९ ॥
आरुरोह स सेनानीर्गजरत्नं नगोन्नतम् । निश्चलाग्रासनस्तेनासनेन सहभूरिव ॥ २६० ॥

॥ षड्भिः कुलकम् ॥

शोभमानः सितछत्रचामरैः सोऽमरोपमः । वारणं प्रेरयामास चरणांगुष्ठसंज्ञया ॥ २६१ ॥
समं राज्ञोऽर्द्धसैन्येन स गत्वा सिंधुरोधसि । अस्थादुद्भूतरजसा सेतुबंधमिवादधत् ॥ २६२ ॥
योजनान्येधते स्पृष्टं यच्च द्वादश यत्र च । प्रातरुप्तानि धान्यानि निष्पद्यंते दिनात्यये ॥ २६३ ॥

---

१ प्रचार सचारमार्ग वेत्तीति प्रचारवित् । २ प्रतिच्छदान् प्रतिबिम्बरूपान् । ३ महामूल्यस्वल्पाभरणः । ४ रत्नग्रीवाभरण । ५ प्रधानद्विपः । ६ शस्त्रीं । ७ स्वर्णनिषङ्गौ । ८ विक्रियोत्पन्नौ । ९ गणनायकदण्डनायकश्रेष्ठिभिः । १० पर्वतोन्नत । ११ सहजात. इव ।

नदीनदनदीनाथांत्नस्सु यत्तारणक्षमम् । तत्संपस्पर्श हस्तेन चर्मरत्नं चमूपतिः ॥ २६४ ॥

॥ संदानितकम् ॥

नैसर्गिकप्रभावेन प्रससार तटद्वयम् । तच्चर्मरत्नं प्रक्षिप्तं सलिलोपरि तैलवत् ॥ २६५ ॥
सह चम्वा चमूनाथश्चर्मरत्नेन तेन सः । उत्तीर्य पद्ययेवापदापगायाः परं तटम् ॥ २६६ ॥
तं सिसाधयिषुः सर्वं सिंधोर्दक्षिणनिष्कुटम् । कल्पांतपाथोधिरिव प्रससार चमूपतिः ॥ २६७ ॥
धनुर्निर्घोषघूत्कारदारुणो रणकौतुकी । लीलयैव पराजिग्ये स सिंह इव सिंहलान् ॥ २६८ ॥
बर्बरानात्मसाच्चक्रे मूल्यात्तानिव किंकरान् । टंकणानंकयामास राजांकेन हयानिव ॥ २६९ ॥
रत्नाकरमिवानीरं रत्नमाणिक्यपूरितम् । अजयज्जवनद्वीपं नरद्वीपी स लीलया ॥ २७० ॥
तथा कालमुखास्तेन जिग्यिरे ते यथाऽत्नवन् । अभुंजाना अपि मुखे क्षिप्तपंचांगुलीदलाः ॥ २७१ ॥
म्लेच्छा योनकनामानस्तस्य प्रसरतः सतः । आसन् पराङ्मुखा वायोरिव पादपपल्लवाः ॥ २७२ ॥
अपरा अपि वैताढ्यपर्वतोपत्यकास्थिताः । म्लेच्छजातीर्विजिग्ये सोहिर्जातीरिव वार्त्तिकः ॥ २७३ ॥
प्रौढप्रतापप्रसरः प्रसरन्ननिवारितम् । आक्रमत्कच्छदेशोर्वीं सर्वां दिवमिवार्यमा ॥ २७४ ॥
इति निष्कूटमाक्रम्य पंचानन इवाटवीम् । समोर्व्यां कच्छदेशस्य तस्थौ सुस्थश्चमूपतिः ॥ २७५ ॥
म्लेच्छनृपतयस्तत्र विचित्रोपायनैः समम् । सेनापतिं समापेतुर्भक्त्या पतिमिव स्त्रियः ॥ २७६ ॥

---

१ नदीहृदसमुद्रजलेषु । २ साधयितुमिच्छुः । ३ आत्मतत्रान् । ४ नरव्याघ्रः । ५ पर्वतासन्नभूमिस्थिताः । ६ सर्पजातीः । ७ केशरी ।

रत्नस्वर्णोत्करान्केचित्स्वर्णशैलतटोपमान् । केचिच्चलितविंध्याद्रिकल्पान्करटिनो[1] ददुः ॥ २७७ ॥
केचिद्विश्राणयामासुर्[2]वाजिनोऽत्यर्कवाजिनः[3] । केचिद्[4]अंजननिष्पन्नान् रथान् देवरथोपमान् ॥ २७८ ॥
तत्रान्यदपि यत्सारं तस्मै सर्वेऽपि तद्ददुः । गिरिभ्योपि सरित्कृष्टं[5] रत्नं रत्नाकरे व्रजेत् ॥ २७९ ॥
तवायुक्ता इवादेशकरा वयमतः परम् । स्थास्यामः स्वस्वविषये[6]ष्वित्यूचुस्ते चमूपतिम् ॥ २८० ॥
महीभुजस्तान् यथार्हं सत्कृत्य विससर्ज सः । पूर्ववच्च सुखं सिंधुमुत्ततार तरंगिणीम् ॥ २८१ ॥
म्लेच्छेभ्यश्चाहृतं सर्वं तं दंडं दंडनायकः । दोहदं कीर्तिवल्लीनां ढौकयामास चक्रिणः ॥ २८२ ॥
सत्कृतः कृतिना सोथ प्रसादाच्चक्रवर्त्तिना । विसृष्टश्च प्रहृष्टोऽगान्निजावासं चमूपतिः ॥ २८३ ॥
अयोध्यायामिव सुखं तत्रास्थान्नरतेश्वरः । सिंहः प्रयाति यत्रापि तस्यौकः स्वं तदेव हि ॥ २८४ ॥
अन्येद्युराहूय चमूपतिं नृपतिरादिशत् । उद्घाटय तमिस्रायाः कपाटद्वितयीमिति ॥ २८५ ॥
आज्ञां नरपतेर्मालामिवोपादाय मौलिना । अविदूरे तमिस्राया गत्वा तस्थौ चमूपतिः ॥ २८६ ॥
कृत्वा मनसि सेनानीः कृतमालमथामरम् । चक्रेऽष्टमतपः सर्वास्तपोमूला हि सिद्धयः ॥ २८७ ॥
सेनापतिरथ स्नातः श्वेतसंव्यानपक्षभृत् । निर्ययौ स्नानसदनात्सरसो राजहंसवत् ॥२८८ ॥
सौवर्णधूपदहनं लीलास्वर्णारविंदवत् । सुषेणः पाणिना बिभ्रत्तमिस्राद्वारमासदत् ॥ २८९ ॥
तत्र चालोकयामास कपाटौ प्राणमच्च सः । महांतः शक्तिवंतोऽपि प्रथमं साम कुर्वते ॥ २९० ॥
वैताढ्यसंचरद्विद्याधरस्त्रीस्तंभनौषधम् । अष्टाह्निकोत्सवं तत्र स व्यधत्त महर्द्धिकम् ॥ २९१ ॥

१ गजान् । २ विश्राणयामासुः ददुः । ३ अतिक्रान्तसूर्याश्वान । ४ क्वचिदीञ्जननिष्पन्नान् इत्यपि पाठः । ५ नद्याकृष्ट । ६ स्वस्वदेशेषु ।

अखंडैस्तंडुलैरष्टमंगलीं मंगलावहाम् । मंडलं मांत्रिक इवालिलेख पृतनापतिः ॥ २९२ ॥
वज्रं वज्रधरस्येव चक्रिणो वैरिसूदनम् । दंडरत्नमुपादत्त स्वहस्तेन चमूपतिः ॥ २९३ ॥
आजिघांसुरपाक्रामत्सप्ताष्टानि पदानि सः । मनागपसरत्येव प्रजिहीर्षुर्गजोपि हि ॥ २९४ ॥
सेनानीस्तेन दंडेन त्रिः कपाटावताडयत् । उच्चैस्तरां कंदरां तामातोद्यमिव नादयन् ॥ २९५ ॥
वैताढ्यपृथिवीध्रस्य विलोचनपुटे इव । बाढमुज्जाघटाते ते कपाटे वज्रनिर्मिते ॥ २९६ ॥
ततो विघटमानौ तौ कपाटौ दंडताडनात् । तडत्तडिति कुर्वाणौ चक्रंदतुरिवोच्चकैः ॥ २९७ ॥
उदग्भरतखंडानां जयप्रस्थानमंगलम् । कपाटोद्घाटनं राज्ञे सेनानाथो व्यजिज्ञपत् ॥ २९८ ॥
हस्तिरत्नं समारूढः प्ररूढप्रौढविक्रमः । अथाययौ तमिस्रायां नरेंद्रश्चंद्रमा इव ॥ २९९ ॥
मूर्द्धस्थेन शिखाबंधेनेव येन कदापि हि । उपसर्गा न जायंते तिर्यङ्नरसुरोद्भवाः ॥ ३०० ॥
अंधकारमिवाशेषं येन दुःखं प्रणश्यति । शस्त्रघाता इव रुजः प्रभवंति न येन च ॥ ३०१ ॥
नृपो यक्षसहस्रेणाधिष्ठितं चतुरंगुलम् । उद्योतकं भास्करवन्मणिरत्नं तदाददे ॥ ३०२ ॥
त्रिभिर्विशेषकम् ॥
दक्षिणे कुंभिनः कुंभस्थले सोऽरिनिषूदनः । पूर्णकुंभ इव स्वर्णपिधानं निदधे च तत् ॥ ३०३ ॥
चतुरंगचमूचक्रयुक्तश्चक्रानुगस्ततः । प्रविवेश गुहाद्वारं केशरीव नृकेसरी ॥ ३०४ ॥
अष्टसुवर्णप्रमाणं षडूदलं द्वादशाश्रिकम् । समतलं मानोन्मानप्रमाणयोगसंयुतम् ॥ ३०५ ॥

---

१ मान्त्रिको मन्त्रज्ञ. । २ सेनापतिः । ३ त्रिवार । ४ वैताढ्यपर्वतस्य । ५ उपसर्गा उपद्रवाः । ६ पुरुषसिंहः । ७ द्वादशकोणक ॥

बबंध वर्द्धकिः पद्यामनवद्यां ततस्तयोः । वैताढ्याद्रिकुमारस्य रहःशय्यामिवायताम् ॥ ३२० ॥
पद्या क्षणेन सा जज्ञे चक्रभृद्वर्द्धकेः खलु । गेहाकारद्रुमेभ्यो हि कालक्षेपो न वास्तुनः ॥ ३२१ ॥
भूयोभिरपि पाषाणैः कृतसुश्लिष्टसंधिभिः । रेजे तावत्प्रमाणैकपाषाणघटितेव सा ॥ ३२२ ॥
सा पाणिवत्समतला वज्रवच्च दृढीयसी । गुहाद्वारकपाटाभ्यामिवालक्ष्यत निर्मिता ॥ ३२३ ॥
ससैन्योपि सुखेनैव निम्नगे दुस्तरे अपि । समर्थः पदविधिवच्चक्रवर्त्युत्ततार ते ॥ ३२४ ॥
गुहाया उत्तरं द्वारमुत्तराशामुखोपमम् । सह चम्वा क्रमाद्गच्छन्नासदन्मेदिनीपतिः ॥ ३२५ ॥
आकर्ण्याघातनिर्घोषं याग्यद्वारकपाटयोः । भीताविवोद्घाटाते तत्कपाटौ स्वयं क्षणात् ॥ ३२६ ॥
तदा विघट्टमानौ तौ सरत्सरिति शब्दतः । सरणप्रेरणमिव चक्रिसैन्यस्य चक्रतुः ॥ ३२७ ॥
गुहायाः पार्श्वभित्तिभ्यां तथा संश्लिष्य संस्थितौ । अलक्ष्येतां यथा तत्राभूतपूर्वाविवाररी ॥ ३२८ ॥
अथ प्रथमतश्चक्रं पुरोगं चक्रवर्त्तिनः । निर्जगाम गुहामध्यादभ्रमध्यादिवार्यमा² ॥ ३२९ ॥
महीयसां महीनाथो गुहाद्वारेण तेन च । बलीन्द्र³ इव पातालविवरेण विनिर्ययौ ॥ ३३० ॥
तस्या गुहायाः निःशंकलीलागमनशालिनः । निर्ययुर्दंतिनो विंध्यसानुमगह्वरादिव ॥ ३३१ ॥
गुहातो वल्गु वल्गंतो निर्गच्छंति स्म वाजिनः । अंभोधिमध्यनिर्गच्छदर्कवाजिविडंबिनः ॥ ३३२ ॥
वैताढ्यकंदरादाढ्यकुटीगर्भादिवाक्षताः । नादयंतः स्वनादैर्द्या निरीयुः स्यंदना अपि ॥ ३३३ ॥
पत्तयोपि विनिष्पेतुर्महौजस्का गुहामुखात् । सद्यः स्फटिकवल्मीकवदनादिव पन्नगाः ॥ ३३४ ॥

१ कपाटौ । २ सूर्यः । ३ इन्द्रविशेषः । ४ धनाढ्यगृहगर्भात् इव । ५ अक्षताः क्षतरहिताः ।

पंचाशद्योजनायामां तामतिक्रम्य कंदराम् । उदग्भरतवर्षार्द्धं त्रिजेतुं पाविशन्नृपः ॥ ३३५ ॥
किरातास्तत्र निवसंत्यापाता नाम दुर्मदाः । आढ्या महौजसो दीप्ता भूमिष्ठा इव दानवाः ॥ ३३६ ॥
तेऽविच्छिन्नमहाहर्म्यशयनासनवाहनाः । अनल्पस्वर्णरजताः कुबेरस्येव गोत्रिणः ॥ ३३७ ॥
बहुजीवधनास्ते च बहुदासपरिच्छदाः । अजाताभिभवाः प्रायः सुरोद्यानद्रुमा इव ॥ ३३८ ॥
अनेकसंपरायेषु निर्व्यूढबलशक्तयः । महाशकटभारेषु महोक्षा इव ते सदा ॥ ३३९ ॥
प्रसह्य भरताधीशे कृतांत इव सर्पति । अनिष्टशंसिनस्तेषामुत्पाता अभवन्निति ॥ ३४० ॥
चलद्भरतसैन्यप्राग्भारभारैरिवार्दिता । प्रकंपितगृहोद्याना प्रचकंपे वसुंधरा ॥ ३४१ ॥
दिगंतव्यापिभिः प्रौढैः प्रतापैरिव चक्रिणः । अजायंत दिशां दाहा दावानलसहोदराः ॥ ३४२ ॥
क्षरता रजसात्यंतमनालोकैनभाजनम् । बभूवुः ककुभः सर्वाः पुष्पवत्य इव स्त्रियः ॥ ३४३ ॥
दुःश्रवक्रूरनिर्घोषा आस्फालंतः परस्परम् । पयोनिधाविव ग्राहा दुर्वाता विजजृंभिरे ॥ ३४४ ॥
निपेतुर्गगनादुल्का उल्मुकानीव सर्वतः । समस्तम्लेच्छव्याघ्राणां प्रक्षोभस्य निबंधनम् ॥ ३४५ ॥
अभवन्वज्रनिर्घाता महाघोषविभीषणाः । क्रुध्योत्थितकृतांतस्य हस्तघाता इव क्षितौ ॥ ३४६ ॥
स्थाने स्थाने काकचिल्लमंडलानि नभस्तले । भ्रेमुः समुपसर्पत्याः छत्राणीवांतकश्रियः ॥ ३४७ ॥
अथ सौवर्णसन्नाहपरशुप्रासरश्मिभिः । सहस्ररश्मिं कुर्वाणं कोटिरश्मिमिवांबरे ॥ ३४८ ॥

१ भूमिस्थिताः । २ अपरिगितमहाहर्म्यशयनासनवाहनाः । ३ अनेकयुद्धेषु । ४ तमोभाजन । ५ रजस्वलाः । ६ मत्स्याः । ७ काका वायसाः चिल्लाः पक्षिविशेषास्तेषां मण्डलानि । ८ सवर्णमयवर्मपरशुप्रासकिरणैः ।

दंतुलांबरमुद्दंडैर्दंडकोदंडमुद्गरैः । ध्वजस्थव्याघ्रसिंहादित्रस्तांबरचरीगणम् ॥ ३४९ ॥
महाद्विपघटामेघांधकारितदिगाननम् । यमाननपरिस्पर्द्धिरथाग्रमकराननम् ॥ ३५० ॥
खुराघातैस्तुरंगाणां पाटयंतमिव क्षितिम् । जयतूर्यरवैर्घोरैः स्फोटयंतमिवांबरम् ॥ ३५१ ॥
भौमेनाग्रेसरेणार्कमिव चक्रेण भीषणम् । आयांतं भरतं दृष्ट्वा किराताश्चुकुपुस्तराम् ॥ ३५२ ॥
मिथः संभूय ते क्रूरग्रहमैत्रीविडंबिनः । अवनीशं जिहीर्षंत इव सक्रोधमभ्यधुः ॥ ३५३ ॥
अप्रार्थितप्रार्थयिता कोयं बाल इवाल्पधीः । पृथग्जन इव श्रीह्रीधृतिकीर्त्तिविवर्जितः ॥ ३५४ ॥
परिक्षीणपुण्यचतुर्दशीको हीनलक्षणः । अस्मद्विषयमायाति मृगः सिंहगुहामिव ॥ ३५५ ॥
तदेनमुद्धताकारं प्रसरंतमपि क्षणात् । महावात इवांभोदं प्रक्षिपामो दिशो दिशि ॥ ३५६ ॥
इत्युच्चैर्विब्रुवाणास्ते संभूय भरतं प्रति । उदतिष्ठंत युद्धाय प्रत्यब्दं शरभा इव ॥ ३५७ ॥
अभेद्यान्कूर्मपृष्ठास्थिशकलैरिव निर्मितान् । सन्नाहान् धारयामासुः किरातपतयोऽथ ते ॥ ३५८ ॥
दिशंति मूर्द्धामुत्केशनिशाचरशिरःश्रियम् । ऋक्षादिकेशच्छन्नानि शिरस्त्राणानि ते दधुः ॥ ३५९ ॥
उत्साहेनोल्लसद्देहतया सन्नाहजालिकाः । त्रुटंति स्म प्रतिमुहुरहो तेषां रणोत्कंता ॥ ३६० ॥
शिरोभिरुत्कचैस्तेषां शिरस्त्राणान्युदासिरे । त्राता किमपरोऽस्माकमित्यमर्षवशादिव ॥ ३६१ ॥
केचित्कुपितकीनाशभ्रुकुटीकुटिलान्यधुः । धनूंषि शृंगघटितान्यधिज्यीकृत्य लीलया ॥ ३६२ ॥

---

१ अम्बरचरीगण खेचरीगणं ।२ यममुखपरिस्पर्द्धीनि रथाग्रमकराननानि यस्य स त ।३ मङ्गलग्रहेण ।४ क्रूरग्रहा रविमङ्गलमन्दराहुकेतुरूपाः । ५ लौकिकदृष्टान्तोऽयं प्रतिभाति । ६ शरभा अष्टपदाः । ७ कूर्मपृष्ठस्य अस्थिखण्डैः । ८ ऋक्षो भल्लूकः । ९ रणोत्कण्ठता ।

केपि संगरदुर्वारांस्तरवारीन्[1] भयंकरान् । कोशादाचकृपुर्लीला[2]तल्पकल्पान् जयश्रियः ॥ ३६३ ॥
केचिदुद्दधिरे दण्डान् दण्डपाणेरिवानुजाः । कुंताननर्त्तयन् केपि केतूनिव नभस्तले ॥ ३६४ ॥
शूलान्यधारयन् केपि शूलाकर्त्तुमिव द्विषः । प्रीतये प्रेत[3]राजस्यामंत्रितस्य रणोत्सवे ॥ ३६५ ॥
विद्विषद्वर्त्तिका[4]चक्रप्राणसर्वस्वतस्करान् । अयः[5]शल्यान्निदधिरे श्येनानिव करे परे ॥ ३६६ ॥
पिपातयिषव[6] इव नभस्तस्तारकोत्करं[7] । केचिदाददिरे सद्यो मुद्गरानुद्धरैः करैः ॥ ३६७ ॥
विविधान्यायुधान्यन्येप्यधुरायोधनेच्छया । विना शस्त्रं न कोप्यासीद्विना विषमिवोरगः ॥ ३६८ ॥
उद्दिश्य भरतानीकमनीकरसलालसाः । अभ्यधावन्नेककालमेकात्मान इवाथ ते ॥ ३६९ ॥
भरतस्याग्रसैन्येन सार्द्धं युयुधिरे रयात् । म्लेच्छाः शस्त्राणि वर्षंतोऽरिष्टाब्दाः[8] करकानिव[9] ॥ ३७० ॥
भुवो मध्यादिवोत्पेतुर्दिग्मुखेभ्य इवापतन् । पेतुश्च व्योमत इव तेभ्यः शस्त्राणि सर्वतः ॥ ३७१ ॥
भरतेशाग्रसेनायां किरातानां शिलीमुखैः । न तदासीन्न यद्भिन्नं दुर्जनानामिवोक्तिभिः ॥ ३७२ ॥
म्लेच्छसैन्येन पर्यस्ता भरतेशाग्रसादिनः[10] । नदीमुखोर्मय इवाऽचलन्वारिधिवेलया ॥ ३७३ ॥
चक्रिणः करिणस्त्रेसु रसंतो विरसस्वरम् । निघ्नत्सु म्लेच्छसिंहेषु शिलीमुखनखैः सितैः ॥ ३७४ ॥
ताडिता म्लेच्छसुभटैश्चंकैर्दंडायुधैर्मुहुः । भूपतेः पत्तयः पेतुर्लुठंतः कंदुका इव ॥ ३७५ ॥
स्वच्छंदं म्लेच्छसैन्येन नृपाग्रध्वजिनीरथाः । अभज्यंत गदाघातैर्वज्रघातैरिवाद्रयः ॥ ३७६ ॥

१ खड्गान् । २ लीलाशय्यासदृशान् । ३ यमस्य । ४ वर्त्तिका विहगभेदाः । ५ लोहशल्यान् । ६ पातयितुमिच्छव इव । ७ तारकौघम् । ८ उत्पातमेघाः । ९ करकान् वर्षोपलान् । १० भरताग्राश्वारोहाः ।

ति[1]मिंगिलैरिव म्लेच्छैस्तस्मिन्समरसागरे । ग्रस्तत्रस्तं नृपचमूनक्रचक्रमजायत ॥ ३७७ ॥
अनाथामिव तां सेनां सेनानाथः पराजिताम् । पश्यन् सुषेणः कोपेनानोदि राज्ञ इवाज्ञया ॥ ३७८ ॥
आताम्रनयनस्ताम्रवदनः स क्षणादभूत् । क्रुद्धो नररूपेण वैश्वानर[2] इव स्वयम् ॥ ३७९ ॥
रक्षोराज इवाशेषान् ग्रसितुं परसैनिकान् । स्वयं संवर्मयामास सुषेणः पृतनापतिः ॥ ३८० ॥
उत्साहोल्लसदंगत्वादतिगाढत्वमागतम् । सौवर्णं वर्म सेनान्यस्त्वगं[3]तरमिवाशुभत् ॥ ३८१ ॥
अशीत्यंगुलमुत्[4]सृत्यामेकन्यूनशतांगुलम् । परिणा[5]हे दैर्घ्ये पुनरष्टोत्तरशतांगुलम् ॥ ३८२ ॥
द्वात्रिंशदंगुलोत्सेधं सततोन्नतमौलिकम् । चतुरंगुलकर्णं च विंशत्यंगुलबाहुकम् ॥ ३८३ ॥
षोडशांगुलजंघाकं चतुरंगुलजानुकम् । चतुरंगुलोच्चखुरं वृत्तं वलितमध्यकम् ॥ ३८४ ॥
विशालसंगतनतप्रसन्नपृष्ठशालिनम् । दुकूलतंतुभिरिव कोमलैर्लोमभिर्युतम् ॥ ३८५ ॥
प्रशस्त[6]द्वादशावर्तं शुभलक्षणलक्षितम् । सुजात[7]यौवनप्राप्तशुकपिच्छहरिच्छविम् ॥ ३८६ ॥
कशानिपातरहितं सादिचित्तानुगामिनम् । रत्नस्वर्णवल्गाव्याजाद्दोर्भ्यां श्लिष्टमिव श्रिया ॥ ३८७ ॥
कांचनैः किंकिणीजालैः क्वणद्भिर्मधुरस्वरम् । अंतर्ध्वनन्मधुकराम्भोजस्रग्भिरिवार्चितम् ॥ ३८८ ॥
पंचवर्णमणिमिश्रस्वर्णालंकरणांशुभिः । रूपाद्वैतपताकांकमिव बिभ्राणमाननम् ॥ ३८९ ॥
कांचनाम्भोजतिलकं भौमांकितमिवांबरम् । चामरोत्तंस[8]निभतोऽन्यौ कर्णाविव बिभ्रतम् ॥ ३९० ॥

---

१ महामत्स्यैः । २ अग्निः । ३ अन्या त्वचा त्वगन्तर । ४ औन्नत्ये । ५ विशालतायां । ६ द्वादशावर्तो लक्षणविशेष. । ७ सुजातयौवनेन प्राप्ता शुकपिच्छवद्धरितकान्तिर्येन त । ८ चामरोत्तंसव्याजात् ।

वज्रिणो वाहनमिवाकृष्टं पुण्येन चक्रिणः । मुंचंतं चरणौ वक्रौ पतंतौ लालकादिव ॥ ३९१ ॥
सुपर्णमन्यमूर्त्त्यैव मूर्तिमंतमिवानिलम् । क्षणेन योजनशतोल्लंघने दृष्टविक्रमम् ॥ ३९२ ॥
कर्दमोदकपाषाणशर्करागर्त्तदुःखमात् । महास्थलीगिरिदरीदुर्गाद्योत्तारणक्षमम् ॥ ३९३ ॥
ईषल्लग्नपादत्वात्संचरंतमिवांबरे । मेधाविनं विनीतं च पंचधारा[1]जितश्रमम् ॥ ३९४ ॥
कमलामोदनिःश्वासं कमलापीडमाख्यया । साक्षाज्जयमिवारोहद्वाजिराजं चमूपतिः ॥ ३९५ ॥
चतुर्दशभिः कुलकम् ॥
पंचाशदंगुलं दैर्घ्ये विस्तारे षोडशांगुलम् । अर्धांगुलं च बाहल्ये स्वर्णरत्नमयत्सरुः[2] ॥ ३९६ ॥
अपास्तकोशं निर्मुक्तनिर्मोकमिव पन्नगम् । तीक्ष्णधारमतिदृढं द्वैतीयीकमिवाशनिम् ॥ ३९७ ॥
विचित्रपुष्करश्रेणि व्यक्तवर्णविराजितम् । खड्गरत्नं स जग्राह द्विषां पत्रमिवांतकः ॥ ३९८ ॥
त्रिभिर्विशेषकम् ॥
जातपक्ष इवाहींद्रः सन्नद्ध इव केशरी । बभूव खड्गरत्नेन स तेन पृतनापतिः ॥ ३९९ ॥
तडिद्दंड इवाकाशे तरलं भ्रमयन्नसिम् । वाजिनं चोदयामास सांयुगीनं[3] चमूपतिः ॥ ४०० ॥
जलकांतो जलमिव स्फाटयन् विद्विषद्बलम् । विवेश वाजिना तेन सुषेणः समरांगणम् ॥ ४०१ ॥
सुषेणे निघ्नति त्रेसुर्द्विषः केपि मृगा इव । नेत्रे निमील्य केप्यास्थुः पतित्वा शशका इव ॥ ४०२ ॥

---

१ पञ्चधारा, अश्वानां पञ्चविधगतिविशेषाः । २ त्सरुः खड्गमुष्टिः । ३ सयुगे युद्धे साधु' सायुगीनस्त ।

ऊर्ध्वीभूयापरे तस्थुः खेदिता रोहिता[1] इव । आरोहन् विषमस्थानं केऽपि शाखामृगा[2] इव ॥ ४०३ ॥
केषांचित्पेतुरस्त्राणि पत्राणीव महीरुहाम् । आतपत्राणि केषांचिद्यशांसीव समंततः ॥ ४०४ ॥
केषांचित्तुरगास्तस्थुर्मंत्रस्तब्धा इवोरगाः । केषांचिदप्यभज्यंत स्यंदना मृन्मया इव ॥ ४०५ ॥
स्वमप्यसंस्तुतमिव[3] प्रत्यैक्षंत न केचन । आत्मप्राणान् गृहीत्वा तु ययुर्म्लेच्छा दिशोदिशं ॥ ४०६ ॥
पर्यस्तास्ते सुषेणेनांभःपूरेण द्रुमा इव । निःस्थामानो[4] योजनानि भूयांसि व्यपचक्रमुः ॥ ४०७ ॥
ते वायसा इवैकत्र संभूयालोच्य च क्षणम् । आतुरा मातरमिव ययुः सिंधुमहानदीम् ॥ ४०८ ॥
तस्याश्च सैकते कृत्वा संस्तारान् सिकतोत्करैः । ते संभूयोपविविशुरपस्नातोद्यता[5] इव ॥ ४०९ ॥
नग्ना उत्तानका मेघमुखान् स्वकुलदेवताः । चित्ते नागकुमारांस्ते कृत्वाष्टमतपो व्यधुः ॥ ४१० ॥
तदष्टमतपःप्रांते चक्रतेजोभयादिव । तेषां नागकुमाराणामासनानि चकंपिरे ॥ ४११ ॥
ते दृष्ट्वाऽवधिना तांस्तु म्लेच्छानार्त्तास्तथा स्थितान् । अर्त्या पितृवदभ्येत्य प्रादुरासंस्तदग्रतः ॥ ४१२ ॥
ब्रूत भो भवतामर्थः कोऽधुना मनसीप्सितः । अंतरिक्षस्थिता एवं ते किरातान्बभाषिरे ॥ ४१३ ॥
दृष्ट्वा मेघमुखान्नागकुमारान्नभसि स्थितान् । तेबध्नन्नंजलीन् भालेष्वत्यंततृषिता इव ॥ ४१४ ॥
अस्मद्देशमनाक्रांतपूर्वं[6] कोप्यागतोऽधुना । यथा स गच्छति तथा कुरुतेत्यूचिरे च ते ॥ ४१५ ॥
ऊचुर्मेघमुखाश्चैवं भरतश्चक्रवर्त्ययम् । देवासुरमनुष्याणामप्यजय्यो महेंद्रवत् ॥ ४१६ ॥

---

१ सरलस्थितिशीलाः पशुविशेषा वृक्षविशेषाश्च । २ कपयः । ३ अपरिचित्त । ४ निर्बलाः । ५ अपस्नान मृतस्नान तत्रोद्यता इव ।
६ पूर्वमनाक्रान्तं ।

मंत्रतंत्रविषास्त्राग्निविद्यादीनामगोचरः । गिरिग्रांवेव टंकानां चक्रवर्त्ती महीतले ॥ ४१७ ॥
युष्माकमनुरोधेन वयमस्य तथापि हि । उपसर्गं करिष्याम इत्युक्त्वा ते तिरोऽभवन् ॥ ४१८ ॥
अंभोधय इवोत्पत्त्य भुवोंभोदा नभस्तलम् । व्याप्नुवंतोंजनश्यामरुचः संजज्ञिरे क्षणात् ॥ ४१९ ॥
तेऽतर्जयन्निव तडित्तर्जन्या चक्रभृच्चमूम् । ऊर्जितैर्गर्जितरवैश्चाचुक्रुशुरिवासकृत् ॥ ४२० ॥
ते तस्थुरुपरि क्षापस्कंधावारस्य तत्क्षणम् । चूर्णनाय तत्प्रमाणोद्यतवज्रशिलोपमाः ॥ ४२१ ॥
अयोग्रैरिव नाराचैरिव दंतैरिवाथ ते । धाराभिरंभसां तत्र प्रावर्त्तंत प्रवर्षितुम् ॥ ४२२ ॥
मेघांभसा पूर्यमाणे समंतादपि भूतले । अनाव्यंत रथास्तत्रानक्रायंत गजादयः ॥ ४२३ ॥
क्वाप्यगच्छदिवादित्यः प्रणेशुरिव पर्वताः । तेन मेघांधकारेण स्फूर्जता कालरात्रिवत् ॥ ४२४ ॥
एकांधकारता चैकजलभावश्च भूतले । तदानीं युगपद्युग्मधर्माविव बभूवतुः ॥ ४२५ ॥
अरिष्टवृष्टिमुत्कृष्टां प्रेक्ष्य तां चक्रवर्त्त्यपि । चर्मरत्नं स्वहस्तेन प्रियभृत्यमिवास्पृशत् ॥ ४२६ ॥
स्पृष्टं तच्चक्रिहस्तेन चर्मरत्नमवर्द्धत । योजनानि द्वादशोदक्पवनेनेव वारिदः ॥ ४२७ ॥
तस्मिन् जलस्योपरिस्थे घनाब्धेरिव भूतले । चर्मरत्ने समारुह्य तस्थौ राजा ससैनिकः ॥ ४२८ ॥
संस्फितं नवनवत्या सहस्रैश्चारुरोचिषाम् । चामीकरशलाकानां क्षीराब्धिमिव विद्रुमैः ॥ ४२९ ॥
व्रणग्रंथिविहीनेन सरलत्वैकशालिना । तालेन नलिनमिव स्वर्णदंडेन शोभितम् ॥ ४३० ॥

१ गिरिपाषाण । २ टङ्काना पाषाणभेदनास्त्राणा । ३ आग्रहेण । ४ विद्युद्रूपतर्जन्यङ्गुल्या । ५ लोहाग्रैः । ६ नौवदाचरणमकुर्वंत । ७ नक्रा मकरविशेषास्तद्वदाचरणमकुर्वंत । ८ उत्तरपवनेन । ९ प्रवालैः ।

तोयातपमरुद्रेणुत्राणक्षममिलापतिः । पस्पर्श पाणिना छत्रं चर्मवद्ववृधे च तत् ॥ ४३१ ॥

त्रिभिर्विशेषकम् ॥

छत्रदंडस्योपरि च ध्वांतध्वंसकृते[1] नृपः । तेजसाऽतिनभोरत्नं[2] मणिरत्नं न्यवेशयत् ॥ ४३२ ॥
तरदंडमिवाराजत्संपुटं छत्रचर्मणोः । ततःप्रभृति लोकेऽभूद्ब्रह्मांडमितिकल्पना ॥ ४३३ ॥
चर्मरत्ने च सुक्षेत्र इवोप्तानि दिवामुखे । सायं धान्यान्यजायंत गृहिरत्नप्रभावतः ॥ ४३४ ॥
प्रातरुप्ताश्च कूष्मांड[3]पालिक्यामूलकादयः । दिनांते निरपद्यंत प्रासादा ऐंदवा इव ॥ ४३५ ॥
उप्ता दिनमुखे चूतकदल्याद्याः फलद्रुमाः । दिनांतेपि फलंति स्म प्रारंभा महतामिव ॥ ४३६ ॥
धान्यशाकफलान्येतान्यभुक्त मुदितो जनः । उद्यानकेलिगतवान्नाबुद्ध कटक[4]श्रमम् ॥ ४३७ ॥
चर्मरत्नछत्ररत्नमध्ये मध्यजगत्पतिः । प्रासादस्थ इव स्वस्थोऽवतस्थे सपरिच्छदः[5] ॥ ४३८ ॥
सप्ताभूवन्नहोरात्रा अश्रांतं तत्र वर्षताम् । तेषां नागकुमाराणां तदा कल्पांतकालवत् ॥ ४३९ ॥
पापाः केऽमी ममेदृक्षोपसर्गं कर्त्तुमुद्यताः । इति भावं नरेंद्रस्य विदित्वाथ महौजसः ॥ ४४० ॥
सदा संनिहिता यक्षास्ते सहस्राणि षोडश । सन्नद्धा बद्धतूणीरा अधिज्यीकृतकार्मुकाः ॥ ४४१ ॥
दिधक्षव[6] इव क्रोधानलेन परितः परान् । एत्य मेघमुखान्नागकुमारानेवमब्रुवन् ॥ ४४२ ॥

त्रिभिर्विशेषकम् ॥

---

१ अन्धकारनाशार्थं । २ अतिक्रान्तसूर्यं । ३ कूष्माण्डः "कोलु" इति लोके प्रसिद्धः फलविशेषः । ४ सैन्यश्रम । ५ सपरिवारः । ६ दग्धुमिच्छव इव ।

अरे वराकाः किं यूयं हंत निश्चेतना इव । न जानीथ महीनाथं चक्रिणं भरतेश्वरम् ॥ ४४३ ॥
विश्वाजय्ये नृपेऽमुष्मिन्नारंभो वोऽयमापदे । महाशिलोच्चये दंतप्रहारो दंतिनामिव ॥ ४४४ ॥
एवं सत्यप्यपयात त्वरितं मत्कुणा इव । अदृष्टपूर्वो भावी वोऽपमृत्युर्बाढमन्यथा ॥ ४४५ ॥
इत्याकर्ण्याकुला मेघबलं मेघमुखाः सुराः । संजहुरिंद्रजालज्ञा इंद्रजालमिव क्षणात् ॥ ४४६ ॥
ययुः किरातास्ते मेघमुखास्तच्चाचचक्षिरे । भरतं शरणं गत्वाश्रयध्वमिति चादिशन् ॥ ४४७ ॥
ततस्तद्वचनान्म्लेच्छा भग्नेच्छा भरतेश्वरम् । शरण्यं शरणायेयुरनन्यशरणास्तदा ॥ ४४८ ॥
फणामणीनिवाहीनामेकतः पुंजितान् मणीन् । अंतःसारमिव मेरोश्चारुचामीकरोत्करम् ॥ ४४९ ॥
अश्वरत्न[1]प्रतिच्छंदानिवाश्वानपि लक्षशः । उपायनेऽर्पयामासुस्ते नत्वा भरतेशितुः ॥ ४५० ॥ युग्मम् ॥
निबद्धांजलयो मूर्ध्नि वाचा चाटूक्तिगर्भया । सगर्भा[2] इव सूतानामिति[3] चोच्चैर्बभाषिरे ॥ ४५१ ॥
विजयस्व जगन्नाथ प्रचंडाखंडविक्रम । आखंडल इवासि त्वं षट्खंडक्षोणिमंडले ॥ ४५२ ॥
वैताढ्यपर्वतस्यास्मद्वप्र[4]स्यैव भूपते । महाप्रतोलीं[5] त्वदृते क उद्घाटयितुं क्षमः ॥ ४५३ ॥
ज्योतिश्चक्रमिवाकाशे स्कंधावारं जलोपरि । अन्यो धर्तुमलं[6] भूष्णुर्जिष्णो त्वामंतरेण कः ॥ ४५४ ॥
एवमद्भुतया शक्त्या स्वामिनापि दिवौकसाम् । अजय्य इति विज्ञातोऽस्यज्ञानागः[7] सहस्व नः ॥ ४५५ ॥
नवं जीवातु[8]मधुना पृष्ठे हस्तं प्रयच्छ नः । स्थास्यामोऽतःपरं नाथ त्वदाज्ञावर्त्तिनो वयम् ॥ ४५६ ॥

---

१ अश्वरत्नप्रतिबिम्बानीव । २ सगर्भाः सहोदराः । ३ सूताना बन्दिना । ४ अस्मद्भूमिदुर्गस्य । ५ महाप्रतोलीं महाकक्षा । ६ समर्थः । ७ अज्ञानापराध । ८ सञ्जीवनौषधरूप ।

भरतोप्यात्मसात्कृत्य तान्सत्कृत्य च कृत्यवित्। विससर्जोत्तमानां हि प्रणामावधयः क्रुधः ॥ ४५७ ॥
गिरिसागरमर्यादं सिंधोरुत्तरनिष्कुटम्। नृपाज्ञया सुषेणोऽथ साधयित्वा समाययौ ॥ ४५८ ॥
भोगान् तत्रोपभुंजानश्चिरं तस्थौ महीपतिः। आर्यीकर्त्तुमिवानार्यान् निजार्यजनसंगमात् ॥ ४५९ ॥
अन्यदायुधशालाया भाविशालं महीभृतः। चक्ररत्नं निरक्रामत् प्रतिभूः ककुभां जये ॥ ४६० ॥
गच्छतः पूर्वमार्गेणाभिक्षुद्रहिमवद्गिरिम्। ययौ तस्याध्वना राजा प्रवाह इव कुल्यया ॥ ४६१ ॥
कैश्चित्प्रयाणकैर्गच्छन् नागेंद्र इव लीलया। नितंबं दक्षिणं क्षुद्रहिमाद्रेः प्राप भूपतिः ॥ ४६२ ॥
तस्मिंश्च भूर्जतगरदेवदारुवनाकुले। न्यधान्नरेंद्रः शिबिरं महेंद्र इव पांडके ॥ ४६३ ॥
उद्दिश्य क्षुद्रहिमवत्कुमारं तत्र चार्षभिः। चक्रेऽष्टमं कार्यसिद्धेस्तपोमंगलमादिमम् ॥ ४६४ ॥
ततश्चाष्टमभक्तांते निशांते इव भास्करः। रथारूढो महातेजा निर्ययौ शिबिरोदधेः ॥ ४६५ ॥
वेगेन गत्वा हिमवत्पर्वतं त्रिरताडयत्। साटोपो रथशीर्षेण शीर्षण्यः पृथिवीभुजाम् ॥ ४६६ ॥
हिमाचलकुमाराय निजनामांकितं शरम्। विससर्जाथ भूनाथो वैशाखस्थानकस्थितः ॥ ४६७ ॥
द्वासप्तति योजनानि विहायसा विहंगवत्। शरः स गत्वा हिमवत्कुमारस्य पुरोऽपतत् ॥ ४६८ ॥
स समालोक्य तं बाणमारां व्याल इव द्विपः। कोपादजनि तत्कालं लोहितायितलोचनः ॥ ४६९ ॥
स करेण गृहीत्वेषुं तत्र नामाक्षराणि च। दृष्ट्वा शमं ययौ दीप इव पन्नगदर्शनात् ॥ ४७० ॥

---

१ कान्तिविशाल। २ भूर्जादयो वृक्षविशेषाः। ३ पाण्डके वने। ४ निशाते प्रातःकाले। ५ अग्रणीः। ६ वैशाखस्थानक तु धनुर्द्धराणामवस्थानविशेषः। ७ आरागस्तभेदं। ८ व्यालो दुष्टगजः।

प्रधानपुरुषेणेव राज्ञस्तेनेषुणा सह । उपायनान्युपादाय स ययौ भरतेश्वरम् ॥ ४७१ ॥
उक्त्वा जयजयेत्युच्चैरंतरिक्षस्थितोऽथ सः । आदौ भूपाय तं कांडकार[1] इवार्पयत् ॥ ४७२ ॥
सोऽदाद्देवकुसुमनोमालां[2] गोशीर्षचंदनम् । सर्वौषधीर्हृदांभश्च राज्ञे सारं हि तस्य तत् ॥ ४७३ ॥
कटकान्बाहुरक्षांश्च देवदूष्यांशुकानि च । ददौ नरपतेर्दंडे प्राभृतच्छद्मना[3]ऽथ सः ॥ ४७४ ॥
स्वामिन्नुत्तरदिक्प्रांते तवायुक्त[4] इवास्म्यहम् । इत्युक्त्वा विरतो राज्ञा स सत्कृत्य व्यसृज्यत ॥ ४७५ ॥
अडेस्तस्य प्रस्थमिव सह प्रस्थितमुच्चकैः । स वालयामास रथं मनोरथमिव द्विषाम् ॥ ४७६ ॥
गत्वा ऋषभकूटाद्रिमृषभस्वामिभूस्ततः । जघान रथशीर्षेण त्रिर्दंतेनेव दंतिराट् ॥ ४७७ ॥
स्थापयित्वा रथं तत्र पृथिवीपतिरग्रहीत् । पाणिना काकिणीरत्नं रश्मिकोशमिवार्यमा ॥ ४७८ ॥
अवसर्पिण्यां तृतीयारप्रांते भरतोस्म्यहम् । चक्रीति वर्णान् काकिण्या तत्पूर्वकटकेऽलिखत् ॥ ४७९ ॥
ततो व्यावृत्य सद्वृत्तः स्कंधावारं निजं ययौ । चकाराष्टमभक्तांतपारणं च महीपतिः ॥ ४८० ॥
ततश्च क्षुद्रहिमवत्कुमारस्य नरेश्वरः । अष्टाह्निकोत्सवं चक्रेऽनुरूपं चक्रिसंपदः ॥ ४८१ ॥
गंगासिंधुमहानद्योरंतरालमहीतले । अमाद्भिरिव वियत्युत्प्लवमानैस्तुरंगमैः ॥ ४८२ ॥
सैन्यभारपरिक्लांतां सेक्तुकामैरिवावनिम् । प्रस्रवद्भिर्मदजलप्रवाहं गंधसिंधुरैः[5] ॥ ४८३ ॥
उद्दामनेमिरेखाभिः सीमंतालंकृतामिव । विदधानैर्वसुमतीं स्यंदनैः[6] स्यंदनोत्तमैः ॥ ४८४ ॥

१ काण्डकारो बाणकारकः । २ देववृक्षपुष्पमाला । ३ उपायनमिषेण । ४ आयुक्तो भृत्यः । ५ मदगन्धयुक्तैर्गजैः । ६ स्यन्दनै रथै. ।

पत्तिभिः कोटिसंख्यैश्च प्रसरद्भिर्महीतले । दर्शयद्भिर्नराद्वैतमिवाद्वैतपराक्रमैः ॥ ४८५ ॥
अश्ववारानुगो जात्यमतंगज इव व्रजन् । चक्ररत्नानुगश्चक्री प्राप वैताढ्यपर्वतम् ॥ ४८६ ॥
पंचभिः कुलकम् ॥
शिबिरं शबरीगीताविगीतादिजिनस्तवे । उदङ्नितंबे तस्याद्रेर्नरेंद्रः स न्यवेशयत् ॥ ४८७ ॥
ततो नमिविनम्याख्यौ विद्याधरपती प्रति । प्र[3]जिघाय विशामीशो मार्गणं दंडमार्गणम् ॥ ४८८ ॥
आलोक्य मार्गणं तं च विद्याधरपती वरौ । कोपाटोपसमाविष्टावित्यमंत्रयतां मिथः ॥ ४८९ ॥
द्वीपस्य जंबूद्वीपस्य वर्षेऽत्र भरतेऽधुना । उत्पेदे भरतो हंत प्रथमश्चक्रवर्त्त्ययम् ॥ ४९० ॥
असावृषभकूटाद्रौ चंद्रबिंब इव स्वयम् । नामधेयं लिखित्वा स्वं वलितोऽत्र समाययौ ॥ ४९१ ॥
आरोहक इवेभस्य वैताढ्यस्याऽस्य भूभृतः । पार्श्वे कृ[5]तपदोस्त्येष भूपतिर्भुजगर्वितः ॥ ४९२ ॥
तदेष जि[6]तकाशी सन्नस्मत्तोपि जिघृक्षति । मन्ये दंडं तदुद्दंडं चिक्षेपास्मासु सायकं ॥ ४९३ ॥
तावन्योऽन्यमुदित्वैवमुत्थाय समरोन्मुखौ । प्रतस्थाते गिरिप्रस्थं स्थग[7]यंतौ निजैर्बलैः ॥ ४९४ ॥
तत्र द्युसद्बलानीव सौधर्मेशाननाथयोः । आज्ञयाथ तयोर्विद्याधरानीकान्युपाययुः ॥ ४९५ ॥
तेषामुच्चैः किलकिलारावैर्वैताढ्यपर्वतः । जहासेव जगर्जेव पुस्फोटेव समंततः ॥ ४९६ ॥
विद्याधरेंद्रभृतकाः कलधौतमयान् पृथून् । दुंदुभीन्वादयामासुर्वैताढ्यस्येव कंदरान् ॥ ४९७ ॥

---

१ नराद्वैत नरमयं । २ शबरीभिर्भिल्लस्त्रीभिर्गीतः अविगीतोऽनिन्द्यः आदिजिनस्तवो यस्मिन् स तस्मिन् । ३ प्रेरयामास । ४ दण्डयाचक । ५ कृतस्थानः । ६ जयवान् । ७ आच्छादयन्तौ । ८ देवसैन्यानि इव । ९ भृतका. सेवकाः ।

ऋषभस्वामिनो भृत्यौ पुरावामधुना तु ते । सेवावृत्तिर्न लज्जायै स्वामिवत्स्वामिनंदने ॥ ५१३ ॥
याम्योदग्भरतार्द्धांतर्वर्त्तिवैताढ्यपार्श्वयोः । दुर्गपालाविवेहावां स्थास्यावः शासनेन ते ॥ ५१४ ॥
इत्यस्य वचनस्यांते विनम्य विनमिर्नृपः । विदधे दित्समानोपि[1] यियाचिषुरिवांजलिम्[2] ॥ ५१५ ॥
समचतुरश्राकारां सूत्रं दत्त्वेव निर्मिताम् । त्रैलोक्यवर्त्तिमाणिक्यतेजःपुंजमयीमिव ॥ ५१६ ॥
यौवनेन नखैः केशैः श्रीमद्भिः सर्वदास्थितैः । विराजमानामत्यंतं कृतज्ञैरिव सेवकैः ॥ ५१७ ॥
सर्वामयोपशमनीं[3] वल्ल्यां[4] दिव्यामिवौषधीम् । यथाकामीनशीतोष्णसंस्पर्शां[5] दिव्यवारिवत् ॥ ५१८ ॥
त्रिषु[6] श्यामां त्रिषु[7] श्वेतां त्रिषु[8] ताम्रां त्रिषून्नताम्[9] । त्रिगंभीरां[10] त्रिविस्तीर्णां[11] त्र्यायतां[12] त्रिकृशीयसीम्[13] ॥ ५१९ ॥
जयंतीं केशपाशेन कलापान् प्रचलाकिनाम्[14] । पराभवंतीं भालेन पक्षमध्येंदुरूपाकरम्[15] ॥ ५२० ॥
रतिप्रीत्योरिव क्रीडादीर्घिके दधतीं दृशौ । नासां च भाले लावण्यजलधारामिवायताम् ॥ ५२१ ॥
कपोलाभ्यां नवस्वर्णादर्शाभ्यामिव शोभिताम् । दोलाभ्यामिव कर्णाभ्यां लग्नाभ्यामंसदेशयोः ॥ ५२२ ॥
बिभ्राणामधरौ युग्मजातबिंबविडंबिनौ । दंतांश्च वज्रशकलश्रेणिशोभाभिभावकान् ॥ ५२३ ॥
बिभ्राणां मध्यमिव च त्रिरेखं कंठकंदलम् । भुजे च नलिनीनालसरले बिसकोमले ॥ ५२४ ॥
कुचौ दधानां कामस्य कल्याणकलशाविव । स्तनोपहृतबाहुल्यमिव मध्यं च पेलवम् ॥ ५२५ ॥

---

१ दातुमिच्छन्नपि । २ याचितुमिच्छन् । ३ सर्वरोगोपशमनीं । ४ अतिबला । ५ यथेच्छशीतोष्णसस्पर्शा । ६ केशादिषु । ७ देहादिषु । ८ करतलादिषु । ९ स्तनादिषु । १० नाभ्यादिषु । ११ नितम्बादिषु ।१२ लोचनादिषु । १३ उदरादिषु । १४ मयूराणाम् । १५ अष्टमीचन्द्र ।

बिंबोष्ठीं वह्निनेत्राणां वन्दिनीं कमलाश्रयाम्। रोमाली च नाभिवापीतीरदूर्वावलीमिव ॥ ५२६ ॥

वहंतीं सरिदावर्त्तसनाभि नाभिमंडलम्। रोमालीं च नाभिवापीतीरदूर्वावलीमिव ॥ ५२६ ॥
वहंतीं सरिदावर्त्त[1]सनाभि नाभिमंडलम्। दोलासुवर्णस्तंभाभ्यामिवोरुभ्यां च राजिताम् ॥ ५२७ ॥
नितंबेन विशालेन तल्पेनेव मनोभुवः। पाणिभ्यामिव पादाभ्यां पंकजानि निकुर्वतीं[3] ॥ ५२८ ॥
जंघाभ्यामेणिकाजंघे[2] अधरीकुर्वतीतराम्। नखै रत्नै रोचमानै रत्नाचलतटीमिव ॥ ५२९ ॥
पाणिपादांगुलिदलैर्वल्ली पल्लवितामिव। चलन्मृदुमरुज्जातोत्कलिकाभिरिवापगाम्[4] ॥ ५३० ॥
शोभमानां च वासोभिर्विशालस्वच्छकोमलैः। भूषयंतीं भूषणानि रत्नस्वर्णमयान्यपि ॥ ५३१ ॥
मनोरमैरवयवैः स्वच्छकांतितरंगितैः। संचरच्चामराभ्यां च हंसाभ्यामिव पद्मिनीम् ॥ ५३२ ॥
पृष्ठतश्छत्रधारिण्या छाययेव निषेविताम्। सहस्रशो वयस्याभिः परितः परिवारिताम् ॥ ५३३ ॥
अप्सरोभिः श्रियमिवापगाभिर्जाह्नवीमिव। राज्ञे विश्राणयामास[5] स्थिरीभूतामिव श्रियम् ॥ ५३४ ॥
नाम्ना सुभद्रां स्त्रीरत्नं स स्वां दुहितरं ततः। विंशत्या कुलकं ॥

गृहागते स्वामिनि हि किमदेयं महात्मनाम् ॥ ५३५ ॥
महामूल्यानि रत्नानि भूभुजे नमिरप्यदात्। विरक्तावृषभेशांघ्रिमूले जग्रहतुर्व्रतम् ॥ ५३६ ॥
अथ राज्ञा विसृष्टौ तौ राज्यान्यारोप्य सूनुषु। गच्छन् सोऽमंदतेजस्कः प्राप मंदाकिनीतटम् ॥ ५३७ ॥
ततोपि चलितवतश्चक्ररत्नस्य पृष्ठतः। सैन्यान्यावासयामास वसुमत्येकवासवः[6] ॥ ५३८ ॥
नात्यासन्ने नातिदूरे जाह्नवीसदनस्य सः।

१ नदीजलभ्रमसदृशं। २ मृगीजंघे। ३ तिरस्कुर्वती। ४ चलन्मृदुपवनजातलहरीभिः। ५ विश्राणयामास ददौ। श्रणु दाने इति धातोर्लिटि रूपम्। ६ पृथ्व्यामेक इन्द्रः।

गंगां सिंधुवदुत्तीर्य नृपादेशाच्चमूपतिः । सुषेणः साधयामास गांगमुत्तरनिष्कुटम् ॥ ५३९ ॥
ततः सोऽष्टमभक्तेन गंगादेवीमसाधयत् । उपचारः समर्थानां सद्यो भवति सिद्धये ॥ ५४० ॥
राज्ञे विश्राणयामास रत्नसिंहासनद्वयम् । अष्टोत्तरं रत्नकुंभसहस्रं च सरिद्वरा[1] ॥ ५४१ ॥
भरतं रूपलावण्यकिंकरीकृतमन्मथम् । तत्रावलोक्य गंगापि प्राप क्षोभमयीं दशाम् ॥ ५४२ ॥
विराजमाना सर्वांगं मुक्तामयविभूषणैः । वदनेंदोरनुगतैस्तारैस्तारागणैरिव ॥ ५४३ ॥
वस्त्राणि कदलीगर्भत्वक्सगर्भाणि[2] बिभ्रती । स्वप्रवाहपयांसीव तद्रूपपरिणामतः ॥ ५४४ ॥
रोमांचकंचुकोदंचत्कुचस्फुटितकंचुका । स्वयंवरस्रजमिव क्षिपंती धवलां दृशम् ॥ ५४५ ॥
प्रेमगद्गदया वाचा गाढमभ्यर्थ्य पार्थिवम् । रिरंसमाना[3] सानैषीद्देवी रतिनिकेतनम्[4] ॥ ५४६ ॥

चतुर्भिः कलापकम् ॥

भुंजानो विविधान् भोगांस्तत्र राजा तया सह । एकाहमिव[5] वर्षाणां सहस्रं सोत्यवाहयत् ॥ ५४७ ॥
कथंचिदपि संबोध्य सोनुज्ञाप्य च जाह्नवीम् । खंडप्रपाताभिमुखं चचाल प्रबलैर्बलैः ॥ ५४८ ॥
गुहां खंडप्रपाताख्यामखंडितपराक्रमः । ततः स्थानान्नृपः प्राप केशरीव वनाद्वनम् ॥ ५४९ ॥
अथ खंडप्रपाताया गुहायाः सोपि दूरतः । निवेशयामास बलं बलेनातिमहाबलः ॥ ५५० ॥
तत्र देवं नाट्यमालं कृत्वा मनसि भूपतिः । चक्रेऽष्टमतपोऽचालीत्तस्य देवस्य चासनम् ॥ ५५१ ॥
स ज्ञात्वाऽवधिना तत्रायातं भरतचक्रिणम् । उपायनैरुत्तमर्णमधमर्ण इवाययौ ॥ ५५२ ॥

१ गङ्गा । २ कदलीगर्भत्वक्समानानि । ३ रन्तुमिच्छन्ती । ४ सभोगस्थान । ५ एकदिनमिव ।

षट्खंडक्ष्माभूषणस्य स देवो भूरिभक्तिभाक् । भूषणान्यर्पयामास सेवां च प्रत्यपद्यत ॥ ५५३ ॥
कृतनाट्यं नटमिव नाट्यमालसुरं ततः । प्रसादपूर्वमुर्वीशो विससर्ज विवेकयुक् ॥ ५५४ ॥
पारणं विदधे भूपस्तस्य चाष्टाह्निकोत्सवम् । सुषेणं चादिशत्खंडप्रपातोद्घाट्यतामिति ॥ ५५५ ॥
नाट्यमालं चमूनाथः कृत्वा मनसि मंत्रवत् । चक्रेऽष्टममग्रहीच्च पौषधं पौषधौकसि ॥ ५५६ ॥
निष्क्रम्य पौषधागारादष्टमांते चमूपतिः । प्रतिष्ठायामिवाचार्यवर्यो बलिविधिं व्यधात् ॥ ५५७ ॥
ततश्च विहितप्रायश्चित्तकौतुकमंगलः । महार्घ्यस्वल्पनेपथ्योऽभूद्धूपदहनं दधत् ॥ ५५८ ॥
खंडप्रपातां स ययावालोकेऽपि ननाम च । आनर्च तत्कपाटे च लिलेख चाष्टमंगलीम् ॥ ५५९ ॥
पदान्युपेत्य सप्ताष्ट कपाटोद्घाटनाय सः । उपाददे दंडरत्नं कांचिनीमिव कुंचिकाम् ॥ ५६० ॥
तेनाहतं च दंडेन तत्कपाटद्वयं क्षणात् । व्यघटिष्टांशुमद्रश्मिस्पृष्टपंकजकोशवत् ॥ ५६१ ॥
आरूढः करिणः स्कंधं कुंभदेशे च दक्षिणे । मणिरत्नं निवेश्योच्चैस्तां विवेश गुहां नृपः ॥ ५६२ ॥
अन्वीयमानः सैन्येन भरतस्तिमिरच्छिदे । काकिण्या पूर्ववत्तत्र मंडलान्यालिखन् ययौ ॥ ५६३ ॥
निःसरंत्यौ गुहाप्रत्यग्भित्तेः प्राग्भित्तिमध्यतः । भूत्वा मिलंत्यौ जाह्नव्या सख्या सख्याविवान्वितः ५६४
ते उन्मग्नानिमग्नाख्ये निम्नगे प्राप भूपतिः । प्राग्वच्च पद्यया सद्यो ललंघे सह सेनया ॥ ५६५ ॥ युग्मं ॥
तद्गुहादक्षिणद्वारं स्वयमुज्जघटे क्षणात् । सैन्यशल्यातुरेणेव वैताढ्येनाद्रिणेरितम् ॥ ५६६ ॥
निर्ययौ तद्गुहामध्यात्केसरीव नरेश्वरः । स्कंधावारं च निदधे गांगे रोधसि पश्चिमे ॥ ५६७ ॥

१ पौषधगृहात् । २ सूर्यरश्मिस्पृष्टकमलकोशवत् । ३ मार्गेण ।

उद्दिश्य च निधीन् पृथ्वीपतिश्चक्रेऽष्टमं तपः । प्राक्तपोऽर्जितलब्धीनामागमे मार्गदर्शकम् ॥ ५६८ ॥
अष्टमांते तमन्येद्युर्निधयो नव विश्रुताः । सदा यक्षसहस्रेण ते प्रत्येकमधिष्ठिताः ॥ ५६९ ॥
नैसर्पः पांडुकश्चाथ पिंगलः सर्वरत्नकः । महापद्मः कालमहाकालौ माणवशंखकौ ॥ ५७० ॥
तेऽष्टचक्रप्रतिष्ठाना[1] उत्सेधे चाष्टयोजनाः । नवयोजनविस्तीर्णा दैर्घ्ये द्वादशयोजनी ॥ ५७१ ॥
वैडूर्यमणिकपाटस्थगितवदनाः[2] समाः । कांचना रत्नसंपूर्णाश्चक्रचंद्रार्कलांछना ॥ ५७२ ॥ युग्मं ॥
तेषामेवाभिधानैस्तु तदधिष्ठायकाः सुराः । पल्योपमायुषो नागकुमारास्तन्निवासिनः ॥ ५७३ ॥
स्कंधावारपुरग्रामाकर[3]द्रोणमुखौकसाम् । मडंब[4]पत्तनानां च नैसर्पाद्विनिवेशनम् ॥ ५७४ ॥
मानोन्मानप्रमाणानां सर्वस्य गणितस्य च । धान्यानामथ बीजानां संभवः पांडुकान्निधेः ॥ ५७५ ॥
नराणामथ नारीणां हस्तिनां वाजिनामपि । सर्वोऽप्याभरणविधिर्निधेर्भवति पिंगलात् ॥ ५७६ ॥
एकेंद्रियाणि सप्तापि सप्त पंचेंद्रियाणि च । चक्रिरत्नानि जायंते सर्वरत्नान्निधे निधौ ॥ ५७७ ॥
वस्त्राणां सर्वभक्तीनां शुद्धानां रागिणामपि । संजायते समुत्पत्तिर्महापद्मान्महानिधेः ॥ ५७८ ॥
भविष्यद्भूतयोर्ज्ञानं वत्सरांस्त्रीन् सतोपि च । कृष्यादीनि च कर्माणि शिल्पान्यपि च कालतः ॥ ५७९॥
प्रवालरजतस्वर्णशिलामुक्ताफलायसाम्[5] । तथा लोहाद्याकराणां महाकाले समुद्भवः ॥ ५८० ॥
योधानामायुधानां च सन्नाहानां च संपदः । युद्धनीतिरशेषापि दंडनीतिश्च माणवात् ॥ ५८१ ॥

---

१ अष्टचक्रस्थिताः । २ वैडूर्यमणिकपाटैः स्थगितान्याच्छादितानि वदनानि येषा ते । ३ आकरः खनिः, द्रोणोऽल्पजनस्थान । ४ मडनाख्यो निवेशविशेषः । ५ अयो लोहः ।

चतुर्दशी काव्यनिष्पत्तिर्नाट्यनाटकयोर्विधेः । तूर्याणामखिलाना चोत्पत्तिः शंखान्महानिधेः ॥ ५८२ ॥
ऊचुस्ते च वयं गंगामुखमागधवासिनः । आगतास्त्वां महाभाग भवद्भाग्यैर्वशीकृताः ॥ ५८३ ॥
यथाकाममविश्रांतमुपभुंक्ष्व प्रयच्छत । अपि क्षीयेत पाथो[1]ऽब्धौ नतु क्षीयामहे वयम् ॥ ५८४ ॥
वशं यातेषु निधिषु नृपो व्यधित पारणम् । अष्टाह्निकोत्सवं तेषां निर्विकारश्चकार च ॥ ५८५ ॥
नृपाज्ञया सुषेणोपि गंगादक्षिणनिष्कुटम् । पल्ली[2]वल्लीलया सर्वं साधयित्वा समाययौ ॥ ५८६ ॥
तत्राऽस्थाल्लीलयाक्रांतपूर्वापरपयोनिधिः । द्वितीय इव वैताढ्यो बहुकालमिलापतिः ॥ ५८७ ॥
अन्येद्युः साधिताशेषभरतं भरतेशितुः । अयोध्याभिमुखं चक्रमचालीद्गगनस्थितम् ॥ ५८८ ॥
भरतोऽपि कृतस्नानो विधाय बलिकर्म च । नेपथ्य[3]भृत् कृतप्रायश्चित्तकौतुकमंगलः ॥ ५८९ ॥
कुंजराधिपतिस्कंधमारूढो देवराडिव । नवभिर्निधिभिः पुष्टकोशः कल्पद्रुमैरिव ॥ ५९० ॥
निरंतरं महारत्नैश्चतुर्दशभिरावृतः । सुमंगलायाः स्वप्नानां पृथग्भूतैः फलैरिव ॥ ५९१ ॥
राज्ञां कुलश्रीभिरिवोढाभिर्दुहितृभिः क्रमात् । द्वात्रिंशतासहस्रैश्चासूर्य[4]पश्याभिरन्वितः ॥ ५९२ ॥
तावद्भिर्जनपदभूस्त्रीसहस्रैश्च सुंदरैः । अप्सरोभिरिवात्यंतचारुभिः परिशोभितः ॥ ५९३ ॥
श्रितो द्वात्रिंशता राजसहस्रैः पदिकैरिव । चतुरशीत्येभलक्षैर्विंध्याद्रिभिरिव राजितः ॥ ५९४ ॥
अश्वै रथैश्च तावद्भिर्विश्वतोप्याहृतैरिव । वृतो भटैः षण्णवत्या कोटिभिश्छन्नभूतले ॥ ५९५ ॥

---

१ पाथो जलं । २ पल्ली घोषः । ३ नेपथ्यभृत् वेषभृत् । ४ न सूर्यं पश्यन्तीभिः सदान्तःपुरस्थितत्वात् ।

आद्यप्रयाणदिवसादतिक्रांतेषु सत्स्वथ । षष्टौ वर्षसहस्रेषु चक्रमार्गानुगोऽचलत् ॥ ५९६ ॥

अष्टभिः कुलकम् ।

सैन्योद्भूतरजःपूरपरिस्पर्शमलीमसान् । खेचरानपि कुर्वाणः कृतभूलुठनानिव ॥ ५९७ ॥
व्यंतरान् भवनपतींश्चापि भूमध्यवासिनः । सैन्यभारान्महीभेदशंकोत्पादेन भापयन् ॥ ५९८ ॥
गोकुले गोकुले गोपसुदृशां विकसद्दृशाम् । गृह्णन् हैयंगवीनार्थ[1]मनर्घ्यमिव भक्तितः ॥ ५९९ ॥
कुंभिकुंभस्थलोद्भूतमौक्तिकप्रभृतीनिव । प्राभृतानि किरातानामाददानो वने वने ॥ ६०० ॥
पर्वते पर्वते भूपैः पार्वतीयैः पुरो धृतम् । रत्नस्वर्णखनीसारं स्वीकुर्वन्नुर्व[2]नेकशः ॥ ६०१
ग्रामे ग्रामे ग्रामवृद्धान् सोत्कंठान् बांधवानिव । अनुगृह्णन् सप्रसादमात्तानात्तै[3]रुपायनैः ॥ ६०२ ॥
निजाज्ञायष्टिनोग्रेण विष्वक् प्रसृमरा[4]नपि । ग्रामेभ्यः सैनिकान् रक्षन् क्षेत्रेभ्यो गा इवाभितः ६०३ ॥
वृक्षाधिरूढान् प्लवगानिव ग्रामीणदारकान् । सहर्षं पश्यतः पश्यन् जनकस्तनयानिव ॥ ६०४ ॥
धान्यैर्धनैर्जीवधनैः सर्वदा निरुपद्रवैः । ग्रामाणां संपदं पश्यन् निजनीतिलताफलम् ॥ ६०५ ॥
आपगाः[5] पंकिलीकुर्वन् सरांसि परिशोषन् । वापीः कूपांश्च कुर्वाणः पातालशुषिरोपमान्[6] ॥ ६०६ ॥
मलयानिलवल्लोकः सुखं गच्छन् शनैः शनैः । विनीतां प्रापदुर्वीशो दुर्विनीतारिशासनः ॥ ६०७ ॥

एकादशभिः कुलकम् ॥

अविदूरे विनीतायाः स्कंधावारं न्यवेशयत् । तस्याः सहोदरमिवातिथीभूतं महीपतिः ॥ ६०८ ॥

---

१ नवनीतार्थं । २ उरु महत् । ३ गृहीतागृहीतैः । ४ प्रसृतान् । ५ आपगा नदीः । ६ पातालच्छिद्रोपमान् ।

कृत्वा मनसि तां राजधानीं राजशिरोमणिः । चकार निरुपसर्गप्रत्ययं सोऽष्टमं तपः ॥ ६०९ ॥
निष्क्रम्याष्टमभक्तांते पौषधागारतो नृपः । पारणं विदधे दिव्यरसवत्या नृपैः सह ॥ ६१० ॥
अयोध्यायां त्वबध्यंत तोरणानि पदे पदे । दिगंतरागतश्रीणां क्रीडादोला[1] इवोच्चकैः ॥ ६११ ॥
चक्रुः पौराः पथि पथि सेकं[2] कुंकुमवारिभिः । गंधांबुवृष्टिभिरिव स्वर्गिणो जिनजन्मनि ॥ ६१२ ॥
मंचान् विरचयामासुः स्वर्णस्तंभैः पुरीसदः । अनेकीभूय निधिभिः पुरोभूयागतैरिव ॥ ६१३ ॥
अभ्रानुभयतो मार्गे मंचास्तेऽन्योन्यसंमुखाः । स्वर्णाद्रय इव कुरुष्वभितो ह्रदपंचकम्[3] ॥ ६१४ ॥
प्रतिमंचमजायंत रत्नभाजनतोरणाः । प्राचीनबर्हि[4]कोदंडश्रेणिशोभाभिभाविनः ॥ ६१५ ॥
समं वीणामृदंगादिवादकैर्गायनीजनः । विमानेष्विव गंधर्वानीकं मंचेष्ववास्थित ॥ ६१६ ॥
मुक्तावचूला मंचेषु बभुरुल्लोचलंबिनः । कांतिस्तबकिताकाशा वासागारेष्विव श्रियः ॥ ६१७ ॥
प्रमोदमानपुर्देव्या हसितैरिव चामरैः । दिवो मंभनभंगीभिरिव चित्रककर्मभिः ॥ ६१८ ॥
कौतुकादागतैर्धिष्ण्यैरिवः कांचनदर्पणैः । खेचराणां हस्तशाटै[5]रिव वासोभिरुत्कटैः ॥ ६१९ ॥
विचित्रमणिमालाभिर्मेखलाभिरिव श्रियाम् । उत्तंभितेषु स्तंभेषु हट्टशोभां व्यधुर्जनाः ॥ ६२० ॥
त्रिभिर्विशेषकम् ॥
प्रक्वणत्किंकिणीमालाः पताकाश्च बबंधिरे । दर्शयंत्यः शरत्कालं कलनिर्ह्रादि[6]सारसम् ॥ ६२१ ॥

---

१ क्रीडाप्रेङ्खाः । २ सेकं सिञ्चनम् । ३ नदपञ्चकम् । ४ प्राचीनबर्हिरिन्द्रः । ५ हस्तपटकैः । ६ कलनिर्ह्रादा मधुरशब्दाः सारसा. यस्मिन् स तम् ।

प्रत्यहं प्रतिगेहं च यक्षकर्दमगोमयैः । क्षिप्तेष्वदादंगणेषु मौक्तिकस्वस्तिकान् जनः ॥ ६२२ ॥
अपूर्यतागरुक्षोदैर्धूपंघट्यः पदे पदे । उच्चैर्धूमायमाना द्यामपि धूपायितुं ध्रुवम् ॥ ६२३ ॥
प्रवेष्टुकामो नगरीमारुरोह शुभे क्षणे । गजं मेघमिवोर्जं चक्री भूमेघवाहनः ॥ ६२४ ॥
एकेनैवातपत्रेण कर्पूरक्षोदपांडुना । हिमांशुमंडलेनेव गगनं परिशोभयन् ॥ ६२५ ॥
संक्षिप्य स्वं वपुर्भक्त्या चामरद्वितयच्छलात् । अभ्युपेत्य समं गंगासिंधुभ्यामिव सेवितः ॥ ६२६ ॥
वासोभिः शोभितः शुभ्रैः सुसूक्ष्मैर्मसृणैर्घनैः । स्फाटिकाद्रिशिलासारं त्वचयित्वेव निर्मितैः ॥ ६२७ ॥
प्रेम्णा रत्नप्रभाभूम्या निजसारैरिवार्पितैः । विचित्ररत्नालंकारैः सर्वांगीणमलंकृतः ॥ ६२८ ॥
नृपैराबद्धमाणिक्यमुकुटैः परिवारितः । फणामणिधरैर्नागकुमारैरिव नागराट् ॥ ६२९ ॥
वैतालिकैर्जयजयारावपूर्वं प्रमोदिभिः । कीर्त्यमानाद्भुतगुणः सुत्रामा चारणैरिव ॥ ६३० ॥
मांगल्यतूर्यनिर्घोषप्रतिशब्दापदेशतः । रोदसीभ्यामपि भृशं कृतमांगलिकध्वनिः ॥ ६३१ ॥
तेजोबिडौजा नृपतिर्भांडागारमिवौजसाम् । यंतेन कुंजरं किंचित्प्रेरयन् प्रचचाल सः ॥ ६३२ ॥

अष्टभिः कुलकम् ॥

अवतीर्णं दिव इव भूमध्यादिव चोत्थितम् । चिरायातं नृपं द्रष्टुं ग्रामादिभ्योऽभ्यगाज्जनः ॥ ६३३ ॥
सा राज्ञः सकला सेना लोकश्च मिलितावुभौ । मर्त्यलोकः समग्रोऽपि पिंडीभूत इवैकतः ॥ ६३४ ॥

---

१ अगरुचूर्णैः । २ भूशक्रः । ३ मसृणैः कोमलैः । ४ खण्डयित्वा । ५ सर्वाङ्गेषु । ६ सुत्रामा इन्द्रः । ७ अपदेशतः व्याजतः । ८ तेजसा इन्द्रः । ९ ताडनविशेषेण ।

नैरंतर्यादनीकानां लोकानां चाभ्युपेयुषाम् । मुक्तस्तिलोपि हि तदा न पपात महीतले ॥ ६३५ ॥
स्तूयमानो मुदोत्तालैः कैश्चिद्वैतालिकैरिव । वीज्यमानोंचलैः कैश्चिच्चंचलैश्चामरैरिव ॥ ६३६ ॥
भालस्थांजलिभिः कैश्चिद्वंद्यमानोंऽशुमानिव । अर्प्यमाणफलपुष्पः कैश्चिदारामिकैरिव ॥ ६३७ ॥
प्रणम्यमानः स्वकुलदेवतेव च कैश्चन । कैश्चित्प्रदीयमानाशीर्गोत्रवृद्धाजनैरिव ॥ ६३८ ॥
प्रविवेश विशामीशश्चतुर्द्वारां पुरीं स ताम् । पूर्वद्वारेण समवसरणं नाभिभूरिव ॥ ६३९ ॥
चतुर्भिः कलापकम् ॥

प्रत्येकमपि मंचेषु संगीतानि तदाभवन् । युगपल्लग्नघटिकातूर्यनादा इवोच्चकैः ॥ ६४० ॥
पुरो गच्छति भूपाले राजमार्गापणस्थिताः । मुदिताः पौरसुदृशो लाजान् दृश इवाक्षिपन् ॥ ६४१ ॥
पौरप्रक्षिप्तकुसुमदामभिः पिहितोऽभितः । सोऽभूत्पुष्परथप्रायो राजकुंजरकुंजरः ॥ ६४२ ॥
शनैः शनै राजपथे प्रययौ जगतीपतिः । उत्कंठितानां लोकानामकुंठोत्कंठया युतः ॥ ६४३ ॥
नाजीगणन् गजभयमभ्यर्णेऽभ्येत्य भूभुजे । फलादीन्यार्पयन् पौराः प्रमोदो बलवान् खलु ॥ ६४४ ॥
ताडयन् सृणिदंडेन मध्येकुंभस्थलं नृपः । मंचयोर्मंचयोरंतः स्थिरीचक्रे मतंगजम् ॥ ६४५ ॥
मंचानामुभयेषां वाऽग्रस्थाः प्रवरयोषितः । कर्पूरारात्रिकं चक्रुर्युगपच्चक्रवर्त्तिनः ॥ ६४६ ॥
भूपतिः पार्श्वयोर्भ्राम्यज्ज्वलदारात्रिकस्तदा । बभारोभयपार्श्वस्थार्कैन्दुमेरुगिरिश्रियम् ॥ ६४७ ॥
स्थालान्युत्क्षिप्य पूर्णानि मौक्तिकैरक्षतैरिव । आपणाग्रे स्थितान् दृष्ट्यालिलिंगेव स वाणिजान् ॥६४८॥

१ बन्दिभिरिव । २ लाजान् भ्रष्टव्रीहीन् । ३ राजकुञ्जरस्य कुञ्जरो हस्ती । ४ अङ्कुशदण्डेन । ५ हट्टाग्रे ।

मार्गासन्नेषु हर्म्येषु द्वारस्थकुलयोषिताम् । मंगलानि प्रतीयेष[1] स्वसॄणा[2]मिव पार्थिवः ॥ ६४९ ॥
दिदृक्षया[3]ंतिकीभूतान् जनान् परिजनानिव । वेत्रिभ्योऽरक्षदुत्क्षिप्ताभयप्रदकरो नृपः ॥ ६५० ॥
अग्रभूमावुन्नयतो बद्धाभ्यामिति बंधुरं । सिंधुराभ्यां[4] राजलक्ष्मीक्रीडाद्रिभ्यामिवोच्चकैः ॥ ६५१ ॥
द्वारेणोन्नयतः स्वर्णकुंभाभ्यामिति शोभिना । स्रोतसेव रथांगाभ्यां विशालेन विराजितम् ॥ ६५२ ॥
माकंददलपूर्णेन तोरणेनातिहारिणा । इंद्रनीलमयग्रीवाभरणेनेव भूषितम् ॥ ६५३ ॥
क्वचिन्मुक्ताकणगणैः क्वचित्कर्पूरपांशुभिः । क्वचिच्च चंद्रमणिभिः कृतस्वस्तिकमंगलं ॥ ६५४ ॥
क्वचिच्च चीनवासोभिर्दुकूलवसनैः क्वचित् । देवदूष्यैरपि क्वापि पताकामालधारिणम् ॥ ६५५ ॥
क्वचित्कर्पूरपानीयैः पुष्पद्रुतरसैः क्वचित् । क्वचिन्मदगजांभोभिरजिरे कृतसेचनम् ॥ ६५६ ॥
विश्रांतं पूषाण[6]मिव सुवर्णकलशच्छलात् । सप्तभूमं भूमिपाल पित्र्यं प्रासादमासदत् ॥ ६५७ ॥
सप्तभिः कुलकम् ॥

तस्यांगणा[5]ग्रवलभीवेद्यां पादं निवेशयन् । उत्ततार द्विपाद्वेत्रिदत्तहस्तस्ततो नृपः ॥ ६५८ ॥
आचार्य इव संपूज्य स्वाधिष्ठायकदेवताः । ताः षोडशसहस्राणि व्यसृजज्जगतीपतिः ॥ ६५९ ॥
तद्द्वात्रिंशतिं राजसहस्राणि चमूपतिम् । पुरोहितं गृहपतिं वर्द्धकिं विससर्ज सः ॥ ६६० ॥
सूदां[7]श्च सत्रिषष्टीनि शतानि त्रीणि भूपतिः । स्वस्थानायादिशद्दृष्ट्यालाना[8]येव मतंगजान् ॥ ६६१ ॥

१ जग्राह । २ स्वसृणा भगिनीना । ३ द्रष्टुमिच्छया समीपस्थितान् । ४ सिन्धुराभ्या गजाभ्यां । ५ अङ्गणे । ६ पूषाणं सूर्यं । ७ सूदान् पाचकान् । ८ आलानाय गजबन्धनस्तम्भाय ।

श्रेष्ठिनोऽष्टादशश्रेणिप्रश्रेणीदुर्गपालकान् । व्यसृजत्सार्थवाहानप्युत्सवांतेऽतिथीनिव ॥ ६६२ ॥
शक्रः शच्येव सहितः स्त्रीरत्नेन सुभद्रया । द्वात्रिंशता सहस्रैश्च राज्ञीभी राजजन्मभिः ॥ ६६३ ॥
तावतीभिर्जनपदाग्रणीकन्याभिरावृतः । प्रत्येकं द्वात्रिंशत्पात्रैस्तावद्भिर्नाटकैरपि ॥ ६६४ ॥
मणिरत्नशिलाश्रेणिविश्राणितदृगुत्सवम् । प्रासादं प्राविशद्भूपः कैलासमिव यक्षराट् ॥ ६६५ ॥
त्रिभिर्विशेषकम् ॥

तत्र च प्राङ्मुखः सिंहासने स्थित्वा क्षणं नृपः । कृत्वा च संकथाः काश्चिद्ययौ स्नाननिकेतनम् ॥ ६६६ ॥
सरसीव द्विपस्तत्र कृत्वा स्नानं नरेश्वरः । समं परिजनैश्चक्रे सुरसाहारभोजनम् ॥ ६६७ ॥
तैर्नाटकैर्नवरसैः संगीतैश्च मनोरमैः । निनाय कालं कमपि योगैर्योगीव भूपतिः ॥ ६६८ ॥
तं च विज्ञापयामासुर्भक्त्या सुरनरा इति । सविद्याधरराजेयं षट्खंडाऽसाधि भूस्त्वया ॥ ६६९ ॥
अस्मांस्तदनुमन्यस्व शतमन्युपराक्रम । महाराज्याभिषेकं ते स्वच्छंदं कुर्महे यथा ॥ ६७० ॥ युग्मम् ॥
राज्ञा तथेत्यनुज्ञाताः सुराः पुर्या बहिर्व्यधुः । सुधर्मायाः खंडमिव पूर्वोदग्दिशि मंडपम् ॥ ६७१ ॥
ह्रदेभ्यो ह्रदिनीभ्यश्च ह्रदिनीनाथतोपि च । तीर्थेभ्यश्चाहरन्नीरमौषधीर्मृत्तिकाश्च ते ॥ ६७२ ॥
गत्वा पौषधशालायां राजाऽष्टमतपोऽग्रहीत् । राज्यं तपसाप्तमपि तपसैव हि नंदति ॥ ६७३ ॥
राजाष्टमे परिणमत्यंतःपुरवृतो ययौ । वारणेन परीवारयुतस्तं दिव्यमंडपम् ॥ ६७४ ॥

---

१ आघूर्णकान् । २ यक्षराट् कुबेरः । ३ विद्याधरराजसहिता । ४ हे इन्द्रपराक्रम । ५ सुधर्माख्यादेवसभायाः । ६ ईशानदिशि । ७ नदेभ्यः । ८ नदीभ्यः । ९ समुद्रात् । १० गजेन ।

अंतःपुरेण सह तैर्नाटकैश्च सहस्रशः । भरतः प्रविवेशाभिषेकमंडपमुन्नतम् ॥ ६७५ ॥
स मृगेंद्रासनं तत्र स्नानपीठं तदुच्चकैः । आरुरोह महीनाथः [1]शैलप्रस्थमिव द्विपः ॥ ६७६ ॥
[2]प्राचीपतेरिव प्रीत्या प्राग्दिशोभिमुखस्ततः । रत्नसिंहासने तत्रोपाविशद्भरतेश्वरः ॥ ६७७ ॥
द्वात्रिंशत्सहस्रसंख्या भूपाः कतिपया इव । सुखमारुरुहुः पीठमुदक्सोपानवर्त्मना ॥ ६७८ ॥
चक्रिणो नातिदूरोर्व्यां तस्थुर्भद्रासनेषु ते । बद्धांजलिपुटा देवमिव [3]वंदारवो नृपाः ॥ ६७९ ॥
सेनापतिर्गृहपतिर्वर्द्धकिश्च पुरोहितः । श्रेष्ठ्यादयोप्यारुरुहुर्[4]याम्यसोपानमालया ॥ ६८० ॥
आसनेषु समासीनाः स्वोचितेषु यथाक्रमम् । बद्धांजलिपुटास्तस्थुर्विज्ञीप्सव इव प्रभुं ॥ ६८१ ॥
ततश्च नरदेवस्यादिदेवस्येव वासवाः । आभियोगिकदेवास्तेऽभिषेकाय ढुढौकिरे ॥ ६८२ ॥
स्वाभाविकैर्वैक्रियैश्च पयोगर्भैर्घनैरिव । वदनन्यस्तकमलै [5]रथांगविहगैरिव ॥ ६८३ ॥
पतत्पानीयनादेन तूर्यनादानुवादिभिः । ते रत्नकलशैश्चक्रुरभिषेकं महीपतेः ॥ ६८४ ॥ युग्मम् ॥
तं द्वात्रिंशत्सहस्राणि शुभेऽभिषिषिचुः क्षणे । नृपाः कुंभैर्लुठत्तोयैर्हर्षात्स्वनयनैरिव ॥ ६८५ ॥
ते शिरस्यंजलीन्बध्वा पद्मकोशसहोदरान् । चक्रिणं वर्द्धयामासुर्जय त्वं विजयस्व च ॥ ६८६ ॥
सेनापतिप्रभृतयोऽपरे श्रेष्ठ्यादयश्च तं । अभ्यषिंचन् जलैर्वाक्यैश्चास्तुवंस्तैरिवोज्ज्वलैः ॥ ६८७ ॥
शुचिपक्ष्मलया गंधकाषाय्या [6]सुकुमारया । माणिक्यमिव तस्यांगममृजन्नथ ते भृशम् ॥ ६८८ ॥
गोशीर्षचंदनरसै राज्ञो विलिलिपुश्च ते । कांतिपोषकैरंगं गैरिकैरिव कांचनम् ॥ ६८९ ॥

---

१ गिरिशिखर । २ इन्द्रस्य । ३ वन्दनशीलाः । ४ दक्षिणसोपानमालया । ५ चक्रवाकपक्षिभिः । ६ कोमलया ।

शक्रप्रदत्तमृषभस्वामिनो मुकुटं ततः । मूर्ध्नि मूर्ध्नाभिषेकाग्रेसरस्य निदधुः सुराः ॥ ६९० ॥
ते पर्यधापयन् राज्ञः कर्णयो रत्नकुंडले । चित्रास्वाती इव मुखहिमांशोः पारिपार्श्वगे ॥ ६९१ ॥
तत्कंठे ते न्यधुर्हारं ग्रथितं शूक्तिमौक्तिकैः । अलक्ष्यसूत्रैर्युगपन्मालारूपोऽक्रमैरिव ॥ ६९२ ॥
निवेशयांबभूवे चार्द्धहारस्तैर्नृपोरसि । अलंकरणराजस्य हारस्य युवराडिव ॥ ६९३ ॥
अभ्रकांतःपुटमये इवाछच्छविशालिनी । वाससी देवदूष्ये ते भूभुजः पर्यधापयन् ॥ ६९४ ॥
उद्दामं सुमनोदाम नृपतेः कर्णकंदले । ते प्राक्षिपन्नुरोवेश्मछायावप्रमिव श्रियः ॥ ६९५ ॥
कल्पद्रुम इवानर्घ्यवस्त्रमणिक्यभूषणः । भूपतिर्मंरूयामास स्वःखंरूमिव मंरूपम् ॥ ६९६ ॥
आह्वाय्य वेत्रिपुरुषैः स सर्वपुरुषाग्रणीः । आयुक्तपुरुषानेवमादिदेश विशालधीः ॥ ६९७ ॥
भो यूयं सिंदूरस्कंधमधिरुह्य समंततः । पर्यट्य च प्रतिपथं विनीतां नगरीमिमाम् ॥ ६९८ ॥
[3]अशुल्कामकरादंडाकुंदंरूामविशङ्कयाम् । नित्यप्रमोदां कुरुत वर्षद्वादशकावधि ॥ ६९९ ॥ युग्मम् ॥
तत्तथा तत्क्षणादेव ते चक्रुरधिकारिणः । रत्नं पंचदशं ह्याज्ञा चक्रिणः कार्यसिद्धिषु ॥ ७०० ॥
रत्नसिंहासनात्तस्मादुत्तस्थावथ पार्थिवः । प्रतिबिंबानि तस्यैवान्येप्युत्तस्थुः सहैव हि ॥७०१ ॥
निजागमनमार्गेणोत्ततार भरतेश्वरः । तथान्येप्युत्तरंति स्म स्नानपीठगिरेरिव ॥ ७०२ ॥
स्वप्रतापमिवासह्यमारुह्य वरहस्तिनम् । महीपतिर्महोत्साहः प्रासादमगमन्निजम् ॥७०३ ॥

---

१ नृपाग्रेसरस्य । २ तदाख्ये नक्षत्रे । ३ शुल्क भूपाना क्रयविक्रययोग्यं करद्रव्य तद्रहिता । ४ अकरा अदण्डा अकुदण्डा इति पदत्रयस्य समासः । ५ भयरहितां ।

तत्र स्नानगृहं गत्वा तोयैः स्नात्वा च निर्मलैः । चकाराष्टमभक्तांतपारणं धरणीधवः ॥ ७०४ ॥
अभिषेकोत्सवे वृत्ते तस्मिन् द्वादशवार्षिके ॥ स्नातः कृतबलिः प्रायश्चित्तकौतुकमंगली ॥ ७०५ ॥
गत्वा च बहिरास्थानीमात्मरक्षकदेवताः । ता षोडशसहस्राणि सत्कृत्य व्यसृजन्नृपः ॥ ७०६ ॥ युग्मं ।
ततश्च प्रासादवरारूढो वैषयिकं सुखम् । श्रीगृहे भुंजानोऽस्थाद्विमानस्थ इव शक्रो महीपतिः ॥ ७०७ ॥
चक्रं छत्रमसिर्दंडो रत्नान्येतानि जज्ञिरे । एकेंद्रियाणि चत्वारि तस्यायुध[1]निकेतने ॥ ७०८ ॥
काकिणीचर्ममणयो निधयो नव चाभवन् । श्रीग्रहे श्रीमतस्तस्य माणिक्यानीव रोहणे[2] ॥ ७०९ ॥
सेनापतिर्गृहपतिः पुरोधो[3]वर्द्धकी अपि । चत्वारि नररत्नानि स्वपुर्यां तस्य जज्ञिरे ॥ ७१० ॥
गजाश्वरत्ने वैताढ्यगिरेर्मूले बभूवतुः । उदग्विद्याधरश्रेण्यां स्त्रीरत्नं तूदपद्यत ॥ ७११ ॥
नयनानंददायिन्या मूर्त्या सोम इवाशुभत् । दुःसहेन प्रतापेन भरतो भानुमानिव ॥ ७१२ ॥
अलब्धमध्यः सोंऽभोधिरिव पुंरूपतां[4] गतः । प्राप्तो मनुष्यधर्मेव मनुष्यस्वामितां पुनः ॥ ७१३ ॥
अशोभत महारत्नैः स चतुर्दशभिः सदा । जंबूद्वीप इव गंगासिंधुप्रभृतिसिंधुभिः ॥ ७१४ ॥
पादाधःस्थतया तस्य नवापि निधयोऽनिशम् । हेमाब्जानीव[5] वृषभप्रभोर्विहरतोऽभवन् ॥ ७१५ ॥
सदा षोडशभिर्देवसहस्रैः पारिपार्श्वकैः । अनल्पवेतनक्रीतै[6]रात्मरक्षैरिवावृतः ॥ ७१६ ॥
नृपाणां नृपकन्यानामिव निर्भरभक्तितः । द्वात्रिंशता सहस्रैः स निरंतरमुपास्यत ॥ ७१७ ॥
द्वात्रिंशता सहस्रैः स नाटकानामिवानिशम् । जानपदीनां कन्यानामरंस्तावनिवासवः ॥ ७१८ ॥

१ आयुधशालाया । २ रोहणाचलपर्वते । ३ पुरोधाः पुरोहितः । ४ पुरुष रूपता गतः । ५ सुवर्णकमलानि । ६ बहुमूल्यक्रीतैः ।

स जगत्यामेकभूपः सूपकारवरैरन्नात् । शतैस्त्रिभिस्त्रिषष्ट्यग्रैर्दिनानामिव वत्सरः ॥ ७१९ ॥
श्रेणिप्रश्रेणिभिः सोऽष्टादशभिः पृथिवीतले । प्रावर्तयद्व्यवहारं लिपिभिर्नाभिभूरिव ॥ ७२० ॥
लक्षैश्चतुरशीत्येभैरश्वैरिव रथैरिव । स कोटिभिः षण्णवत्याऽभ्राद्ग्रामैरिव पत्तिभिः ॥ ७२१ ॥
द्वात्रिंशतो जनपदसहस्राणामधीश्वरः । द्वासप्ततेः पुरवरसहस्राणां च स प्रभुः ॥ ७२२ ॥
सहस्रोनद्रोणमुखलक्षस्याधिपतिश्च सः । पत्तनाष्टाचत्वारिंशत्सहस्राणां च सोऽधिभूः ॥ ७२३ ॥
कर्बटानां मडंबानामिव सार्धंवरश्रियाम् । चतुर्विंशतिसहस्रसंख्यातानां स ईशिता ॥ ७२४ ॥
स विंशतिसहस्राणामाकराणां करेश्वरः । तथा खेटसहस्राणां षोडशानां प्रशासिता ॥ ७२५ ॥
चतुर्दशानां संबाधसहस्राणामपि प्रभुः । अधिपोंतरोदकानां स षट्पंचाशतोऽपि च ॥ ७२६ ॥
पंचाशतः कुराज्यानामेकोनायाश्च नायकः । स मध्ये भरतक्षेत्रमन्येषामपि शासिता ॥ ७२७ ॥
विनीतायां स्थितः कुर्वन्नाधिपत्यमखंडितम् । अभिषेकोत्सवप्रांते स्मर्तुं प्रववृते स्वकान् ॥ ७२८ ॥
षष्टिं वर्षसहस्राणि विरहाद्दर्शनोत्सुकान् । अदर्शयन्निजान् राज्ञे नियुक्तपुरुषास्ततः ॥ ७२९ ॥
ततः कृशां ग्रीष्मकालाक्रांतामिव तरंगिणीम् । म्लानां हिमानीसंपर्कवशादिव सरोजिनीम् ॥ ७३० ॥
प्रनष्टरूपलावण्यां हैमनेन्दुकलामिव । पांडुक्षामकपालां च रंभां शुष्कदलामिव ॥ ७३१ ॥
सोदरां बाहुबलिनः सुंदरीं गुणसुंदरः । नामग्राहं स्वपुरुषैर्दर्श्यमानां ददर्श सः ॥७३२॥ त्रिभिर्विशेषकं॥

१ पाचकवरैः २ खेटाः कृषीवलग्रामाः । ३ द्वीपग्रामाणा । ४ एकोनायाः पञ्चाशतः इति अन्वयः । ५ भरतक्षेत्रमध्ये । ६ हेमन्तचन्द्रकलामिव । ७ रम्भा कदली ।

तथाविधां च संप्रेक्ष्य तां परावर्त्तितामिव । सकोपमवनीपालः स्वायुक्तानित्यवोचत ॥ ७३३ ॥
किं कदाप्यस्मदीयेपि सदने नौदनान्यरे । न किं लवणपाथोधौ विद्यंते लवणान्यपि ॥ ७३४ ॥
सूपकारा न किं संति तत्तद्रसवतीविदः । निरादराः किमथवा तर्ह्यमी वृत्तितस्कराः ॥ ७३५ ॥
द्राक्षाखर्जूरमुख्यानि खाद्यान्यपि हि नेह किम् । न हि किं विद्यते स्वर्णमपि स्वर्णशिलोच्चये ॥ ७३६ ॥
किमुद्यानेषु ते वृक्षा बभूवुरवकेशिनः । फलंति तरवः किं हि न नंदनवनेऽपि हि ॥ ७३७ ॥
न वा दुग्धानि धेनूनां घटोध्नीनामपीह किम् । किं नु शुष्कस्तनश्रोताः संजाता कामगव्यपि ॥ ७३८ ॥
अथ भोज्यादिसंपत्सु सतीष्वपि हि सुंदरी । न किंचिदश्नाति यदि तदसावामयाविनी ॥ ७३९ ॥
आमयः कोपि चेदस्याः कायसौष्ठवतस्करः । न किं बभूवुः सर्वेपि कथाशेषा भिषग्वराः ॥ ७४० ॥
यदि वौषधयो दिव्याः प्राप्यंते नास्मदोकसि । तदौषधीविरहितो हिमाद्रिरपि संप्रति ॥ ७४१ ॥
दूये पश्यन्निमां क्षामां दरिद्रतनयामिव । तदहो वैरिभिरिव भवद्भिर्वंचितोस्म्यहम् ॥ ७४२ ॥

अष्टभिः कुलकम् ॥

प्रणम्य भरतं तेपि प्रोचुरेवं नियोगिनः । सर्वमप्यस्ति देवस्य देवेंद्रस्येव सद्मनि ॥ ७४३ ॥
किंतु देवो यदाद्यंगाद्दिग्जयाय तदाद्यसौ । आचामाम्लानि कुरुते प्राणत्राणाय केवलम् ॥ ७४४ ॥
तथा यदैव देवेन प्रव्रजंती न्यषिध्यत । ततःप्रभृत्यसौ तस्थौ भावतः संयतैव हि ॥ ७४५ ॥

१ परावर्त्तितरूपामिव । २ आजीविकाचौराः । ३ अवकेशिनः वन्ध्या निष्फला इतियावत् । ४ घटवत् ऊधः यासा तास्तासा । ५ कामधेनुः । ६ रोगिणी । ७ आमयो रोगः । ८ मृत्युंगताः । ९ वैद्याः । १० यदादि यतःप्रभृति । ११ दीक्षिता ।

कल्याणिनेयि[1] कल्याणि प्रविव्रजिषसीति[2] सा । अनुयुक्ता[3] महीनाथेनैवमेवेत्यवोचत ॥ ७४६ ॥
भरतोप्यन्यधादेवं प्रमादेनार्जवेन वा । अहमस्या इयत्कालं व्रतविघ्नकरोऽभवम् ॥ ७४७ ॥
अपत्यं तातपादानामनुरूपमसौ खलु । असक्तं विषयासक्ता राज्यातृप्ताश्च के वयम् ॥ ७४८ ॥
आयुर्विनश्वरं वार्धिवारिवारतरंगवत् । जानंतोऽपि न जानंति जना विषयगृध्नवः ॥ ७४९ ॥
गत्वरेणायुषाऽनेन[4] मोक्षः साध्येत साधुवत् । मार्गावलोकनमिव विद्युता दृष्टनष्टया ॥ ७५० ॥
यकृच्छकृन्मूत्रमलस्वेदामयमयस्य[5][6] यत् । प्रसाधनं वपुषस्तद्गृहस्रोतोऽधिवासनम् ॥ ७५१ ॥
आदत्से वपुषानेन साधुमोक्षफलं व्रतम् । क्षीराब्धितोपि रत्नानि गृह्णंति निपुणाः खलु ॥ ७५२ ॥
अनुज्ञाता नरेंद्रेण मुदितेन व्रताय सा । तपःकृशाप्यकृशेव प्रमदोच्छ्वसिताऽभवत् ॥ ७५३ ॥
अत्रांतरे च भगवान् विहरन्नृषभप्रभुः । अष्टापदगिरावागाज्जगद्बर्हिवलाहकः[7] ॥ ७५४ ॥
चक्रुश्च देवाः समवसरणं तत्र पर्वते । अपरं पर्वतमिव रत्नकांचनरूप्यजम् ॥ ७५५ ॥
कुर्वाणं देशनां तत्र स्वामिनं गिरिपालकाः । एत्य विज्ञापयामासुर्भरतस्वामिने द्रुतम् ॥ ७५६ ॥
षट्खंडभरतक्षेत्रविजयादधिकं ततः । तदुदंतं[8] समाकर्ण्य मुमुदे मेदिनीपतिः ॥ ७५७ ॥
स्वाम्यागमंयितां[9] तेषां भृत्यानां पारितोषिकम् । ददौ कोटीः सुवर्णस्य सार्द्धा द्वादश पार्थिवः ॥ ७५८ ॥
त्वन्मनोरथसंसिद्धिरिव मूर्त्ता जगद्गुरुः । विहरन्नाजगामेह सुंदरीमित्युवाच च ॥ ७५९ ॥

१ कल्याण्याः अपत्य कल्याणिनेयीतत्सम्बुद्धौ । २ प्रव्रजितुमिच्छसि । ३ पृष्टा । ४ नश्वरेण । ५ यकृत् कुक्षौ दक्षिणभागस्थो मासपिण्ड' । ६ शकृत् विष्ठा । ७ जगन्मयूरमेघः । ८ उदन्तं वृत्तान्त । ९ स्वाम्यागमं कथयता ।

अकारयन्निष्क्रमणाभिषेकं भरतेश्वरः । तस्याः सांतःपुरवधूजनैर्दासीजनैरिव ॥ ७६० ॥
कृतस्नानाथ सा सद्यः कृतपुण्यविलेपना । विलेपनांतरमिव पर्यधात्सदशांशुके ॥ ७६१ ॥
आमुमोच च सा रत्नालंकारानुत्तमानथ । तस्याः शीलमलंकारोऽलंकाराः प्रक्रियाकृते ॥ ७६२ ॥
तथा स्थितायाः सुंदर्याः पुरतो रूपसंपदा । स्त्रीरत्नं सा सुभद्रापि चेटीवत् प्रत्यभासत ॥ ७६३ ॥
यो यद्ययाचे तत्तस्मै विततारावित्तंबितम् । जंगमा कल्पवल्ली व सुंदरी शीलसुंदरी ॥ ७६४ ॥
कर्पूरधूलिधवलैर्वासोभिरुपशोभिनी । कुमुदिनीं मरालीव शिबिकामारुरोह सा ॥ ७६५ ॥
निषादिसादिपादातिस्यंदनछन्नभूमिना । अन्वयायि नरेंद्रेण मरुदेवीव सुंदरी ॥ ७६६ ॥
वीज्यमाना चामराभ्यां श्वेतछत्रेण शोभिता । वैतालिकैः स्तूयमानानिबिरूव्रतसंश्रया ॥ ७६७ ॥
भ्रातृजायाभिरुद्गीतप्रव्रज्योत्सवमंगला । उत्तार्यमाणलवणा वरस्त्रीभिः पदे पदे ॥ ७६८ ॥
राजंती सह गच्छद्भिः पूर्णपात्रैरनेकशः । स्वामिपादपवित्रं सा प्रापदष्टापदाचलम् ॥ ७६९ ॥
त्रिभिर्विशेषकम् ॥
सचंद्रमिव पूर्वाद्रिं तमाद्रिं स्वाम्यधिष्ठितम् । दृष्ट्वा भरतसुंदर्यौ महांतं हर्षमीयतुः ॥ ७७० ॥
स्वर्गापवर्गयोराद्यं सोपानमिव विस्तृतं । तं विशालशिलं शैलं समारुरुहतुश्च तौ ॥ ७७१ ॥
ततः समवसरणं शरणं भवभीजुषाम् । तौ प्रापतुश्चतुर्द्वारं संक्षिप्तां जगतीमिव ॥ ७७२ ॥

---

१ आचारार्थ । २ दासीवत् । ३ विततार ददौ । ४ मराली हंसी । ५ निषादिनः महामात्राः सादिनः अश्वारोहाः पादातयः पत्तय स्यन्दना रथास्तैश्छन्ना भूमिर्येन तेन । ६ चारणै. । ७ ससारभयवता ।

भरतेश्वरसुंदर्यावुत्तरद्वारवर्त्मना । अथो समवसरणं विशतः स्म यथाविधि ॥ ७७३ ॥
समं हर्षविनयाभ्यामुच्छ्वसत्संकुचत्तनू । प्रदक्षिणीचक्रतुस्तावथ त्रिः परमेश्वरम् ॥ ७७४ ॥
पंचांगस्पृष्टभूमिकौ नेमतुश्च जगत्पतिम् । रत्नभूतलसंक्रांतमपि द्रष्टुमिवोत्सुकौ ॥ ७७५ ॥
चक्रवर्ती ततो धर्मचक्रवर्तिनमादिमम् । स्तोतुं प्रचक्रमे चारुगिरा भक्तिपवित्रया ॥ ७७६ ॥
चक्रवर्त्तिनि रंके वा कारणं प्रीतिसंपदाम् । समास्त्वद्दृष्टयो नाथ वार्षिक्य इव वृष्टयः ॥ ७८१ ॥
असद्भूतान् गुणान् जल्पन् जनः स्तौतीतरं जनम् । गुणान् सतोपि ते वक्तुमक्षमोऽहं स्तुवे कथम् ७७७
तथापि हि जगन्नाथ करिष्यामि तव स्तुतिम् । न ददाति दरिद्रः किं श्रीमतामप्युपायनम् ॥ ७७८ ॥
युष्मत्पादैर्दृष्टमात्रैरन्यजन्मकृतान्यपि । गलंत्येनांसि शेफालीपुष्पाणींदुकरैरिव ॥ ७७९ ॥
दुश्चिकित्स्यमहामोहसन्निपातवतामपि । स्वामिन् जयंति ते वाचोऽमृतौषधिरसोपमाः ॥ ७८० ॥
क्रूरकर्महिमग्रंथिविद्रावणदिवाकरः । स्वामिन्नस्मादृशां पुण्यैरिमां विहरसे महीम् ॥ ७८२ ॥
शब्दानुशासनव्यापिसंज्ञासूत्रोपमा प्रभो । जन्मव्ययध्रौव्यमयी जयति त्रिपदी तव ॥ ७८३ ॥
यस्त्वां स्तौतीह भगवंस्तस्याप्येषोंतिमो भवः । शुश्रूयते ध्यायति वा यः पुनस्तस्य का कथा ॥ ७८४ ॥
भगवंतमिति स्तुत्वा नत्वा च भरतेश्वरः । पूर्वोत्तरस्यां ककुभि निषसाद यथोचितम् ॥ ७८५ ॥
सुंदर्यपि हि वंदित्वा स्वामिनं वृषभध्वजम् । कृतांजलिर्जगादैवं गद्गदाक्षरया गिरा ॥ ७८६ ॥

---

१ हर्षेणोच्छ्वसन्त्यौ विनयेन सङ्कुचन्त्यौ तनू कायौ ययोस्तौ । २ उपायन उपदा । ३ एनांसि पापानि । ४ शेफालीपुष्पाणि शेफालिकाकुसुमानि । ५ जन्मव्ययध्रौव्यमय्यास्त्रिपद्याः क्रमेण शब्दानुशासनव्यापिसंज्ञासूत्रोपमा ज्ञातव्या । ६ अन्तिमश्चरम ।

मनसा दृश्यमानोऽभूरियत्कालं जगत्पते । प्रत्यक्षं बहुभिः पुण्यैर्दिष्ट्या दृष्टोसि वत्सल ॥ ७८७ ॥
मृगतृष्णोपमसुखे संसारमरुमंडले[1] । पुण्यैः प्राप्तोऽसि लोकेन त्वं पीयूषमहाह्रदः[2] ॥ ७८८ ॥
निर्ममोपि जगन्नाथ जगतोप्यसि वत्सलः । कथं विषमदुःखाब्धेस्तत्समुद्धरसेऽन्यथा ॥ ७८९ ॥
[3]कृतिनी स्वामिनी ब्राह्मी [4]भ्रातृव्याः कृतिनो मम । भ्रातृव्यजाश्च कृतिनो ये हि त्वत्पथमन्वगुः ॥७९०॥
भरते[5]शोपरोधेन यन्मयाऽग्राहि न व्रतम् । भगवंस्तदियत्कालं स्वयमेवास्मि वंचिता ॥ ७९१ ॥
विश्वतारक मां दीनां तात तारय तारय । गृहोद्द्योतकरो दीपः किंशो द्योतयते घटम् ॥ ७९२ ॥
प्रसीद देहि दीक्षां मे विश्वत्राणैकवत्सल । संसारांभोधितरणयानपात्रनिभां विभो ॥ ७९३ ॥
साधु साधु महासत्वे ब्रुवन्निति ददौ विभुः । तस्यै दीक्षां सामायिकसूत्रोच्चारणपूर्विकाम् ॥ ७९४ ॥
महाव्रतद्रुमारामसुधासारणिसंनिभाम् । [6]अनुशिष्टिमयीं तस्यै देशनां विदधे विभुः ॥ ७९५ ॥
मोक्षप्राप्तमिवात्मानं मन्यमाना महामनाः । अनुज्येष्ठं निषसाद सा [7]मध्येव्रतिनीगणम् ॥ ७९६ ॥
देशनां स्वामिनः श्रुत्वा पादपद्मे प्रणम्य च । ययावयोध्यां नगरीं मुदितो भरतेश्वरः ॥ ७९७ ॥
दिदृक्षोः स्वजनं सर्वं पुनस्तस्याधिकारिभिः । आगताः समदर्श्यंतास्मार्यंतानागता अपि ॥ ७९८ ॥
भ्रातॄननागतान् ज्ञात्वा स्वाभिषेकोत्सवेपि तान् । तेषामेकैकशो दूतान् प्राहिणोद्भरतेश्वरः ॥ ७९९ ॥
राज्यानि चेत्समीहध्वे सेवध्वं भरतं ततः । दूतैरित्युदिताः सर्वेऽप्यालोच्यैवाऽवदन्निदम् ॥ ८०० ॥

---

१ ससारमरुदेशमण्डले । २ अमृतमहानदः । ३ कृतिनी कृतार्था । ४ भ्रातृव्या भ्रातृपुत्राः । ५ भरतेशाग्रहेण । ६ शिक्षामयी । ७ व्रतिनीगणमध्ये ।

विभज्य राज्यं दत्तं नस्तातेन भरतस्य च । संसेव्यमानो भरतोऽधिकं किं नः करिष्यति ॥ ८०१ ॥
समापतंतं किं काले कालं प्रस्खलयिष्यति । किं जराराक्षसीं देहग्राहिणीं निग्रहिष्यति ॥ ८०२ ॥
बाधाविधायिनः किं वा व्याधिंव्याधान् हनिष्यति । यथोत्तरं वर्द्धमानां यद्वा तृष्णां दलिष्यसि ॥ ८०३॥
ईदृक् सेवाफलं दातुं न चेद्भरत ईश्वरः । मनुष्यभावे सामान्ये तर्हि कः केन सेव्यताम् ॥ ८०४ ॥
प्राज्यैराज्योप्यसंतोषादस्मद्राज्यं जिघृक्षति । स्थाम्ना चेत्तद्वयमपि तस्य तातस्य सूनवः ॥ ८०५ ॥
अविज्ञपय्य तातं तु सोदर्येणाग्रजन्मना । त्वदीयस्वामिना योद्धुं न वयं प्रोत्सहामहे ॥ ८०६ ॥
ते दूतानभिधायैवं तदैवाष्टापदाचले । स्थितं समवसरणे वृषभस्वामिनं ययुः ॥ ८०७ ॥
त्रिश्च प्रदक्षिणीकृत्य प्रणेमुः परमेश्वरम् । शिरस्सु बद्धांजलयः सर्वेप्येवं स्तुतिं व्यधुः ॥ ८०८ ॥
देवैरप्यपरिज्ञेयगुणं कः स्तोतुमीश्वरः । त्वां स्तोष्यामस्तथापीश विलसद्बालचापलाः ॥ ८०९ ॥
तपस्यतामप्यधिकास्त्वां नमस्यंति ये सदा । वरिवस्यंति ये तु त्वां योगिनामपि तेऽधिकाः ॥ ८१० ॥
नमस्यतां प्रतिदिनं विश्वालोकदिनेश्वर । धन्यानामवतंसंति त्वत्पादनखरश्मयः ॥ ८११ ॥
न किंचित्कस्यचित्साम्ना बलाद्वा गृह्यते त्वया । त्रैलोक्यचक्रवर्त्ती त्वं तथाप्यसि जगत्पते ॥ ८१२ ॥
स्वामिंस्त्वमेको जगतां समं चेतस्सु वर्त्तसे । पीयूषदीधितिः सर्वजलाशयजलेष्विव ॥ ८१३ ॥
त्वां स्तोता स्तूयते देव सर्वैस्त्वामार्चिताऽर्च्यते । त्वां नंता नम्यते सर्वा त्वयि भक्तिर्महाफला ॥ ८१४ ॥

१ रोगरूपशिकारान् । २ बहुराज्यैः । ३ ग्रहीतुमिच्छति । ४ स्थाम्ना बलेन । ५ विश्वप्रकाशसूर्य । ६ अवतंसवदाचरन्ति ।
७ त्वच्चरणनखमयूखाः । ८ चन्द्रः ।

त्वं देव दुःखदावाग्नितप्तानामेकवारिदः । मोहांधकारमूढानामेकदीपस्त्वमेव हि ॥ ८१५ ॥
रोरा[1]णामीश्वराणां च मूर्खाणां गुणिनामपि । साधारणोपकारी त्वं छायाद्रुम इवाध्वनि ॥ ८१६ ॥
इति श्रुत्वा भ्रमरवत्स्वामिपादारविंदयोः । निवेशितदृशस्तेऽथ संभूयैवं व्यजिज्ञपन् ॥ ८१७ ॥
तदानी तातपादैर्नः संविभज्य पृथक् पृथक् । देशराज्यानि दत्तानि यथार्हं भरतस्य च ॥ ८१८ ॥
तैरेव राज्यैः संतुष्टास्तिष्ठामो विष्टपेश्वर[2] । विनीतानामलंघ्या हि मर्यादा स्वामिदर्शिता ॥ ८१९ ॥
स्वराज्येनान्यराज्यैश्चापहृतैर्भरतेश्वरः । न संतुष्यति भगवन् वडवाग्निरिवांबुभिः ॥ ८२० ॥
आच्छेद यथान्येषां राज्यानि पृथिवीभुजाम् । अस्माकमपि भरतस्तद्वदाच्छेत्तुमिच्छति ॥ ८२१ ॥
त्यज्यतामाशु राज्यानि सेवा च क्रियतां मम । आदिदेशेति पुरुषैर्भरतो नः परानिव ॥ ८२२ ॥
वचोमात्रेण मुंचामस्तस्यात्मबहुमानिनः । तातदत्तानि राज्यानि क्लीबा[3] इव कथं वयम् ॥ ८२३ ॥
सेवामपि कथं कुर्मो निरीहा[4] अधिकर्द्धिषु । अतृप्ता एव कुर्वंति सेवां मानविघातिनीम् ॥ ८२४ ॥
राज्यामुक्त्या[5]वसेवायां[6] युद्धं स्वयमुपस्थितम् । तातपादांस्त्वनापृच्छ्य न किंचित्कर्तुमीश्महे ॥ ८२५ ॥
अम्लानकेवलज्ञानसंक्रांताशेषविष्टपः । कृपावान् भगवानादिनाथोपीत्यादिदेश तान् ॥ ८२६ ॥
वत्साः पुरुषवीरैर्हि पुरुषव्रतधारिभिः । योद्धव्यं वैरिवर्गेणानर्गलं द्रोहकारिणा ॥ ८२७ ॥
रागो द्वेषश्च मोहश्च कषायाश्चेति वैरिणः । अनर्थदायिनः पुंसां जन्मांतरशतेष्वपि ॥ ८२८ ॥

---

१ दीनाना । २ जगदीश्वर । ३ क्लीबा नपुंसकाः । ४ निरीहा निःस्पृहा । ५ राज्यस्य अमुक्तौ अमोचने । ६ असेवायां सेवाया अकरणे ।

रागो हि सज्जतौ पुंसामायसी पादशृंखला । द्वेषश्च नरकावासनिवासप्रतिभूर्बली ॥ ८२९ ॥
मोहो भवार्णवावर्त्तप्रक्षेपणपणो नृणाम् । कषायाः स्वाश्रयानेव दहंति दहना इव ॥ ८३० ॥
अनपायमयैस्तैस्तैरुपायास्त्रैर्निरंतरम् ॥ युद्ध्वा युद्ध्वा विजेतव्यास्तदमी वैरिणो नृभिः ॥ ८३१ ॥
सेवापि हि विधातव्या धर्मस्यैवैकतायिनः । तच्छाश्वतानंदमयं पदमीषत्करं यथा ॥ ८३२ ॥
अनेकयोनिसंपातानंतबाधानिबंधनं । अभिमानफलैवेयं राज्यश्रीः सापि नश्वरी ॥ ८३३ ॥
किं च या स्वःसुखैस्तृष्णा नात्रुट्यत्प्राग्भवेषु वः । सांगारकारकस्येव मर्त्यभोगैः कथं त्रुटेत् ॥ ८३४ ॥
अंगारकारकः कश्चिदादाय पयसो दृतिम् । जगाम कर्तुमंगारानरण्ये रीणवारिणि ॥ ८३५ ॥
सोऽङ्गारानलसंतापान्मध्याह्नातपपोषितात् । उद्भूतया तृषाक्रांतः सर्वं दृतिपयः पपौ ॥ ८३६ ॥
तेनाप्यच्छिन्नतृष्णः सन् सुप्तः स्वप्ने गृहं गतः । आलूकलशनंदानामुदकान्यखिलोऽप्यपात् ॥ ८३७ ॥
तज्जलैरप्यशांतायां तृष्णायामग्नितैलवत् । वापीकूपतडागानि पायंपायमशोषयत् ॥ ८३८ ॥
तथैव तृषितोऽथापात्सरितः सरितां पतीन् । न च तस्य तृषात्रुट्यन्नारकस्येव वेदना ॥ ८३९ ॥
मरुत्कूपे ततो यातः कुशपूलं स रज्जुभिः । बध्वा चिक्षेप पयसे किमार्त्तः कुरुते नहि ॥ ८४० ॥
दूरांबुत्वेन कूपस्य मध्येपि गलितांबुकम् । निश्चोत्य पूलं द्रमकः स्नेहपोतमिवापिबत् ॥ ८४१ ॥
न छिन्ना यार्णवाद्यैस्तृट् छेद्या पूलांभसा न सा । तद्वः स्वःसुखोच्छिन्ना छेद्या राज्यश्रिया किमु ॥८४२॥

१ आयसी लोहमयी । २ नरकवासनिवासस्य प्रतिभूः प्रतिनिधिः । ३ पणो ग्लहः । ४ नित्यानन्दमय । ५ दृति चर्ममयपात्र । ६ शुष्कजले । ७ आलूकादयः जलपात्रभेदाः । ८ कुशपूल दर्भपूल । ९ स्वर्गसुखाच्छिन्ना ।

अमंदानंदनिःस्यंदनिर्वाणप्राप्तिकारणम् । वत्साः संयमराज्यं तद्युज्यते वो विवेकिनाम् ॥ ७४३ ॥
तत्कालोत्पन्नसंवेगवेगा भगवदंतिके । तेऽष्टानवतिरप्याशु प्रव्रज्यां जगृहुस्ततः ॥ ७४४ ॥
अहो धैर्यमहो सत्त्वमहो वैराग्यधीरिति । चिंतयंतस्तत्स्वरूपं दूता राज्ञे न्यवेदयन् ॥ ७४५ ॥

ज्योतींषीव ज्योतिषां ज्योतिरीशस्तेजांसीवाहर्पतिः पावकानाम् ।
वारीणीव स्रोतसां वारिराशिस्तेषां राज्यान्याददे चक्रवर्ती ॥ ७४६ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्ठिशलाकापुरुषचरिते महाकाव्ये प्रथमपर्वणि भरतचक्रोत्पत्तिदिग्विजय-
राज्याभिषेकसुंदर्यादिव्रतग्रहणकीर्त्तनो नाम चतुर्थः सर्गः ॥ ४ ॥

---

# पंचमः सर्गः

ततश्च भरताधीशः सदःसदनमीयिवान्[1] । सुषेणसेनापतिना नमस्कृत्येत्यभाषत ॥ १ ॥

कृत्वापि दिग्जयमिदं तव चक्रं पुरीमिमाम् । अद्यापि न प्रविशति स्तंभं व्याल[2] इव द्विपः ॥ २ ॥

बभाषे भरतोप्येवं षट्खंडभरतांतरे । अद्यापि वीरः को नाम ममाज्ञां न प्रतीच्छति ॥ ३ ॥

तदेव सचिवोऽथोचज्ज्ञाने देवेन निर्जितम् । एतद्धि भरतक्षेत्रमाक्षुद्रहिमवद्गिरि ॥ ४ ॥

जयः किमवशिष्टोऽस्ति दिग्यात्राकृत्यपि त्वयि । भ्रमद्घरट्ट[3]पतितास्तिष्ठंति चणकाः किमु ॥ ५ ॥

पुर्यामप्रविशच्चैतच्चक्रं सूचयति प्रभो । किमप्यद्यापि जेतव्यं त्वदाज्ञालंघनोन्मदम् ॥ ६ ॥

देवेष्वपि न पश्यामि जेतव्यं दुर्जयं च ते । आ ज्ञातमथवास्त्येको जेतव्यो विश्वदुर्जयः ॥ ७ ॥

ऋषभस्वामिनः सूनुः स्वामिन्नवरजस्तव[4] । महाबलो बाहुबलिर्बलिनां बलसूदनः ॥ ८ ॥

सर्वास्त्राण्येकतो वज्रमेकतश्च यथा तथा । एकतो राजकं[5] सर्वं स बाहुबलिरेकतः ॥ ९ ॥

लोकोत्तरो यथासि त्वमृषभस्वामिनंदनः । तथा सोपि तदेतस्मिन्नजिते किं जितं त्वया ॥ १० ॥

षट्खंडभरते दृष्टो न कोपि स्वामिनः समः । तज्जये परभागो[6]ऽस्तु को नाम भरतेशितुः ॥ ११ ॥

अयं खलु जगन्मान्यां भवदाज्ञां न मन्यते । तदसाधनतश्चक्रमेति ह्रीण[7]मिवेह न ॥ १२ ॥

---

१ सदःसदन सभामडप । २ व्यालो मत्तगज. ।३ घरट्टो धान्यकणचूर्णयन्त्र । ४ अवरजोऽनुजभ्राता । ५राजा समूहो राजक । ६ परभागोऽत्यन्तोत्कर्षः । ७ ह्रीण लज्जा गत ।

उपेक्षितव्यो न परः स्वल्पोप्यामयवद्यतः । तदद्यालं विलंबेन यतध्वं तज्जयं प्रति ॥ १३ ॥
दावाग्निमेघवृष्टिभ्यामिवाङ्गिर्जरतेश्वरः । सद्यः कोपोपशांतिभ्यामाश्लिष्टोऽथाब्रवीदिदम् ॥ १४ ॥
नानुजोपि करोत्याज्ञामिति लज्जाकृदेकतः । सार्द्धं कनीयसा युद्धमिति चैकत्र बाधते ॥ १५ ॥
स्वगृहेपि न यस्याज्ञा तस्याज्ञा हासकृद्बहिः । प्रवादश्च कनिष्ठस्याविनयासहने मम ॥ १६ ॥
एकतो राजधर्मोऽयं दृप्तानां दर्पशातनः । इतो भ्रातरि सौभ्रात्रं संकटे पतितोऽस्मि हा ॥ १७ ॥
अमात्योप्यन्वधादेवं स्वमहत्वेन संकटम् । यद्देवस्य कनीयांस्तत्स एव ह्यपनेष्यति ॥ १८ ॥
आज्ञा हि ज्यायसा देया कर्त्तव्या च कनीयसा । आचारो रूढ एवायं सामान्यगृहिणामपि ॥ १९ ॥
भ्रातरं तत्कनीयांसं लोकरूढेन वर्त्मना । आज्ञापयतु देवोपि प्रेष्य संदेशहारकम् ॥ २० ॥
आज्ञां सर्वजगन्मान्यां वीरमानी तवानुजः । सहिष्यते न चेद्देव पर्याणमिव केशरी ॥ २१ ॥
प्रशास्यास्त्वं तदा पाकशासनोग्राढशासनः । न चापवादस्ते लोके लोकाचारानतिक्रमात् ॥ २२ ॥
तथेति प्रतिपेदे तद्वचनं मेदिनीपतिः । उपादेया शास्त्रलोकव्यवहारानुगा हि गीः ॥ २३ ॥
अनुशिष्य ततो दूतं नयज्ञं वाग्मिनं दृढम् । सुवेगं नाम नृपतिः प्रैषीद्बाहुबलिं प्रति ॥ २४ ॥
स्वामिशिक्षां दौत्यदीक्षामिवादाय ससौष्ठवाम् । सुवेगो रथमारुह्याचलत्तक्षशिलां प्रति ॥ २५ ॥
सारसैन्यपरीवारो रथेनासह्यरंहसा । निर्ययौ स विनीताया राजाज्ञेव वपुष्मती ॥ २६ ॥

१ परः शत्रुः । २ गर्वनाशकः । ३ ज्येष्ठेन । ४ आत्मानं वीरं मन्यते इति वीरमानी । ५ शास्त्रलोकव्यवहारयोरनुगा । ६ वाग्मिनं वाचालं । ७ असह्यवेगेन ।

कार्यारंभविधौ वामं[1] दैवं पश्यदिवासकृत् । पस्पंदे लोचनं वामं गच्छतस्तस्य वर्त्मनि ॥ २७ ॥
नाडी नाडींधमस्येव[2] वह्निमंरूलमध्यतः । जवाद् दक्षिणा तस्य रोगाञ्जावेप्यनारतम् ॥ २८ ॥
समेष्वपि हि मार्गेषु रथस्तस्याऽस्खलन्मुहुः । अप्यसंयुक्तवर्णेषु जिह्वा लल्ल[3]गिरामिव ॥ २९ ॥
सादिभिर्वार्यमाणोऽपि प्रेर्यमाण इवासकृत् । कृष्णसारः[4] पुरस्तस्य दक्षिणाद्वामतो ययौ ॥ ३० ॥
तस्याग्रे करटः[5] शुष्के निविष्टः कंटकद्रुमे । अरंसत्[6]कटुकं घर्षश्चंचूशस्त्रमिवोपले[7] ॥ ३१ ॥
उत्ततार पुरस्तस्य प्रलंबः कृष्णपन्नगः[8] । क्षिप्तार्गलेव दैवेन तद्यानानिरुरुत्सया[9] ॥ ३२ ॥
प्रतिकूलो ववौ वायुश्चक्षुषः प्रक्षिपन् रजः । पर्यस्यन्निव तं पश्चाद्विचारैक[10]विपश्चितम् ॥ ३३ ॥
तस्य दक्षिणतो भूत्वा विरराम च रासभः[11] । अभ्रोजित[12]प्रस्फुटितमृदंगविरसस्वरः ॥ ३४ ॥
सुवेगोऽगादनिमित्तान्येतानि प्रविदन्नपि । सद्भृत्याः स्वामिनः क्वापि कांडवत्[13]प्रस्खलंति न ॥ ३५ ॥
ललंघे स बहून् ग्रामनगराकरकर्बटान् । तद्वासिभिर्दृश्यमानो वात्यावर्त[14] इव क्षणम् ॥ ३६ ॥
तरुखंडसरःसिंधुपुलिनप्रभृतिष्वपि । विशश्राम न स स्वामिकार्यतोत्र[15]प्रवर्त्तितः ॥ ३७ ॥
किरातैः सज्जकोदंडैः शैरव्यीकृतकुंजरैः[16] । चमूरु[17]चर्मसंव्यानैर्यातुधानैरिवाकुलाम् ॥ ३८ ॥

---

१ वाम प्रतिकूलम् । २ नाडीं धमतीति नाडीन्धमः । ३ लल्लगिरा स्खलद्गिरा । ४ मृगविशेषः । ५ करटः काकः । ६ शब्दमकरोत् । ७ उपले पाषाणे । ८ कृष्णसर्पः । ९ तत्प्रयाणरोधनेच्छया । १० पश्चाद्विचारैकपण्डितम् । ११ रासभो गर्दभः । १२ अभोजितः पिष्टपिण्डलेपरहितस्तथा यो प्रस्फुटितो मृदङ्गस्तद्वद्विरसः स्वरो यस्य सः । १३ काण्डवत् बाणवत् । १४ वात्यावर्तश्च क्रवातः । १५ स्वामिकार्यमेव तोत्र ताडनदण्डस्तेन प्रवर्तितः । १६ लक्ष्यीकृतकुञ्जरैः । १७ चमूरुर्मृगविशेषः ।

चमूरुचित्रकव्याघ्रहरिभिः शरभैरपि । सगोत्रैरंतकस्येव क्रूरसत्वैर्निरंतराम् ॥ ३९ ॥
युध्यमानाहिनकुलवामलूरविभीषणाम् । भल्लूकीकेशधरणव्यग्रबालकिरातिकाम् ॥ ४० ॥
मिथो महिषसंग्रामभज्यमानजरत्तरुम् । नाहलोत्थापितक्षौद्रमक्षिकाभिरसंचराम् ॥ ४१ ॥
अभ्रंलिहतरुस्तोमतिरोहितदिवाकराम् । रहोरतभुवं मृत्योरिवाप स महाटवीम् ॥ ४२ ॥
पंचभिः कुलकम् ॥

घोरां तामटवीं वेगात्सुवेगो वेगवद्रथः । सलीलं लंघयामास विपदं पुण्यवानिव ॥ ४३ ॥
मार्गांततरुविश्रांतैरलंकरणधारिभिः । संलक्ष्यमाणसौराज्यं सुस्थैः पांथवधूजनैः ॥ ४४ ॥
गोकुले गोकुले वृक्षतलासीनैः प्रमोदिभिः । गीयमानर्षभस्वामिचरितं गोपदारकैः ॥ ४५ ॥
भद्रशालादिवाहृत्यारोपितैः फलमालिभिः । अलंकृताखिलग्रामं बहलैर्बहुभिर्द्रुमैः ॥ ४६ ॥
पत्तने पत्तने ग्रामे ग्रामे वेश्मनि वेश्मनि । दानैकदीक्षितैरिभ्यैः शोध्यमानवनीपकम् ॥ ४७ ॥
आगतैर्भरतात्रस्तैरिवोदग्भरतार्धतः । प्रायेणाध्यासितग्रामं म्लेच्छैरक्षीणऋद्धिभिः ॥ ४८ ॥
षड्भ्यो भरतखंडेभ्यः खंडांतरमिव स्थितम् । भरताज्ञानभिज्ञं स बहलीदेशमासदत् ॥ ४९ ॥
षड्भिः कुलकम् ॥

---

१ शरभैरष्टापदैः । २ वामलूरा वल्मीकाः । ३ भल्लूक्यो जन्तुविशेषा ऋक्षाख्यया प्रसिद्धाः । ४ नाहला माक्षिकोपजीविनः ।
५ भद्रशाल मेरुपर्वतोद्यान । ६ बहलैः घनै. । ७ इभ्यैर्धनाढ्यैः । ८ शोध्यमाना अन्विष्यमाणा वनीपका याचका यस्मिन् स त ।
९ म्लेच्छैर्यवनै. ।

ऋते श्रीबाहुबलिनं राजांतरमजानतः । जनान् जानपदान् मार्गेष्वनार्त्तान्[1] वार्त्तयन्मुहुः ॥ ५० ॥
वनेचरान् गिरिचरान् दुर्मदान् श्वापदानपि[2] । द्राक् खंजीभवतः[3] पश्यन् सुनंदानंदनाज्ञया ॥ ५१ ॥
प्रजानामनुरागोक्त्या महतीभिश्च ऋद्धिभिः । अद्वैतमनुमिमानः[4] श्रीबाहुबलिनो नयम्[5] ॥ ५२ ॥
भरतावरजोत्कर्षाकर्णनाद्विस्मृतं मुहुः । अनुस्मरन्वाचिकं[6] स प्राप तक्षशिलापुरीम् ॥ ५३ ॥

चतुर्भिः कुलकम् ॥

किंचिल्लोचनपातेन पुरीपरिसरोषितैः । प्रेक्ष्यमाणः क्षणं लोकैरेकपांथावलीलया[7] ॥ ५४ ॥
लीलोद्यानेषु संभूय खेलेन खुरलीजुषाम्[8] । सुभटानां भुजास्फोटैस्त्रस्यदश्वतुरंगमः ॥ ५५ ॥
इतस्ततः पौरऋद्धिप्रेक्षणव्यग्रताजुषा । दक्षिणस्थेनानिषिद्धोत्पथगामिस्खलद्रथः[9] ॥ ५६ ॥
एकत्रैवेभरत्नानि समस्तद्वीपचक्रिणाम् । बद्धान् वरगजान् पश्यन् बहिरुद्यानशाखिषु ॥ ५७ ॥
प्रेक्ष्यमाणो मंदुराश्च[10] बंधुरास्तुरगोत्तमैः । ज्योतिष्काणां विमानानि विहायेव समागतैः ॥ ५८ ॥
भरतावरजैश्वर्याश्चर्यालोकनजन्मना । शिरोर्त्यैव शिरो धुन्वन् प्रविवेश स तां पुरीम् ॥ ५९ ॥

षड्भिः कुलकम् ॥

स्वच्छंदवृत्तीनत्याढ्यानापणेषु[11] वणिग्जनान् । अहमिंद्रानिव[12] पश्यन् राजद्वारं जगाम सः ॥ ६० ॥

१ अनार्तान् अपीडितान् । २ श्वापदान् हिंस्रप्राणिनः । ३ पादविकलीभवतः । ४ अनुमानं कुर्वन् । ५ नयं नीतिम् । ६ वाचिकं सन्देशं । ७ एकपान्थसभावनया । ८ खुरलीजुषां शराभ्यासजुषां । ९ दक्षिणस्थेन सारथिना । १० मन्दुरा अश्वशाला । ११ हट्टेषु । १२ देवविशेषान् ।

सहस्रंरोचिषो रोचींष्योद्धिद्येव विनिर्मितान् । कुंतान् दधानैः कुत्रापि पत्त्यनीकैरधिष्ठितम् ॥ ६१ ॥
बिभ्राणैरिक्षुपत्रास्यान्ययःशल्यानि पत्तिभिः । शोभितं कुत्रचिच्छौर्यद्रुमैः पल्लवितैरिव ॥ ६२ ॥
अभंगानश्मभंगेपि बिभ्रद्भिर्लोहमुद्गरान् । सनाथं क्वापि सुभटैरेकदंतैरिव द्विपैः ॥ ६३ ॥
फलकासिधरैः क्वापि चंद्रकेतुधरैरिव । शोभितं वीरपुरुषप्रकांडैश्चंद्रशक्तिभिः ॥ ६४ ॥
आनक्षत्रगणं दूरात्पातिभिः शब्दवेधिभिः । तूणपृष्ठैः कालपृष्ठपाणिभिः क्वाप्यधिष्ठितम् ॥ ६५ ॥
उद्दामशुंडादंडाभ्यां स्थिताभ्यां पार्श्वयोर्द्वयोः । इभाभ्यां द्वारपालाभ्यामिव दूराद्भयंकरम् ॥ ६६ ॥
सिंहद्वारं नृसिंहस्य पश्यन् विस्मितमानसः । द्वाःस्थप्रतीक्षितस्तस्थौ स्थितिरेषा नृपौकसाम् ॥ ६७ ॥
सप्तभिः कुलकम् ॥

गत्वा च बाहुबलये द्वास्थेनेति निवेदितः । त्वद्भ्रातुर्ज्यायसो दूतः सुवेगो द्वारि तिष्ठति ॥ ६८ ॥
वेत्रिणाथाज्ञया राज्ञोनुमतो धीमतां वरः । बुधोऽर्कमंडलमिव सुवेगः प्राविशत्सदः ॥ ६९ ॥
आबद्धरत्नमुकुटैस्तेजस्विभिरिलाधवैः । दिवाकरैरिव दिवो भुवं प्राप्तैरुपासितम् ॥ ७० ॥
स्वामिविश्वाससर्वस्ववल्लीसंतानमंडपैः । सचिवैरुपधाशुद्धैर्धीमद्भिः परिवारितम् ॥ ७१ ॥
प्रदीप्तचूडामणिभिरधृष्यैर्जगतोपि हि । कुमारप्रवरैर्नागकुमारैरिव वासितम् ॥ ७२ ॥
सहस्रशश्चात्मरक्षैर्निष्कोशायुधपाणिभिः । उज्जिह्वैरिव फणिभिर्भीषणं मलयाद्रिवत् ॥ ७३ ॥

---

१ सूर्यस्य । २ रोचींषि कान्तीः । ३ नक्षत्रगणपर्यन्त । ४ कालपृष्ठपाणिभिः धनुःपाणिभिः । ५ भूपतिभिः । ६ उपधा धर्मार्था द्युपन्यासेन मन्त्रिणा परीक्षणं तया शुद्धैः ।

वारस्त्रीभिर्वीज्यमानं चामरैरतिचारुभिः । शैलं हिमालयमिव चमरीभिर्निरंतरम् ॥ ७४ ॥
स्वर्णदंडधरेणोग्रशुचिवेषेण वेत्रिणा । सविद्युता शरद्वारिधरेणेवोपशोभितः ॥ ७५ ॥
रत्नसिंहासनासीनं तेजसामिव दैवतम् । ददर्श बाहुबलिनं स तत्रोद्भूतविस्मयः ॥ ७६ ॥
सप्तभिः कुलकम् ।
नरनाथं ननामाथ ललाटस्पृष्टभूतलः । स करीव रणद्दीर्घतरकांचनशृंखलः ॥ ७७ ॥
ततो भ्रूसंज्ञया राज्ञा तत्कालमुपनायिते । प्रदर्शिते प्रतीहारेणासांचक्रे स आसने ॥ ७८ ॥
तं प्रसादसुधाधौतदृशा पश्यन् नृपोऽब्रवीत् । सुवेग कुशलं कच्चिदार्यस्य भरतेशितुः ॥ ७९ ॥
तातपादैर्लालितायां पालितायां च सुंदर । तस्यां पुरि विनीतायां कच्चित्कुशलिनी प्रजा ॥ ८० ॥
षण्णां भरतखंडानां कामादीनामिव द्विषाम् । निरंतरायं विजयं कच्चिद् व्यधित भूपतिः ॥ ८१ ॥
षष्टिर्वर्षसहस्राणि कृत्वा कटकमुत्कटम् । सेनान्यादिपरीवारः कच्चित्कुशलमागतः ॥ ८२ ॥
सिंदूरारुणितैः कुंभैर्या संध्याभ्रमयीमिव । वितन्वती करिघटा राज्ञः कच्चिन्निरामया ॥ ८३ ॥
आहिमाद्रिमहीमेतां समाक्रम्य समेयुषाम् । राज्ञो वरतुरंगाणां वर्त्तते कच्चिदक्लमः ॥ ८४ ॥
अखंडाज्ञस्य सर्वत्र सेव्यमानस्य पार्थिवैः । सुखेनैवातिगच्छंति कच्चिदार्यस्य वासराः ॥ ८५ ॥
एवमापृच्छ्य तूष्णीके स्थिते वृषभनंदने । कृतांजलिरनावेगः सुवेग इदमभ्यधात् ॥ ८६ ॥

---

१ अस्मिन् श्लोके स्वर्णदण्डस्य विद्युता सह सादृश्य शुचिवेषस्य च शरन्मेघेन सह सादृश्य तेन पूर्णोपमा भवति । २ अक्लमः क्लमराहित्यं कुशलमिति यावत् । ३ मौनं प्राप्ते । ४ अनावेगो नम्रः ।

इलायाः सकलाया यः करोति कुशलं स्वयम् । अस्ति तस्य स्वतःसिद्धं कुशलं भरतेशितुः ॥ ८७ ॥
पुर्याः सुषेणादीनां च हस्त्यश्वस्य च किं क्षमः । देवोप्यकुशलं कर्त्तुं येषां नेता तवाग्रजः ॥ ८८ ॥
तुल्योऽधिको वा किं कोपि क्वाप्यस्ति भरतेशितुः । षण्णां भरतखंडानां जये यो विघ्नकृद्भवेत् ॥ ८९ ॥
अखंडिताज्ञः सर्वत्र सेव्यते च नरेश्वरैः । तथापि भरताधीशो जातु नांतः प्रमोदते ॥ ९० ॥
दरिद्रोपि कुटुंबेन सेव्यते यः स ईश्वरः । न सेव्यते तु यस्तेन तस्यैश्वर्यसुखं कुतः ॥ ९१ ॥
षष्टिवर्षसहस्रांतादेयुषा ज्यायसा तव । उत्कंठया कनिष्ठानामागमाध्वा निरीक्षितः ॥ ९२ ॥
सर्वे तत्राययुर्बंधुसंबंधिसुहृदादयः । विदधुश्च महाराज्याभिषेकं भरतेशितुः ॥ ९३ ॥
आसनांते समायातैः सुरैरपि सवासवैः । न हृष्यति महीनाथोऽपश्यन्पार्श्वे निजानुजान् ॥ ९४ ॥
द्वादशस्वपि वर्षेषु ज्ञात्वा भ्रातॄननागतान् । तानाह्वातुं नरं प्रैषीदुत्कंठा हि बलीयसी ॥ ९५ ॥
किंचिद्विकल्पं संकल्प्य भरतं न समाययुः । ययुस्तु तातपादांतं दीक्षामाददिरे च ते ॥ ९६ ॥
तेषां संप्रत्यरागाणां न कोपि स्वो न वा परः । तैः कथं पूर्यते राज्ञो भ्रातृवात्सल्यकौतुकम् ॥ ९७ ॥
तदेहि देहि हृदयप्रमोदं मेदिनीपतेः । तवापि यदि तत्रास्ति स्नेहः सौभ्रात्रसंभवः ॥ ९८ ॥
कुलिशादप्यधिकं वः कठोरांस्तर्कयाम्यहम् । चिराद्दिगंतादायाते ज्येष्ठेप्येवं यदास्यते ॥ ९९ ॥
शंके वो गुर्ववज्ञानान्निर्भयेभ्योपि निर्भयान् । शूरैरपि वर्त्तितव्यं गुरौ हि सभयैरिव ॥ १०० ॥
एकत्र विश्वविजयी विनयी चान्यतो गुरौ । पारिषद्यैर्विचार्यालं कैतीयीकः प्रशस्यते ॥ १०१ ॥

---

१ इलायाः पृथ्व्याः । २ नेता नायकः । ३ अन्तः अन्तःकरणे । ४ आगतेन । ५ आगमनमार्गः ।

तवाविनयमप्येवं सोढा सर्वसहो नृपः । कर्णेजपानां[1] किं त्वेवमवकाशो निरंकुशः ॥ १०२ ॥
पिशुनानां[2] गिरस्तत्र त्वदभक्तिप्रकाशिकाः । दूषयिष्यंति तच्चेतः क्षीरं शुक्लछटा[3] इव ॥ १०३ ॥
अत्यल्पमपि तद्वक्त्यमात्मच्छिद्रं निजे प्रभौ । छिद्रेण लघुनाप्यंभः सेतुमुन्मूलयत्यहो ॥ १०४ ॥
इयत्कालं नागतोस्मीत्याशंकां हृदि माकृथाः । अधुनाप्येहि सुस्वामी गृह्णाति स्खलितं[4] नहि ॥ १०५ ॥
त्वयि तत्र गते सद्यः पिशुनानां मनोरथाः । विलीयंतां हिमानीव[5] नभोभाजि नभोमणौ[6] ॥ १०६ ॥
तेजोभिश्चिरमेधस्व स्वामिना तेन संगमात् । अद्यैव पर्वणि दिवाकरेणेव निशाकरः ॥ १०७ ॥
स्वामीयंतस्[7]तमन्येपि बहवो बाहुशालिनः । सेवाशालीनतां हित्वा सेवंते प्रतिवासरम् ॥ १०८ ॥
अवश्यं सेवनीयो हि चक्रवर्त्ती महीधवैः । निग्रहानुग्रहसहः सहस्राक्ष[8] इवामरैः ॥ १०९ ॥
चक्रवर्त्तित्वपदेपि तस्य सेवा त्वया कृता । अद्वैतभ्रातृ[9]सौहार्दपक्षमुद्योतयिष्यति ॥ ११० ॥
ज्ञातेति यदि निर्भीको नायास्ये तन्न सांप्रतम् । आज्ञासारा निगृह्यंते ज्ञातेयेन[10] महीभुजः ॥ १११ ॥
अयस्कांतैरिवायांसि[11] देवदानवमानवाः । कृष्टाः प्रकृष्टैस्तेजोभिरायांति भरतेश्वरम् ॥ ११२ ॥
यमर्द्धासनदानेन वासवोपि सखीयति[12] । तमागमनमात्रेणानुकूलयसि किं नहि ॥ ११३ ॥
वीरमानितया चेत्त्वं राजानमवमन्यसे । तर्हि तस्मिन् ससैन्योपि त्वमब्धौ सक्तुमुष्टिवत्[13] ॥ ११४ ॥

---

१ कर्णेजपाना सूचकाना । २ पिशुनाना सूचकाना । ३ शुक्लच्छटाः नवनीतच्छटाः । ४ स्खलित दोष । ५ महद्धिमं हिमानी । ६ नभोमणौ सूर्ये । ७ स्वामीयन्तः स्वामिवदाचरन्तः । ८ सहस्राक्ष इन्द्रः । ९ अद्वैतभ्रातृवात्सल्यपक्षं । १० ज्ञातेयेन ज्ञातिभावेन । ११ अयांसि लोहानि । १२ सखिवदाचरति । १३ सक्तुः अष्टयवादिचूर्ण तस्य मुष्टिवत् ।

लक्षाश्चतुरशीतिस्तग्जजाः शक्रेभसन्निभाः । सह्याः केनाभिसर्पंतः पर्वता इव जंगमाः ॥ ११५ ॥
तावतोऽश्वान् रथांश्चास्य विष्वक् प्लावयतो महीम् । कल्लोलानिव कल्पांतोदधेः कः स्खलयिष्यति॥११६॥
तस्य षण्णवतिग्रामकोटिभर्तुः पदातयः । कोट्यः षण्णवतिः सिंहा इव त्रासाय कस्य न ॥ ११७ ॥
एकः सुषेणः सेनानीर्दंडपाणिः समापतन् । कृतांत इव किं शक्यः सोढुं देवासुरैरपि ॥ ११८ ॥
अमोघं बिभ्रतश्चक्रं चक्रिणो भरतस्य तु । सूर्यस्येव तमस्तोमः स्तोकिका[1] त्रिलोक्यपि ॥ ११९ ॥
तेजसा वयसा ज्येष्ठो नृपः श्रेष्ठः स सर्वथा । राज्यजीवितकामेन सेव्यो बाहुबले त्वया ॥ १२० ॥
अथ बाहुबलिर्बाहुबलापास्तजगद्बलः । इत्यभापिष्ट गंभीरध्वानोऽर्णव इवापरः ॥ १२१ ॥
साधु दूत त्वमेवैको वाग्मिनामग्रणीरसि[2] । ममापि पुरतो वाचं य एवं वक्तुमीशिषे ॥ १२२ ॥
ताततुल्यो हि मे भ्राता ज्यायान् सोपि यदिच्छसि । समागमं बांधवानां युक्तमेव तदप्यहो ॥ १२३ ॥
सुरासुरनृपश्रीभिर्भरूढः सोऽस्माभिरागतैः । लज्जिष्यतेऽल्पविभवैरागमामेति वो वयम् ॥ १२४ ॥
षष्टिं वर्षसहस्राणि परराज्यानि गृह्णतः । कनिष्ठराज्यग्रहणे व्यग्रता तत्र कारणम् ॥ १२५ ॥
सौभ्रात्रं कारणं तस्य यदि तत्प्राहिणोत्कथम् । भ्रातॄणामेकशो दूतान् राज्यसंग्रामकाम्यया[3] ॥ १२६ ॥
को भ्राता ज्यायसा सार्धं लुब्धेनापि हि योत्स्यते । इति बुद्ध्या महासत्वाः कनिष्ठास्तातमन्वगुः॥१२७॥
तेषां च राज्यग्रहणेनापि त्वत्स्वामिनो ध्रुवम् । छलमन्वीक्ष्यमाणस्य प्रकटं बकचेष्टितम् ॥ १२८ ॥
असावस्मास्वपि स्नेहं तादृशं दर्शयन्नहो । प्रजिघाय[4] विशिष्टं त्वां वाक्प्रपंचविचक्षणम् ॥ १२९ ॥

१ स्तोकिका अल्पमात्रा । २ अग्रेसरः । ३ राज्यसंग्रामेच्छया । ४ प्रजिघाय प्रेरयामास ।

प्रव्रज्य भ्रातृभी राज्यदानाद्या[1]कारि तस्य मुत् । आगतेन मया राज्य[2]गृध्नोः किं सा[3] करिष्यते ॥ १३० ॥
वज्रादपि कठोरोहं यत्स्वल्पविभवोपि सन् । तस्य ऋद्धिं न गृह्णामि भ्रातृन्य[4]क्कारकातरः ॥ १३१ ॥
स तु पुष्पादपि मृदुर्मायावी योऽनुजन्मनाम् । अवर्णवादभीरूणां राज्यानि स्वयमाददे ॥ १३२ ॥
निर्भया निर्भयेभ्योपि कथं दूत वयं ननु । भ्रातृराज्यानि गृह्णंतं यदुपेक्षामहे स्म तम् ॥ १३३ ॥
गुरौ प्रशस्यो विनयो गुरुर्यदि गुरुर्भवेत् । गुरौ गुरुगुणैर्हीने विनयोपि त्रपास्पदम्[5] ॥ १३४ ॥
गुरोरप्यवलिप्त[6]स्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ १३५ ॥
तस्याच्छिन्नं किमश्वादि भग्नं वा नगरादिकम् । येनाविनयमस्माकं सोढा सर्वंसहो नृपः ॥ १३६ ॥
दुर्जनप्रतिकाराय न तत्र प्रयतामहे । विमृश्यकारिणः संतः किं दूष्यंते खलोक्तिभिः ॥ १३७ ॥
इयत्कालं नागताः स्मो यतो हेतोः स किं ययौ । अ[7]नीहालक्षणः क्वापि यामो येनाद्य चक्रिणम् ॥ १३८ ॥
सर्वत्राप्यप्रमत्तानामलुब्धानां च नः सदा । स्खलितं किं स गृह्णीयाच्छलान्वेष्यपि भूतवत् ॥ १३९ ॥
किमप्यना[8]ददानानां तदीयं नीवृ[9]दादिकम् । स्वाम्येव नः कथं नाम स भवेद्भरतेश्वरः ॥ १४० ॥
भगवानृषभस्वामी स्वाम्येको मम तस्य च । मिथः स्वस्वामिसंबंधो घटते कथमावयोः ॥ १४१ ॥
तेजोहेतोर्मयि गते तत्र स्यात्तस्य कीदृशम् । तेजोऽभ्युदितवत्यर्के तेजस्वी नहि पावकः ॥ १४२ ॥
स्वा[10]मीयंतोऽक्षमास्ते तु निषेवंतां क्षमाभुजः । एष येषु व[11]राकेषु निग्रहानुग्रहक्षमः ॥ १४३ ॥

१ या मुत् । २ राज्यलुब्धस्य । ३ सा मुत् । ४ भ्रातृतिरस्कारकातरः । ५ लज्जास्थान । ६ गर्वितस्य । ७ निःस्पृहालक्षणः । ८ अनाददानानामग्रहण कुर्वाणाना । ९ नीवृदादिक देशादिक । १० स्वामिवदाचरन्तः । ११ वराकेषु दीनेषु ।

सेवाऽस्मिन् भ्रातृसौहार्दपक्षेणापि मया कृता । चक्रवर्त्तित्वपक्षे स्याद्यदबद्धमुखो जनः ॥ १४४ ॥
भ्रातास्म्यंत्रीः सचाज्ञेशो आज्ञापयतु यद्यलम् । ज्ञातिस्नेहेन किं वज्रं वज्रेण न विदार्यते ॥ १४५ ॥
सुरासुरनरोपास्त्या प्रीतोस्त्वेष मयास्य किम् । मार्ग एव द्रुमः स्तंबे रथः सज्जोपि भज्यते ॥ १४६ ॥
तातभक्तो महेंद्रश्च ज्येष्ठं तं तातनंदनम् । आसयत्यासनस्यार्द्धे स किं तेनापि दृप्यति ॥ १४७ ॥
ते त्वन्येऽस्मिन् समुद्रे ये ससैन्याः सक्तुमुष्टिवत् । तेजोभिर्द्विःसहोऽहं तु हंत स्यां वडवानलः ॥ १४८ ॥
पत्तयोऽश्वा रथा नागाः सेनानीर्भरतोपि च । मयि सर्वे प्रलीयंतां तेजांसीवार्कतेजसि ॥ १४९ ॥
करिणेव करेणोच्चैर्यः समादाय पादयोः । पयोदलालि गगने बालत्वे लोष्टलीलया ॥ १५० ॥
गगने दूरमध्वानं गत्वा यश्च पतन् भुवि । माभूत्परासुरित्येष मया प्रत्यैषि पुष्पवत् ॥ १५१ ॥
चाटुभिश्चाटुकाराणां निर्जितानां क्षमाभुजाम् । व्यस्मार्षीत्तदसौ प्राप्तो जन्मांतरमिवाधुना ॥ १५२ ॥
चाटुकाराः प्रनंक्ष्यंति ते सर्वेऽपि स्वयं त्वसौ । एकः सहिष्यते बाहुबलिबाहुबलाद् व्यथाम् ॥ १५३ ॥
याहि दूत स एवैतु राज्यजीवितकाम्यया । तातदत्तांशतुष्टेन मयैवोपेक्षितस्य भूः ॥ १५४ ॥
चित्रकायैरिव दृढस्वाम्याज्ञापाशयंत्रितैः । प्रकोपताम्रनयनैः प्रेक्ष्यमाणो नरेश्वरैः ॥ १५५ ॥
रोषाद्धतहतेऽत्यंतगृणद्भिः स्फुरिताधरैः । कटाक्ष्यमाणो विकटं कुमारैश्च मुहुर्मुहुः ॥ १५६ ॥
जिघत्सुभिरिवोद्भूकैः किंचिच्चलितहेतिभिः । दृढाबद्धपरिकरैरीक्ष्यमाणोंगरक्षकैः ॥ १५७ ॥

---

१ निर्भीकः । २ आज्ञेश आज्ञाकारकः । ३ सुरासुरनरोपासनया । ४ स्तम्बे काण्डरहिते वृक्षादौ । ५ लोष्ट मृत्पिण्ड तस्य लीलया । ६ प्रत्यैषि प्रतिजग्रहे । ७ अत्तुमिच्छुभिः । ८ ऊर्द्धकैरूर्ध्वीकृतभ्रूकुटिभिः ॥ ९ चलितखड्गैः ।

हनिष्यते वराकोऽयं केनापि रजसांजुषा[1] । नः स्वामिपदिकेनेति[2] चिंत्यमानश्च मंत्रिभिः ॥ १५७ ॥
सज्जीकृतेन हस्तेन पादमुत्क्षिप्य तस्थुषा । कंठे धर्त्तुमिवोत्केनो[3]त्थापितो वेत्रपाणिना ॥ १५९ ॥
सुवेगो धैर्यमालंब्य मनसि क्षुभितोपि सन् । निर्जगाम समुत्थाय सदः सदनतस्ततः ॥ १६० ॥

षड्भिः कुलकम् ॥

क्षुब्धतक्षशिलाधीशतारशब्दानुमानतः । द्वारस्थया पत्तिचम्वा[4] रोषक्षुभितया भृशम् ॥ १६१ ॥
आस्फाल्यमानैः फलकै[5]र्नर्त्यमानैर्महासिभिः । उदस्यमानैश्चक्रैश्च गृह्यमाणैश्च मुद्गरैः ॥ १६२ ॥
स्फाल्यमानैस्त्रिशूलै[6]श्च पीड्यमानैश्च तूणकैः[7] । आदीयमानैर्दंडैश्चोद्यम्यमानैश्च पर्शुभिः ॥ १६३ ॥
सर्वतोप्यात्मनो मृत्युमिव पश्यन् पदे पदे । स्खलत्पदो नृसिंहस्य[8] सिंहद्वारात्स निर्ययौ ॥ १६४ ॥

चतुर्भिः कुलकम् ॥

क एष नूतनो राजद्वारान्निरगमत्पुमान् । आगतः खल्वयं दूतो भरतस्य महीपतेः ॥ १६५ ॥
राजा किमपरः कश्चिदप्यस्तीह महीतले । भ्राता बाहुबलेर्ज्येष्ठोऽयोध्यायां भरतेश्वरः ॥ १६६ ॥
अत्र च प्रजिघायेमं स दूतं केन हेतुना । आकारणाय स्वभ्रातुः श्रीबाहुबलिभूपतेः ॥ १६७ ॥
इयत्कालं गतः क्वासीज्ज्ञातास्मत्स्वामिनो ननु । षट्खंडभरतक्षेत्रजयाय स गतो ह्यभूत् ॥ १६८ ॥
उत्कंठितः कनिष्ठं स किं समाह्वयतेऽधुना । अन्यराजन्यसामान्यां सेवां कारयितुं ननु ॥ १६९ ॥

१ साहसजुषा । २ स्वामिपत्तिना । ३ उत्केन उत्कण्ठितेन । ४ पदातिसेनया । ५ फलकैश्चर्ममयैरस्त्रप्रतिघातनिवारकैः पदार्थैः । ६ शस्त्रविशेषैः । ७ तूणकैर्निषङ्गैः । ८ नृसिहस्य पुरुषसिंहस्य ।

तस्यासारान् नृपान् जित्वा किं कीलेत्राधिरोहणम् । अखंमश्चक्रवर्त्तित्वाभिमानस्तत्र कारणम् ॥ १७० ॥
कनिष्ठेन जितो राजा स्वं कथं दर्शयिष्यति । न वेत्ति जितकाशी स भाविनं स्वपराभवम् ॥ १७१ ॥
मंत्रिणो नाखुरप्यस्ति भूपतेर्भरतस्य किम् । भूयांसो मंत्रिणः संति मतिमंतः क्रमागताः ॥ १७२ ॥
स कंडूयियिषुस्तुंडेमहेः किं तैर्न वारितः । न वारितः प्रेरितः किं त्वीदृशी भवितव्यता ॥ १७३ ॥
नागराणामिति मिथो जल्पतामुच्चकैर्गिरम् । आकर्णयन् रथारूढो नगर्या निर्जगाम सः ॥ १७४ ॥
दशभिः कुलकम् ॥

देवताभिरिव प्रादुष्कृतां द्वारे व्रजन्नसौ । आर्पभ्योर्विग्रहकथामितिहासमिवाशृणोत् ॥ १७५ ॥
क्रोधात्त्वरितमप्यस्य गच्छतः स्पर्धयेव सा । वर्त्मनि त्वरिततरं तद्विग्रहकथा ययौ ॥ १७६ ॥
वार्त्तयापि तया राजादेशेनेव क्षणाद्भटाः । प्रतिग्रामं प्रतिपुरं कटकाय ससज्जिरे ॥ १७७ ॥
रथान् सांग्रामिकान् कृष्ट्वा शालाभ्योऽक्षादिभिर्नवैः । केचिद्दृढतरीचक्रुः शरीराणीव योगिनः ॥ १७८ ॥
आरुह्यारुह्य वाह्याल्यां धाराभिरपि पंचभिः । कर्तुं रणसहानश्वान् केचिच्छ्रममजापयन् ॥ १७९ ॥
अयस्कारगृहेष्वेत्य कृपाणादिकमायुधम् । अपरे तेजयामासुस्तेजोमूर्तिमिव प्रभोः ॥ १८० ॥
संयोज्य शृंगसाराणि वध्वाभिनवतंत्रिभिः । यमभ्रूसोदराण्यन्ये शार्ङ्गधन्वान्यसूत्रयन् ॥ १८१ ॥

---

१ कीले लोहस्तम्भे शङ्कौ । २ जितेन जयेन काशते स जितकाशी जयी । ३ आखुर्मूषक. । ४ कण्डूयितुमिच्छुः । ५ तुण्डं मुखं । ६ ऋषभपुत्रयोः । ७ तद्युद्धकथा । ८ कटकाय सैन्याय । ९ अक्षादिभिः रथावयवादिभिः । १० अश्वपाटिकायां । ११ धाराभिः अश्वगतिभिः । १२ लोहकारगृहेषु । १३ यमभ्रूसदृशानि ।

वर्मादिवहनायोष्ट्रानरण्यान्केचिदानयन् । तूर्याणि प्राणवंतीव प्रयाणेषु प्रणादिनः ॥ १०२ ॥
स बाणान् बाणधीन्[1] केचित् सशिरस्कांश्च कंटकान्[2] । दृढानपि दृढीचक्रुः सिद्धांतानिव तार्किकाः १०३
केपि गुप्यद्गुरून् कांडपटान्[3]पटकुटीरपि । गंधर्वनगराणीव वितत्यालोकयन् क्षणात् ॥ १०४ ॥
स्पर्द्धयेव मिथः सर्वे भक्ता बाहुबलौ नृपे । युद्धे सज्जीभवंति स्म जना जानपदा अपि ॥ १०५ ॥
आक्षेपेन तत्र यः कोपि न्यवार्यत रणोन्मुखः । अनाप्तायेव तस्मै सोऽकुप्यद्भक्तिचिकीर्नृपे ॥ १०६ ॥
प्राणैरपि प्रियं राज्ञेऽनुरागेण चिकीर्षताम् । जनानामेवमारंभं स ददर्श पथि व्रजन् ॥ १०७ ॥
श्रुत्वा दृष्ट्वा च तल्लोके पार्वतीयनृपा[4] अपि । प्रतिराजानमेतद्भक्तमानितयामिलन् ॥ १०८ ॥
गावो गोपस्वरेणेव निकुंजेभ्यः[5] सहस्रशः । तेषां गोशृंगनादेन किराताः प्रदधाविरे ॥ १०९ ॥
द्वीपिपुच्छत्वचा[6] केचित्केकिपिच्छैश्च[7] केचन । लताभिः केपि वेगेन बबंधुः कुंतलान् भटाः ॥ ११० ॥
दंदशूकत्वचा[8] केपि तारव्या[9] केचन त्वचा । केचिज्जोधांत्वचा[10]ऽबध्नन् परिधानं मृगत्वचम् ॥ १११ ॥
ग्रावहस्ता धनुर्हस्ताः प्लवमानाः प्लवंगवत्[11] । स्वपतीन्परिवव्रुस्ते पतिभक्तान् श्ववद्भृशम् ॥ ११२ ॥
अद्य दद्मो बाहुबलिप्रसादावक्रयं[12] चिरात् । भरताक्षौहिणीक्षोदा[13]दिति तेषां गिरोऽभवन् ॥ ११३ ॥
तेषामप्येवमारंभं ससरंभं निरूपयन् । सुवेगश्चिंतयामास मनसैवं विविक्तधीः ॥ ११४ ॥

---

१ निषङ्गान् । २ कण्टकान् वर्माणि । ३ काण्डपटान् "कानात" इति प्रसिद्धान् पटभेदान् । ४ पर्वतसम्बन्धिनो नृपाः । ५ लतागृहेभ्यः । ६ व्याघ्रपुच्छत्वचा । ७ मयूरपिच्छैः । ८ सर्पत्वचा । ९ तरुसम्बन्धिन्या । १० चदनघो इति प्रसिद्धः । ११ प्लवङ्गवत् वानरवत् । १२ बाहुबलिप्रसादस्य अवक्रयं ग्राह्यस्य प्रतिरूपत्वेन देय धनं । १३ क्षोदो नाशः ।

पैतृकेणेव वैरेण त्वरंते रणकर्मणि । अहो अमी बाहुबलिगृह्या विषयवासिनः ॥ १९५ ॥
किराता अप्यमी हंतोत्सहंते हंतुमागतम् । अस्मद्बलं बाहुबलिबलाग्रे समरेच्छवः ॥ १९६ ॥
तं कंचन न पश्यामि यः सज्जति युधे नहि । विद्यते स न कोपीह रक्तो बाहुबलौ न यः ॥ १९७ ॥
शूराश्च स्वामिभक्ताश्च बहव्यां हलिनोप्यहो । तत्किं देशस्वभावोऽयमुत बाहुबलेर्गुणः ॥ १९८ ॥
भवंतु वेतनक्रीताः सामंताद्याः पदातयः । अहो अस्य गुणक्रीती पल्लीभूताखिलापि भूः ॥ १९९ ॥
बह्वीमपि चक्रिचमूं मन्ये लघ्वीं लघीयसः । श्रीबाहुबलिसैन्यस्य तृण्यां वह्नेरिवाग्रतः ॥ २०० ॥
महावीरस्य किं चास्य न्यूनं बाहुबलेः पुरः । कलभं शरभस्येव शंके चक्रिणमप्यहो ॥ २०१ ॥
ऊर्जस्वी भुवि चत्रयेव वज्र्येव भुवि विश्रुतः । तयोरंतरवर्त्यूर्ध्ववर्त्ती वा लघुरार्षभिः ॥ २०२ ॥
अपि तच्चक्रिणश्चक्रमपि वज्रं च वज्रिणः । मन्ये विफलमेवास्य चपेटाघातमात्रतः ॥ २०३ ॥
ऋजुः कर्णे तदात्तोयं महाहिमुष्टिना धृतः । विरोधितो यदस्माभिरहो बाहुबलिर्बली ॥ २०४ ॥
मृगमेकमिव द्वीपी गृहीत्वा भूमिमंडलम् । संतुष्टोऽयं मुधाऽस्माभिस्तर्जयित्वा खलीकृतः ॥ २०५ ॥
अनेकनृपसेवाभिः किमपूर्णं नृपस्य यत् । अयमारंभि सेवायै वाहनायेव केशरी ॥ २०६ ॥
धिग्मंत्रिणः स्वामिहितमानिनोऽस्मानपीह धिक् । यैर्द्विषद्भिरिवोपेक्षां चक्रेस्वाम्यत्र कर्मणि ॥ २०७ ॥
गत्वैकेन सुवेगेन विग्रहश्चलितः प्रभोः । भणिष्यतीति लोकस्तु धिग् दौत्यं गुणदूषणम् ॥ २०८ ॥
एवं विचिंतयन्नित्यं दिनैः कतिपयैरपि । सुवेगो नगरीं प्राप विनीतां नीतिकोविदः ॥ २०९ ॥

---

१ हलिनः कृषीवलाः । २ तृण्या तृणसमूहं । ३ करतलाघातमात्रतः ।

नीतः सभायां द्वाःस्थेन प्रणामरचितांजलिः । न्यषीदत्सोपि पप्रच्छे सादरं चक्रवर्त्तिना ॥ २१० ॥
किं नाम कुशलं बाहुबलेर्मदनुजन्मनः । यत्त्वं सुवेग वेगेनागतोसि क्षुभितोऽस्मि तत् ॥ २११ ॥
अथवा तेन पर्यस्तस्ततस्त्वरितमागतः । वीरवृत्तिरियं युक्ता मद्भ्रातुस्तस्य दोष्मतः ॥ २१२ ॥
सुवेगोपि जगादैवं देव देवोपि न क्षमः । तस्याकुशलमाधातुं तवेवानवमौजसः ॥ २१३ ॥
स उक्तः स्वामिसेवार्थं पूर्वं विनयपूर्वकम् । मया तवानुजन्मेति नितांतहितकांक्षिणा ॥ २१४ ॥
भेषजेनेव तीव्रेण परिणामोपकारिणा । सोवाच्यवचनीयेन वचसा तदनंतरम् ॥ २१५ ॥
न साम्ना न खरेणापि देवसेवां स मन्यते । किं नाम भेषजं कुर्याद्विकारे सांनिपातिके ॥ २१६ ॥
मानसारस्तृणायैतत्त्रैलोक्यमपि मन्यते । स सिंह इव जानीते प्रतिमल्लं न कंचन ॥ २१७ ॥
अस्मिन् सुषेणे सेनान्यां सैन्ये च तव वर्णिते । किमेतदिति दुर्गंधादिवाभांक्षीत् स नासिकाम् ॥ २१८ ॥
प्रभोर्भरतषट्खंडविजये प्रस्तुते च सः । अनाकर्णितकं कुर्वन् स्वदोर्दंडौ निरीक्षते ॥ २१९ ॥
तातदत्तांशतुष्टस्य ममैवोपेक्षयाग्रहीत् । भरतो भरतक्षेत्रषट्खंडमिति चाह सः ॥ २२० ॥
पर्याप्तं सेवया तस्य प्रत्युताह्वयतेऽधुना । रणाय देवं स व्याघ्रीमिव दोहाय निर्भयः ॥ २२१ ॥
ईदृक् तावत्तव भ्रातौजस्वी मानी महाभुजः । गंधद्विप इवासह्यः सहते नान्यविक्रमम् ॥ २२२ ॥
सभायां तस्य सामंता हरेः सामानिका इव । प्रचंडभुजसौंडीर्या न हीयंते तदाशयात् ॥ २२३ ॥

१ दोष्मतः बलवतः । २ अनवमौजसः अकुत्सितपराक्रमस्य । ३ अवाचि उक्तः । ४ खरेण तीक्ष्णेन । ५ सान्निपातिके सन्निपातजनिते । ६ प्रतिमल्लं प्रतियोद्धारं । ७ स्वभुजदण्डौ । ८ मदगन्धिगज इव । ९ सामानिका इन्द्रसदृशाः देवविशेषाः । १० प्रचण्डभुजपराक्रमाः ।

कुमारा अपि तस्योच्चैराजतेजोभिमानिनः । रणकंडूलदोर्दंडास्ततो दशगुणा इव ॥ २२४ ॥
तन्मंत्रमनुमन्यंते मंत्रिणोप्यस्य मानिनः । यादृशो भवति स्वामी परिवारोऽपि तादृशः ॥ २२५ ॥
तस्यानुरागिणः पौरा अप्यन्यं पार्थिवं न हि । जानंति न सहंते च सत्योऽपरपतीनिव ॥ २२६ ॥
जना जानपदा ये च तस्याब्दकरविष्टयः । भृत्या इवानुरागेण तेपि प्राणैः प्रियैषिणः ॥ २२७ ॥
वनेचरा गिरिचराः सिंहा इव भटाश्च ये । मानसिद्धिं चिकीर्षंति तेपि तस्य वशंवदाः ॥ २२८ ॥
अलमुक्त्वा बह्वथवा स वीरो वर्त्ततेऽधुना । युयुत्सया दिदृक्षुस्त्वां स्वामिन्नुत्कंठया ननु ॥ २२९ ॥
यदात्मने रोचतेऽतः परं स्वामी करोतु तत् । दूता न मंत्रिणः किंतु सत्यवाचिकवाचिनः ॥ २३० ॥
युगपद्विस्मयामर्षमर्षहर्षादि तत्क्षणम् । नाटयित्वा भरतवद्भरतोऽथाब्रवीदिति ॥ २३१ ॥
सुरासुरमनुष्येषु तुल्यो नामुष्य कश्चन । अर्थोनुभूत एवायं शिशुक्रीडास्वपि स्फुटम् ॥ २३२ ॥
जगत्रयस्वामिसूनोस्तस्यास्मदनुजन्मनः । त्रिलोक्यपि तृणाभेति वास्तवं न पुनः स्तवः ॥ २३३ ॥
सर्वथा श्लाघ्य एवाहमनेनावरजन्मना । भाति नैको गुरुर्बाहुर्द्वितीयस्मिन्लघीयसि ॥ २३४ ॥
सिंहः सहेतालानं चेत् शरभो वा वशं व्रजेत् । वश्यो बाहुबलिश्च स्यात्किं हि न्यूनं तदा भवेत् ॥२३५॥
तत्सहिष्यामहे तस्य वयं दुर्विनयानपि । यदि लोका अशक्तं मां वदिष्यंति वदंतु तत् ॥ २३६ ॥
सर्वमप्याप्यते वस्तु पौरुषेण धनेन वा । न भ्राता प्राप्यते क्वापि तादृशस्तु विशेषतः ॥ २३७ ॥

---

१ रणकण्डूयुक्तभुजदण्डाः । २ सत्यः पतिव्रताः स्त्रियः । ३ अब्दे वर्षे करा राजदेयभागाः विष्टग. वेतन विना भारादिवहनजन्याः क्लेशाः येषां ते । ४ योद्धुमिच्छया । ५ सत्यसन्देशवाचिनः । ६ भरतवत् सूत्रभारवत् । ७ तृणसदृशी । ८ आलान बन्धनं ।

किमेवं युज्यते नो वा तूष्णीमास्थाय किं स्थिताः । उदासीना इव यूयं यथार्थं ब्रूत मंत्रिणः ॥ २३८ ॥
क्षमया स्वामिनो बाहुबलेरविनयेन च । प्रहारेणेव दूनोऽथ सेनानीरित्यवोचत ॥ २३९ ॥
ऋषभस्वामिनः सूनोः सुप्रभोर्भरतेशितुः । उचितैव क्षमा किंतु करुणाभाजने[1] जने ॥ २४० ॥
वसेद्ग्रामेपि यो यस्य तस्याधीनः स जायते । स देशमपि भुंजानो वाचापि न वशस्तव ॥ २४१ ॥
प्राणापहार्यपि वरं वैरी तेजः प्रवर्धयन् । न तु बंधुरपि भ्रातुस्तेजोवधविधायकः ॥ २४२ ॥
कोशैः सैन्यैः सुहृद्भिश्च तनयैर्वपुषापि च । तेजो रक्षति राजानस्तेषां तेजो हि जीवितम् ॥ २४३ ॥
किमपूर्णं स्वराज्येनाप्यभूद्भर्तुः कृतस्तु यः । षट्खंडभरतक्षेत्रविजयस्तेजसे स तु ॥ २४४ ॥
एकत्रापि क्षतं तेजः सर्वत्र क्षतमेव हि । एकदापि सती लुप्तशीला स्यादसती सदा ॥ २४५ ॥
संविभागो धनेष्वेव गृहिणामपि बांधवैः । गृह्यमाणं तेपि तेजो नापेक्षंते मनागपि ॥ २४६ ॥
सकलं भरतं जिष्णोर्यदिहाविजयः प्रभोः । उत्तीर्णस्य पयोराशिं[2] गोष्पदे तन्निमज्जनम् ॥ २४७ ॥
किं च श्रुतमिदं क्वापि दृष्टं वा क्वापि यद्भुवि । चक्रिणोपि प्रतिस्पर्धी राजा राज्यं भुनक्ति च ॥ २४८ ॥
तत्राविनीते यः स्नेहो भ्रातृसंबंधमात्रजः । तदेतदेकहस्तेन तालिकावादनं विभोः ॥ २४९ ॥
वेश्याजन इवास्नेहे तत्रापि स्नेहलः प्रभुः । एवं निगदतो नश्चेन्निषेधति निषेधतु ॥ २५० ॥
शत्रून् सर्वान्विजित्यांतः प्रवेक्ष्यामीति संश्रवात् । निषेधिता कथं चक्रं देवोऽद्यापि बहिःस्थितम् ॥२५१॥
भ्रातृव्याजाद्द्विषन्[3] नेष युज्यते नत्वुपेक्षितुम् । अमुमर्थं प्रभुः पृच्छत्वपरानपि मंत्रिणः ॥ २५२ ॥

१ करुणाभाजने दयापात्रे । २ पयोराशिं समुद्रं । ३ द्विषन् शत्रुः ।

संमुखालोकनेनानुयुक्तो[1] वसुमतीभुजा । वाचस्पतिसमोऽवोचदथैवं सचिवाग्रणीः ॥ २५३ ॥
सेनानीरुक्तवान् युक्तं कोऽन्यो वक्तुमिदं क्षमः । स्वामितेजो ह्युपेक्षंते विक्रमायासभीरवः ॥ २५४ ॥
तेजसे स्वामिनादिष्टा अपि प्रायो नियोगिनः । रचयंत्युत्तरं स्वार्थे व्यसनं वर्द्धयंति वा ॥ २५५ ॥
अयं तु सेनाधिपतिर्दैवकीयस्य[2] तेजसः । पवनः पावकस्येव केवलं वृद्धिहेतवे ॥ २५६ ॥
चक्ररत्नमिव स्वामिन् सेनाधिपतिरप्यसौ । अपि स्तोकं द्विपक्षेपमविजित्य न तुष्यति ॥ २५७ ॥
पर्याप्तं तद्विलंबेन दंभहस्तैस्त्वदाज्ञया । प्रयाणभंजातोऽद्यैव ताड्यतां प्रतिपक्षवत्[3] ॥ २५८ ॥
सर्पता तन्निदानेन सवाहनपरिच्छदाः । मिलंतु सैन्याः सुघोषाघोषेणेव दिवौकसः ॥ २५९ ॥
विदधातु प्रयाणं च देवस्तक्षशिलां प्रति । उत्तराभिमुखं तेजोवृद्धये भानुमानिव ॥ २६० ॥
गत्वा स्वयमपि स्वामी भ्रातुः सौभ्रात्रमीक्षताम् । वेत्तु सत्यमसत्यं वा सुवेगमुखवाचिकम् ॥ २६१ ॥
तद्वचो भरताधीशस्तथेति प्रत्यपद्यत । युक्तं वचोऽपरस्यापि मन्यंते हि मनीषिणः ॥ २६२ ॥
ततः शुभेह्नि भूपालः कृतयात्रिकमंगलः । आरुरोह प्रयाणाय नागं नगमिवोन्नतम् ॥ २६३ ॥
स्यंदनाश्वरथारूढैः पत्तिभिश्च सहस्रशः । यात्रातूर्याण्यवाद्यंतान्यराजैकचमूनिभैः ॥ २६४ ॥
नादैः प्रयाणतूर्याणां सर्वसैन्यान्यथामिलन् । समहस्तकनिर्घोषैरिव संगीतकारिणः ॥ २६५ ॥
नरेंद्रमंत्रिसामंतचमूपैः परिवारितः । अनेकमूर्त्तिर्भूत्वेव नगर्या निर्ययौ नृपः ॥ २६६ ॥
अथ यक्षसहस्रेणाधिष्ठितं भरतेशितुः । अभूत्सेनापतिरिव चक्ररत्नं पुरस्सरम् ॥ २६७ ॥

१ अनुयुक्तः पृष्टः । २ देवसम्बन्धिनः । ३ प्रतिपक्षवत् शत्रुवत् ।

राज्ञः प्रयाणपिशुनाः पांशुपूराश्च मूर्छिताः । दूरमाशु प्रसस्रुरपसर्पा इव द्विषाम् ॥ २६८ ॥

तदा प्रचलितैस्तस्य लक्षसंख्यैर्मतंगजैः । अलक्ष्यंत गजोत्पत्तिभूमयो निर्गजा इव ॥ २६९ ॥

चलद्भिस्तस्य तुरगैः स्यंदनैर्वेसरैर्मयैः । निर्वाहनमभून्मध्ये सर्वमन्यन्महीतलम् ॥ २७० ॥

पादातं पश्यतां तस्य बभौ नरमयं जगत् । अंभोधिं वीक्ष्यमाणानामंभोमयमिवाखिलम् ॥ २७१ ॥

साधितं भरतक्षेत्रं क्षेत्रमेकमिवामुना । पूर्वाणीव मुनिः प्राप रत्नान्यपि चतुर्दश ॥ २७२ ॥

आयुधा इव निधयोऽस्याभुवन् वशगा नव । एवं संति कुतो हेतोः क्व वा प्रास्थित पार्थिवः ॥ २७३ ॥

यदृच्छया गच्छति वा स्वदेशान्वैप वीक्षितुम् । विपत्साधनहेतुस्तच्चक्रमग्रे प्रयाति किम् ॥ २७४ ॥

ध्रुवं दिगनुमानेन याति बाहुबलिं प्रति । अहो अखंडप्रसराः कषाया महतामपि ॥ २७५ ॥

स तावच्छ्रूयते देवासुरैरपि सुदुर्जयः । तं जिगीषुरसौ मेरुमंगुल्योद्धर्तुमिच्छति ॥ २७६ ॥

जितोऽनुजोनुजेनापि जित इत्ययशो महत् । महीपतेरुभयथाप्यत्र नूनं भविष्यति ॥ २७७ ॥

प्रतिप्रवादा लोकानां ग्रामे ग्रामे पुरे पुरे । मार्गे मार्गे च भूपस्य गच्छतो जज्ञिरे चिरम् ॥ २७८ ॥

सप्तभिः कुलकम् ॥

वर्द्धिष्णुमिव विंध्याद्रिमंधकारमिवोच्छलत् । उत्पतत्पांशुपूरेण सर्वतोपि प्रदर्शयन् ॥ २७९ ॥

हेषाबृंहितचीत्कारकरास्फोटरवैर्दिशः । नादयन् पृतनांगानां चतुर्णामानकैरिव ॥ २८० ॥

---

१ प्रयाणसूचकाः । २ अपसर्पा गुप्तचराः । ३ वेसरैः अश्वतरैः । ४ मयैरुष्ट्रैः । ५ पदातीना समूह । ६ आनकैः वाद्यविशेषैः ।

शोषयन्मार्गसरितो ग्रीष्मार्क इव सर्वतः । पवमान[1] इवोद्दामः पातयन्नध्वपादपान् ॥ २८१ ॥
बलाकिनीमिव[2] दिवं कुर्वन्सैन्यध्वजांशुकैः । सैन्यार्दितामिभमदैर्भुवं निर्वापयन्निव ॥ २८२ ॥
दिने दिने नरपतिर्गच्छंश्चक्रपदानुगः । राश्यंतरमिवा[3]दित्यो बहलीदेशमासदत् ॥ २८३ ॥
पंचभिः कुलकम् ॥
प्रवेशे तस्य देशस्य निवेश्य शिबिरं नृपः । अवतस्थे समर्यादो मर्यादायामिवार्णवः ॥ २८४ ॥
अज्ञासीदागतं तत्र सुनंदानंदनोपि तम् । राजनीतिगृहस्तंभैः सद्यः प्रणिधिपूरुषैः[4] ॥ २८५ ॥
अथ बाहुबलिर्यात्राहेतोर्भंभामवीवदत् । प्रतिनादैर्निनदतीं द्यां भंभीकुर्वतीमिव ॥ २८६ ॥
कृतप्रस्थानकल्याणः कल्याणमिव मूर्त्तिमत् । आरुरोहोत्साहमिव भद्रं[5] बाहुबलिर्द्विपम् ॥ २८७ ॥
नृपैः कुमारैः सचिवैः प्रवीरैरपरैरपि । सद्योपि परिवव्रे स सुरैरिव पुरंदरः ॥ २८८ ॥
महाबलैर्महोत्साहैरेककार्यप्रवर्त्तिभिः । अभेद्यैस्तैरात्मनोऽशैरिव बाहुबलिर्बभौ ॥ २८९ ॥
निषादिनः सादिनश्च रथिनोऽथ पदातयः । तस्येयुर्लक्षशः सद्यस्तन्मनोधिष्ठिता इव ॥ २९० ॥
ओजस्विभिरुदस्त्रैः स्वैरेकवीरमयीमिव । स वीरैरचयन्नुर्वी चचालाचलनिश्चयः ॥ २९१ ॥
अहमेकोपि जेष्यामि परानपि परस्परम् । तद्वीरा व्यवदन्भिःसंविभागजयगृध्नवः ॥ २९२ ॥
तत्र सैन्ये वीरमानी काहला[6]वादकोप्यभूत् । सर्वेपि मणितामाजः कर्करा अपि रोहणे[7] ॥ २९३ ॥

१ पवमानः पवनः । २ बलाकिनीं बलाकायुता । ३ मेषादिराश्यन्तर । ४ प्रणिधिपूरुषैश्चरपूरुषैः । ५ भद्राख्यं मङ्गलमय वा ।
६ काहलो वाद्यविशेषः । ७ रोहणे रोहणाचले ।

महामांडलिकछत्रमंडलैरिंदुपांडुभिः । पुंडरीकमयीवद्यौस्तदानीं समजायत ॥ २९४ ॥
ययौ बाहुबलिः पश्यन् प्रत्येकमपि भूभुजः । भुजानिव निजानुच्चैर्मन्यमानो महौजसः ॥ २९५ ॥
भुवं भारैरनीकानां जयतूर्यरवैर्दिवम् । आस्फोटयदिवोद्दामैर्व्रजन् बाहुबलिः पथि ॥ २९६ ॥
स्वदेशसीम्नि दूरेपि शीघ्रं बाहुबलिर्ययौ । वायुतोपि भृशायंते समरोत्कंठिताः खलु ॥ २९७ ॥
गंगातटे बाहुबलिः स्कंधावारं न्यवेशयत् । नात्यासन्ने नातिदूरे शिबिराद्भरतेशितुः ॥ २९८ ॥
प्रातर्युद्धोत्सवायाथ मागधैर्ऋषभात्मजौ । निमंत्रयामासतुस्तावन्योन्यमतिथी इव ॥ २९९॥
अथ बाहुबलिर्भक्तं राजकानुमतं सुतम् । चक्रे सेनापतिं सिंहरथं सिंहसमौजसम् ॥ ३०० ॥
मूर्ध्नि पट्टद्विपस्येव रणपट्टोऽस्य भूभुजा । स्वयं न्यवेशि सौवर्णः प्रताप इव भासुरः ॥ ३०१ ॥
स राजानं नमस्कृत्य लब्धया रणशिक्षया । भुवेव प्राप्तया हृष्टो ययावावासमात्मनः ॥ ३०२ ॥
राजा युद्धार्थमादिश्यान्यानपि व्यसृजन्नृपान् । स्वयंवरार्थिनां तेषां सत्कारः स्वामिशासनम् ॥ ३०३ ॥
कुमारनृपसामंतसंमतां भरतोपि हि । रणदीक्षां सुषेणस्य ददावाचार्यवर्यवत् ॥ ३०४ ॥
सिद्धिमंत्रमिवादाय सुषेणः स्वामिशासनम् । चक्रवाक इव प्रातः काम्यन् निजगृहं ययौ ॥ ३०५ ॥
कुमारान् बद्धमुकुटान् सामंतानितरानपि । आहूय भरताधीशः समरायैवमन्वशात् ॥ ३०६ ॥
सेनापतिः सुषेणोऽयं रणे मदनुजन्मनः । अप्रमत्तैरहमिवानुगम्यो हे महौजसः ॥ ३०७॥
भो भो भवद्भिर्भूयांसो भूभुजो भुजदुर्मदाः । महामात्रैरिव व्याला व्यधीयंत वशंवदाः ॥ ३०८ ॥

---

१ मागधैश्चारणैः । २ व्याला दुष्टगजाः ।

वैताढ्याद्रिमतिक्रम्य किराताश्च दुराक्रमाः । विक्रांतैर्गाढमाक्रांता हंत देवैरिवासुराः ॥ ३०९ ॥
जीयंतां हंत ते सर्वे यतस्तेषु न कोप्यभूत् । अपि तक्षशिलाधीशपत्तिमात्रस्य संनिभः ॥ ३१० ॥
एकोपि सोमः सैन्यानि तूलानीव समीरणः । दिशो दिशि क्षेप्तुमलं ज्येष्ठो बाहुबलेः सुतः ॥ ३११ ॥
कनिष्ठो वयसा तस्याकनिष्ठो विक्रमेण[1] तु । महारथः सिंहरथः शत्रुसैन्यदवानलः ॥ ३१२ ॥
किं च बाहुबलेः पुत्रपौत्रादिष्वपरेषु च । एकैकोऽक्षौहिणीमल्लः कृतांतस्यापि भीतये ॥ ३१३ ॥
सामंताद्याश्च ये तस्य स्वामिभक्ता बलेन च । तोल्यंते तेपि तैः सार्द्धं प्रतिमानस्थिता[2] इव ॥ ३१४ ॥
अन्यसैन्येऽग्रणीर्यादृग्भवत्येको महाबलः । सर्वेपि तादृशाः सैन्याः सैन्ये तस्य महौजसः ॥ ३१५ ॥
दूरे बाहुबलिस्तावत्स महाबाहुराहवे[3] । एतस्यैकोपि हि व्यूहो[4] दुःस्फोटो हंत वज्रवत् ॥ ३१६ ॥
तद्युद्धायाभिगच्छंतं सुषेणमनुगच्छत । प्रावृषेण्यं पयोवाहं[5] पौरस्त्यपवना[6] इव ॥ ३१७ ॥
सुधोपमगिरा भर्तुरंतस्ते पूरिता इव । स्फारीबभूवुर्वपुषः पुलकेन समंततः ॥ ३१८ ॥
विसृष्टास्ते नरेंद्रेण जयश्रीणामिव स्वयम् । वरणं प्रतिवीराणां कुर्वाणाः स्वं गृहं ययुः ॥ ३१९ ॥
द्वयोरपि तदार्षभ्योः प्रसादार्णमहार्णवम् । तितीर्षवो[7] वीरवरास्ससज्जूरणकर्मणे ॥ ३२० ॥
कृपाणचापतूणीरगदाशक्त्यादिकानि च । आनर्चुर्दैवतानीव स्वानि स्वान्यायुधानि ते ॥ ३२१ ॥
शस्त्राग्रे वादयामासुस्तूर्याण्युच्चैर्महाभटाः । तालं पूरयितुमिवोत्साहाच्चित्तस्य नृत्यतः ॥ ३२२ ॥

---

१ विक्रमेण पराक्रमेण अकनिष्ठः श्रेष्ठः । २ प्रतिमानस्थिता इव प्रतिबिम्बस्थिता इव । ३ आहवे युद्धे । ४ व्यूहः सैन्यरचनाविशेषः । ५ पयोवाह मेघ । ६ पौरस्त्यपवनाः पूर्वदिक्पवनाः । ७ तर्त्तुमिच्छवः ।

आत्मानं मार्जयंति स्म चंदनोद्वर्त्तनैर्नवैः । महाभटाः सुरभिभिः स्वयशोभिरिवामलैः ॥ ३२३ ॥
चक्रुर्भटा मार्गमदीर्ललाटेषु ललाटिकाः[1] । आबद्धमेचकपटवीरपट्टविडंबिनीः[2] ॥ ३२४ ॥
शस्त्राणि जाग्रतां भावि शस्त्राशस्त्रिकथाकृताम्[3] । सैन्यद्वयेपि वीराणां निद्रा भीतेव नाययौ ॥ ३२५ ॥
सैन्यद्वितयवीराणां प्रातर्युद्धाभिकांक्षिणाम् । त्रियामा शतयामेव कथंचिदपि सा ययौ ॥ ३२६ ॥
आर्षभ्योर्वीक्षितुमिव रणक्रीडाकुतूहलम् । अथारुरोह चंडांशुरुदयाचलचूलिकाम् ॥ ३२७ ॥
मंदरक्षुब्धसंक्षुभ्यत्पयोधिपयसामिव । पुष्करावर्त्तमेघानामिव प्रलयजन्मनाम् ॥ ३२८ ॥
दंभोलि[4]ताड्यमानानामिव सानुमतां महान् । प्रणादो रणतूर्याणां सैन्ययोरुभयोरभूत् ॥ ३२९ ॥
॥ युग्मम् ॥
उत्कर्णतालास्तत्कालं वित्रेसुर्दिग्मतंगजाः । सभय[5]भ्रांतयादस्काश्चुक्षुभुश्च पयोधयः ॥ ३३० ॥
गुहासु विविशुः क्रूराण्यपि सत्वानि[6] सर्वतः । रंध्रादपि हि रंध्रेषु न्यलीयंत महोरगाः ॥ ३३१ ॥
गल[7]शैलीभवच्छृंगाः शैलाश्च प्रचकंपिरे । बिभाय[8] संकुचत्पादकंठं कमठराडपि ॥ ३३२ ॥
बाढमध्वंसतेव द्यौर्विदद्र इव मेदिनी । रणातोद्यप्रणादेन तदा तेन प्रसर्पता ॥ ३३३ ॥
चतुर्भिः कलापकं ॥

---

१ ललाटालङ्कारान् । २ मेचकपटशब्देन कृष्णवस्त्र बोध्यम् । ३ शस्त्राशस्त्रिकथाकृताम् शस्त्राशस्त्रियुद्धकथा. कुर्वाणानाम् । ४ दम्भोलिर्वज्र तेन ताड्यमानाना । ५ सभय भ्रान्तानि यादांसि जलजन्तवो येषु ते । ६ सत्वानि जन्तवः । ७ शिलीभवच्छिखराः । ८ बिभाय भयं प्राप्तः ।

राजदौवारिकेणेव रणतूर्येण चालिताः । उभयोः सैन्ययोः सैन्याः ससज्जुरथ संयते[1] ॥ ३३४ ॥
रणोत्साहोच्छ्वसद्देहात्त्रुट्यंतीर्वर्मजालिकाः[2] । भूयो भूयो नवनवास्ताः केपि समचारयन् ॥ ३३५ ॥
आरोचकितयाश्वान् केप्यात्मना समनाहयन् । स्वतोपि ह्यधिकां रक्षां भटाः कुर्वंति वाहने ॥ ३३६ ॥
सन्नाह्यारुह्य केप्यश्वान्परीक्षितुमवाहयन् । दुःशिक्षितो जरूश्चाश्वः शत्रुवत्येव[3] सादिनि ॥ ३३७ ॥
सन्नाहग्राहणे केपि हेषमाणांस्तुरंगमान् । आनर्चुर्दैववद्युक्ते हेषा[4] हि जयसूचिनी ॥ ३३८ ॥
लब्ध्वाश्वान् केप्यसन्नाहान् सन्नाहान् विजहुर्निजान् । शौण्डीरदोष्णां[5] समरेष्विदं हि पुरुषव्रतम् ॥ ३३९ ॥
अस्खलन् संचरैर्घोरे रणे मत्स्य इवार्णवे । दर्शयेः कौशलमिति शशासुः केपि सारथिम् ॥ ३४० ॥
पथिका इव पाथेयैरस्त्रैः केपि निजान् रथान् । समंतात्पूरयामासुः पश्यतः समरं चिरम् ॥ ३४१ ॥
दूरादात्मख्यापनाय केपि वैतालिकानिव[6] । उत्तंभितस्वस्वचिह्नान् ध्वजस्तंभान् दृढान् व्यधुः ॥ ३४२ ॥
रथेष्वायोजयन्केपि सुश्लिष्टयुगशालिषु[7] । परसैन्यपयोराशिजलकांतांस्तुरंगमान् ॥ ३४३ ॥
सारथिभ्यो दृढीयांसि[8] तनुत्राणानि[9] केप्यदुः । संरथ्या[10] अपि हि रथा निःफलाः सारथिं विना ॥ ३४४ ॥
उद्दामलोहवलयश्रेणिसंपर्ककर्कशान् । आनर्चुर्दंतिनां दंतान्केचिन्निजभुजानिव ॥ ३४५ ॥
करिष्वारोपयन् शारीः[11] पताकामालधारिणीः । केचिद्वासगृहाणीव समेष्यंत्या जयश्रियः ॥ ३४६ ॥
सद्यः स्फुटत्करगजमदैर्मृगमदैरिव[12] । जल्पंतः शकुनमिति तिलकान् केपि चक्रिरे ॥ ३४७ ॥

---

१ संयते युद्धाय । २ कवचजालिकाः । ३ शत्रुवदाचरति । ४ हेषा अश्वशब्दः । ५ पराक्रमिभुजाना । ६ चारणान् । ७ सुश्लिष्टैर्युगैः धूर्भिः शालन्ते तेषु । ८ दृढतराणि । ९ कवचानि । १० अश्वसहिताः । ११ शारीः युद्धे गजपर्याणानि । १२ मृगमदैः कस्तूरीभि.।

परेत्नमदगंधाढ्यं वायुमप्यसहिष्णवः । कैश्चिदप्यारुरुहिरे मनोवहुर्धरा गजाः ॥ ३४८ ॥
सौवर्णान् ग्राहयामासुः सर्वैः सर्वैपि सिंधुरैः । समरोत्सवशृंगारचोलकानिव कंटकान् ॥ ३४९ ॥
उन्नालनीलनलिनीलीलया लोहमुद्गरान् । कुंजरैर्ग्राहयामासुः कराग्रेषु निषादिनः ॥ ३५० ॥
कालायसमयान् कोशानाशु हस्तिपकाः शितान् । यमस्येवाहृतान् दंतान् दंतिदंतेषु विन्यधुः ॥ ३५१ ॥
वेशराः शकटाश्चास्त्रपूर्णास्तूर्णं प्रयांत्वनु । अन्यथा लघुहस्तानामस्त्रं पूरिष्यते कथम् ॥ ३५२ ॥
वर्मपूर्णाश्च यांतूष्ट्रा वर्माण्यग्रे धृतानि यत् । त्रुटिष्यंति हि वीराणामत्रुटद्रणकर्मणाम् ॥ ३५३ ॥
रथांतराणि गच्छंतु सज्जानि रथिनामनु । भज्यंते हि रथाः शस्त्राशनिपातान्नगा इव ॥ ३५४ ॥
श्रांतेषु प्रथनाश्वेषु यद्विघ्नो मास्मभूदिति । सादिनां पृष्ठतो यांतु शतशोऽश्वांतराण्यपि ॥ ३५५ ॥
एकैकं बद्धमुकुटं भूयांसोप्यनुयांत्विभाः । न निर्वहति यत्तेषामिभेनैकेन संगरः ॥ ३५६ ॥
गच्छंतु महिषाश्चानुसैनिकं वारिवाहिनः । रणायासनिदाघर्त्तुतप्तानां जंगमप्रपाः ॥ ३५७ ॥
कोश इवौषधीशस्य सारं हिमगिरेरिव । उत्पाठ्यंतां च गौणीभी रोहणौषधयो नवाः ॥ ३५८ ॥
रणे राजनियुक्तानामित्याज्ञापनजन्मभिः । कोलाहलैरतायिष्ट रणतूर्यमहार्णवः ॥ ३५९ ॥
॥ अष्टभिः कुलकम् ॥
विश्वं शब्दमयमिव तुमुलैर्विष्वगुत्थितैः । अयोमयमिव चासीत् सर्वतः प्रेंखदायुधैः ॥ ३६० ॥

---

१ कृष्णलोहमयान् । २ हस्तलाघववतां । ३ अविच्छिन्नरणकर्मणाम् । ४ अन्ये रथाः । ५ अन्ये अश्वाः । ६ रणप्रयासग्रीष्मर्तुतप्ताना । ७ जङ्गमजलसत्राणि । ८ व्रणशमन्यः औषधयः । ९ लोहमयमिव ।

स्मारयंतश्चरित्राणि पूर्वेषां दृष्टपूर्विवत् । शंसंतो रणनिर्वाहफलं ¹व्यासवदुच्चकैः ॥ ३६१ ॥
उद्दीपनाय वीराणां कीर्त्तयंतो मुहुर्मुहुः । उपस्थितान् प्रतिभटान् सादरान्नारदर्षिवत् ॥ ३६२ ॥
प्रतिनागं प्रतिरथं प्रत्यश्वं पर्ववन्मुदा । वैतालिका रणोत्तालास्तत्र भ्रेमुरनाकुलम् ॥ ३६३ ॥

त्रिभिर्विशेषकम् ॥

अथ बाहुबलिः स्नात्वा प्रययौ देवमर्चितुम् । देवागारे गरी²यांसः कार्ये मुह्यन्ति न क्वचित् ॥ ३६४ ॥
ऋषभस्वामिनस्तत्र प्रतिमा गंधवारिभिः । भक्त्या सोऽस्नपयज्जन्माभिषेक इव वासवः ॥ ३६५ ॥
दिव्यया गंधकाषाय्या निःकषायस्ततः स ताम् । ममार्ज परमश्राद्धः श्रद्धयेव निजं मनः ॥ ३६६ ॥
प्रतिमायास्ततो यक्ष³कर्दमेन विलेपनम् । चक्रे दिव्यांशुकमयं रचयन्निव चोलकम् ॥ ३६७ ॥
राजा जिनार्चामानर्च विचित्रैः पुष्पदामभिः । सुरकु⁴सुमनोदामसोदरैरिव सौरभात् ॥ ३६८ ॥
सौवर्णे धूपदहने दिव्यं धूपं ददाह च । तद्धूमैरचयन्पूजां नीलोत्पलमयीमिव ॥ ३६९ ॥
ततः कृतो⁵त्तरासंगो मकर⁶स्थ इवार्⁷यमा । प्रतापमिव जग्राहारात्रिकं दीप्रदीपकम् ॥ ३७० ॥
तदारात्रिकमुत्तार्य प्रणम्य च कृतांजलिः । आदिनाथं बाहुबलिर्भक्तिमानेवमस्तवीत् ॥ ३७१ ॥
अवज्ञायाज्ञतां स्वस्य सर्वज्ञ त्वां स्तवीम्यहम् । यन्मां मुखरयत्येषा दुर्वारा भक्तिमानिता ॥ ३७२ ॥

---

१ व्यासाः पुराणकथावाचकास्तद्वत् । २ गरीयासः महान्तः ३ कुङ्कुमागुरुकस्तूरी कर्पूर चन्दन तथा । महासुगन्धमित्युक्तं नामतो यक्षकर्दम इत्युक्तेन विलेपनविशेषेण ।४ कल्पवृक्षपुष्पमालासहोदरैरिव । ५ कृतः उत्तरासङ्गो येन सः सूर्यपक्षे कृतः उत्तरदिशः सङ्गो येन सः । ६ मकरस्थ.मकरराशिस्थितः । मकरराशिस्थः सूर्य उत्तरासङ्गं करोति तदैवोत्तरायणं भवति । ७ अर्यमा सूर्यः ।

जयंत्यादिमतीर्थेश त्वत्पादनखदीप्तयः । वज्रपंजरतां यांत्यो भवारित्रस्तदेहिनाम् ॥ ३७३ ॥
देव त्वच्चरणांभोजमीक्षितुं राजहंसवत् । धन्याः प्रतिदिनं दूरादपि धावंति देहिनः ॥ ३७४ ॥
घोरसंसारदुःखार्त्तैः शीतार्तैरिव भास्करः । शरणीक्रियसे देव त्वमेवैको विवेकिभिः ॥ ३७५ ॥
ये त्वां पश्यंति भगवन्नेत्रैरनिमिषैर्मुदा । परलोकेप्यनिमिषीभावस्तेषां न दुर्लभः ॥ ३७६ ॥
देव त्वद्देशनावाग्भिर्याति कर्ममलो नृणाम् । क्षीरेण क्षौमवस्त्राणामिव मालिन्यमांजनम् ॥ ३७७ ॥
स्वामिन्नृषभनाथेति जप्यमाना तवाभिधा । आलंबते सर्वसिद्धिसमाकर्षणमंत्रताम् ॥ ३७८ ॥
न वज्रमपि भेदाय न शूलमपि हि छिदे । तेषां शरीरिणां नाथ येधित्वद्भक्तिवर्मिताः ॥ ३७९ ॥
भगवंतमिति स्तुत्वा नत्वा च पुलकांचितः । निरगाद्देवतागारान्नरेश्वरशिरोमणिः ॥ ३८० ॥
जग्राह वज्रसन्नाहं हेममाणिक्यमंडितम् । विजयश्रीविवाहाय सकुंचकमिवोच्चकैः ॥ ३८१ ॥
शुशुभे वर्मणा तेन भासुरेण नरेश्वरः । घनैर्विद्रुमसंहत्याधिपतिर्यादसामिव ॥ ३८२ ॥
शिरस्त्राणं च शिरसि न्यधत्त धरणीधवः । शैलशृंगनिविष्टाभ्रमंडपश्रीविडंबकम् ॥ ३८३ ॥
पृष्ठेऽबध्नाच्च तूणीरौ लोहनाराचपूरितौ । महाफणिगणाकीर्णपातालविवरोपमौ ॥ ३८४ ॥
युगांतसमयोदस्तयमदंडसहोदरम् । कोदंडं वामदोर्दंडे धारयामास भूपतिः ॥ ३८५ ॥
आशास्यमानः स्वस्तीति सौवस्तिकवरैः पुरः । जीव जीवेत्युच्यमानस्वगोत्रजरतीजनैः ॥ ३८६ ॥

---

१ संसाररिपुत्रस्तप्राणिना । २ निमेषराहित्य देवत्व च । ३ कज्जलसम्बन्धि । ४ वज्रकवच । ५ घनप्रवालसमूहेन । ६ यादसां अधिपतिः समुद्रः । ७ लोहबाणपूरितौ । ८ स्वस्तिवाचकवरैः । ९ जरतीजनैः वृद्धाजनैः ।

नंद नंदेत्युद्यमानो जरदाप्तजनैः पुनः । चिरं जय जयेत्युच्चैर्गद्यमानश्च वंदिभिः ॥ ३८७ ॥
मेरुशृंगमिव [1]स्वाराएमहेन्द्रं स महाभुजः । आरुरोहारोहकेण दत्तहस्तावलंबनः ॥ ३८८ ॥
त्रिभिर्विशेषकम् ॥
इतस्तदानीमेव श्रीभरतेशोपि पुण्यधीः । जगाम देवतागारं कोशागारं शुभश्रियः ॥ ३८९ ॥
प्रतिमामादिनाथस्य स्नपयामास तत्र सः । दिग्जयानीतपद्मादितीर्थतोयैर्महामनाः ॥ ३९० ॥
ममार्ज राजशार्दूलो देवदूष्येण वाससा । प्रतिमां तामप्रतिमां शिल्पिवर्यो मणिमिव ॥ ३९१ ॥
हिमाचलकुमारादिदत्तैर्गोशीर्षचंदनैः । विलिलेप प्रतिमां तां स्वयशोभिरिवावनीम् ॥ ३९२ ॥
पद्मैर्विकस्वरैः [2]पद्मासद्मपद्मसहोदरैः । रचयामास पूजायां नयनस्तंभनौषधीम् ॥ ३९३ ॥
प्रतिमायाः पुरो धूपं निर्ददाह महीपतिः । आलिखन्निव कस्तूरीपत्रालीं धूमवल्लिभिः ॥ ३९४ ॥
निःशे[3]षकर्मसमिधामग्निकुंडमिवोल्बणम् । आदत्तारात्रिकं दीप्रदीपकं राजदीपकः ॥ ३९५ ॥
तदुत्तार्यादिनाथस्य नमस्कृत्य च नृपतिः । विरचय्यांजलिं मूर्ध्नि स्तोतुमित्युपचक्रमे ॥ ३९६ ॥
त्वां जडोपि जगन्नाथ युक्तमानी स्तवीम्यहम् । [4]लल्ला अपि हि बालानां युक्ता एव गिरो गुरौ ॥ ३९७ ॥
देव त्वामाश्रयन् जंतुर्गुरुकर्मापि सिध्यति । अयोपि हे[5]मीभवति स्पर्शात्सिद्धरसस्य हि ॥ ३९८ ॥
त्वां ध्यायंतः स्तुवंतश्च पूजयंतश्च देहिनः । धन्याः स्वामिन्नाददते मनोवाग्वपुषां फलम् ॥ ३९९ ॥

---

१ स्वाराट् इन्द्रः । २ पद्मासद्मानि लक्ष्मीगृहाणि यानि पद्मानि तैः सहोदरैः सदृशैः । ३ समग्रकर्मकाष्ठाना । ४ लल्ला अव्यक्ता गिरः । ५ सुवर्णीभवति ।

पृथ्व्यां विहरतः स्वामिन्नपि ते पादरेणवः । महामतंगजायते पापद्रुन्मूलने नृणाम् ॥ ४०० ॥
नैसर्गिकेण मोहेन जन्मांधानां शरीरिणाम् । विवेकलोचनं नाथ त्वमेको दातुमीशिषे ॥ ४०१ ॥
सुचिरं चंचरीकंति ये भवत्पादपद्मयोः । तेषां न दूरे लोकाग्रं मेर्वादि मनसामिव ॥ ४०२ ॥
देव त्वद्देशनावाग्भिर्गलंत्याशु शरीरिणाम् । कर्मपाशा जंबूफलानीव वारिदवारिभिः ॥ ४०३ ॥
इदं याचे जगन्नाथ त्वां प्रणम्य मुहुर्मुहुः । त्वयि भक्तिस्त्वत्प्रसादादक्षयास्त्वब्धिवारिवत् ॥ ४०४ ॥
आदिनाथमिति स्तुत्वा नमस्कृत्य च भक्तिमान् । निर्ययौ देवतागारान्नरदेवदिवाकरः ॥ ४०५ ॥
भूयो भूयोपि शिथिलीकृत्य माने विनिर्मितम् । अंगेन हर्षोल्लसितेनाददे कवचं नृपः ॥ ४०६ ॥
रेजे तेनांगलग्नेन दिव्येन मणिवर्मणा । माणिक्यपूजया देवप्रतिमेव महीपतिः ॥ ४०७ ॥
स्वर्णरत्नशिरस्त्राणं मध्योच्चं छत्रवर्तुलम् । द्वितीयीकमिवोष्णीषं बभार भरतेश्वरः ॥ ४०८ ॥
नागराजाविवात्यंततीक्ष्णनाराचदंतुरौ । पृष्ठे निषंगौ बिभ्रांचक्रे विश्वंभराधवः ॥ ४०९ ॥
उपाददे ततो वैरिवामं वामेन पाणिना । कालपृष्ठं महाचापं वज्रीव ऋजुरोहितम् ॥ ४१० ॥
अन्यतेजस्विनां तेजो ग्रसमानो दिनेंद्रवत् । लीलास्थिरपदन्यासं क्रामन् भद्रगजेंद्रवत् ॥ ४११ ॥
तृणवद्गणयन्नग्रे प्रतिवीरान् मृगेंद्रवत् । दृष्ट्यापि दुर्विषहया भीषणः पन्नगेंद्रवत् ॥ ४१२ ॥
वंदिवृंदारकैरुच्चैः स्तूयमानो महेंद्रवत् । नरेंद्रोऽथ स निस्तंद्रमारुरोह मतंगजम् ॥ ४१३ ॥
त्रिभिर्विशेषकम् ॥

१ चञ्चरीकन्ति भ्रमरायन्ते । २ उष्णीष शिरोवेष्टन । ३ पृथ्वीपतिः । ४ शत्रुषु विपरीत ।

मागधेन्यः प्रयच्छंतौ द्रविणं कल्पशाखिवत्[1] । पश्यंतावागतान् सैन्यान् सहस्रेक्षणवन्निजान् ॥ ४१४ ॥
बिभ्राणौ बाणमेकं च मृणालं राजहंसवत् । कुर्वाणौ रणवार्त्तां च रतवार्त्तां विलासिवत् ॥ ४१५ ॥
महोत्साहौ महौजस्कौ नभोमध्यं दिनेशवत् । उभावप्यार्षभी स्वस्वसैन्यमध्यमथेयतुः ॥ ४१६ ॥
त्रिभिर्विशेषकम् ।

भरतो बाहुबलिश्च निजसैन्यांतरस्थितः । बभार जंबूद्वीपांतर्वर्त्तिमेरुगिरिश्रियम् ॥ ४१७ ॥
तयोश्च सेनयोरंतर्वर्त्तिनी भूरलक्ष्यत । विदेहक्षेत्रभूमीव मध्ये निषधनीलयोः[2] ॥ ४१८ ॥
उभे अपि तयोः सेने पंक्तीभूयाभ्यसर्पताम् । कल्पांतसमये पूर्वापरवारिनिधी[3] इव ॥ ४१९ ॥
बहिर्विस्फुरय गच्छंतो न्यवार्यंत पदातयः । राजदौवारिकैर्[4]वारिप्रवाहा इव सेतुभिः ॥ ४२० ॥
मिथः समपदन्यासं चेलू राजाज्ञया भटाः । ते तालैकसंगीतवर्त्तिनो नर्त्तका इव ॥ ४२१ ॥
अलंघितनिजस्थानं चलद्भिः सर्वसैनिकैः । पताकिन्यौ तयोरेकतनू इव विरेजतुः ॥ ४२२ ॥
दारयंतः शतांगानां रथांगैरायसाननैः । अयःकुद्दालकल्पैश्च[5] खनंतो वाजिनां खुरैः ॥ ४२३ ॥
भिंदाना वेसरखुरैरर्द्धचंद्रैरिवायसैः । क्षुदंतश्च पदातीनां चरणैर्वज्रपार्ष्णिभिः ॥ ४२४ ॥
खंडयंतः क्षुरप्राभै[6]र्महिषोक्षखुरैः[7] खरैः । मुद्गराभैः करिपादैश्चूर्णयंतश्च मेदिनीम् ॥ ४२५ ॥
छादयंतो रजोभिर्घामंधकारसहोदरैः । द्योतयंतश्च शस्त्रास्त्रैर्भानुमद्भानुबंधुभिः[8] ॥ ४२६ ॥

---

१ कल्पवृक्षवत् । २ निषधनीलवतयोः पर्वतयोः । ३ पूर्वपश्चिमसमुद्रौ । ४ राजद्वारपालैः । ५ कुद्दालाख्यखननशस्त्रविशेषतुल्यैः । ६ क्षुर केशच्छेदशस्त्र तस्य प्रा धारा सा इव आभातीति तैः । ७ महिषवृषखुरैः । ८ सूर्यकिरणसदृशैः ।

भूयसा निजभारेण क्लिश्नंतः कूर्मकर्परम् । दंष्ट्रां महावराहस्य नामयंतः समुन्नताम् ॥ ४२७ ॥
गाढं शिथिलयंतश्च फणाटोपं फणीशितुः । दिग्गजानपि खर्वांगीकुर्वंतो निखिलानपि ॥ ४२८ ॥
ब्रह्मांडभांडं क्ष्वेडाभिर्वादयंत इवोच्चकैः । करास्फोटप्रणादैश्च स्फोटयंत इवोत्कटैः ॥ ४२९ ॥
उपलक्ष्योपलक्ष्योच्चैर्विश्रुतैः केतुलांछनैः । नामग्राहं च शृण्वंतः प्रतिवीरान् महौजसः ॥ ४३० ॥
अन्योन्यमाह्वयमाना मानशौंडीर्यशालिनः । अन्यसैन्यैरग्रसैन्या अमिलन् सैन्ययोर्द्वयोः ॥ ४३१ ॥
नवभिः कुलकम् ।

गजिनो गजिनां यावद्यादांसि यादसामिव । सादिनां सादिनो यावद्वीचीनामिव वीचयः ॥ ४३२ ॥
रथिनां रथिनो यावद्वायूनामिव वायवः । पत्तीनां पत्तयो यावच्छृंगिणामिव शृंगिणः ॥ ४३३ ॥
प्रासं प्रासस्यासिमसेर्मुद्गरं मुद्गरस्य च । दंडं दंडस्य चामर्षान्मेलयंतो कुढौकिरे ॥ ४३४ ॥
तावन्नभसि संभ्रांतास्त्रैलोक्योन्माथशंकया । उपर्युपरि गीर्वाणं गीर्वाणाः समुपागमन् ॥ ४३५ ॥
चतुर्भिः कलापकम् ।

संघर्षः कोयमार्षभ्योः स्वकयोरिव हस्तयोः । इत्यामृशंतस्ते प्रोचुरुभयोः सैनिकानिति ॥ ४३६ ॥
ऋषभस्वामिनोऽस्त्याज्ञा योद्धव्यं केनचिन्न हि । युष्माकं स्वामिनौ यावद्बोधयामो मनस्विनौ ॥ ४३७ ॥
आज्ञया त्रिजगद्भर्तुरुभयोरपि सैनिकाः । तथैव तस्थुस्ते सर्वेप्यालेख्यलिखिता इव ॥ ४३८ ॥
किममी बाहुबलिनः किंवा भरततः सुराः । एवं तु चिंतयामासुः सैनिकास्ते तथास्थिताः ॥ ४३९ ॥

१ कूर्मपृष्ठ । २ महावराहस्य दंष्ट्राया भूमेः स्थितिरिति अन्यमताभिप्रायेणोक्त । ३ कुब्जीकुर्वन्तः । ४ सिंहनादैः । ५ चित्रालिखिता इव ।

न व्यनश्यदहो कार्यं भङ्‌ लोकाय संप्रति । इति ब्रुवाणा गीर्वाणाश्चक्रिणं ययुरादितः ॥ ४४० ॥
दत्वा जयजयेत्याशीर्वादं देवाः प्रियंवदाः । युक्तियुक्तेन वचसा तं मंत्रिण इवावदन् ॥ ४४१ ॥
साधु षट्खंडभरतक्षेत्रभूपास्त्वया जिताः । नृदेव देवराजेन पूर्वदेवा[1] इवान्वितः ॥ ४४२ ॥
तवौजसा तेजसा च तेषु राजेंद्र राजसु । मृगेषु शरभस्येव प्रतिमल्लो[2] न कोप्यभूत् ॥ ४४३ ॥
अपूर्यत रणश्रद्धा तैर्नूनं भवतो नहि । हैयंगवीनश्रद्धेव[3] वारिकुंभैर्विलोडितैः ॥ ४४४ ॥
द्वितीयेनात्मनो भ्रात्रा सहारेभे त्वया ततः । युद्धमेतत्स्वहस्तेन स्वहस्तस्येव ताडनम् ॥ ४४५ ॥
दोःकंडूरेव ते राजंस्तद्रणे कारणं ध्रुवम् । गंडकंडूरिवेभस्य महातरुनिघर्षणे ॥ ४४६ ॥
भुजक्रीडापि युवयोर्जगतां प्रलयाय हि । वनभंगाय संफेडो[4] मत्तयोर्हि वनेभयोः ॥ ४४७ ॥
विश्वं संहर्त्तुमारब्धं क्रीडामात्रकृते कुतः । क्षणिकप्रीतये मांसादिना खगकुलं यथा ॥ ४४८ ॥
जगत्त्रातुः कृपांभोधेर्ऋषभादाप्तजन्मनः । अग्निवृष्टिः सुधासूते[5]रिवेदं किं तवोचितम् ॥ ४४९ ॥
तद्घोरात्संगरादस्मात्संगेभ्य इव संयमी । विरम क्षोणिरमण निजं व्रज निकेतनम् ॥ ४५० ॥
त्वय्यायाते समायातो याते यास्यत्यसावपि । तवानुजो बाहुबलिः कार्यं हि खलु कारणात् ॥ ४५१ ॥
शुभं भवतु वां विश्वक्षयांहः[6] परिहारतः । उभयेभ्योपि सैन्येभ्यश्चास्तु क्षेमं रणोज्झनात्[7] ॥ ४५२ ॥
त्वत्सैन्यभारसंभूतभूमिभंगविरामतः । भूगर्भवासिनः संतु भवनेन्द्रादयः सुखम् ॥ ४५३ ॥

---

१ पूर्वदेवा भुवनवासिनो देवा दैत्या वा । २ प्रतिमल्लः प्रतिस्पर्द्धी । ३ नवनीतश्रद्धा । ४ सफेडः क्रीडाविशेष. । ५ सुधासूतेश्चन्द्रस्य । ६ विश्वक्षयपापपरिहारतः । ७ रणत्यागात् ।

भूमिः शैलाः समुद्राश्च प्रजाः सत्वानि सर्वतः । क्षोभं त्यजंतु त्वत्सैन्यविमर्दविरहादिह ॥ ४५४ ॥
युष्मत्समरसंभाविविश्वसंहारशंकया । विना भूताः सुखं तिष्ठंत्वपि सर्वे दिवौकसः ॥ ४५५ ॥
इत्युदित्वा कार्यवादं विरतेषु सुपर्वसु[1] । बभाषे भरताधीशो गिरा स्तनित[2]धीरया ॥ ४५६ ॥
इमां विश्वहितां वाचं के ब्रूयुर्भवतो विना । जनो ह्युदास्ते[3] प्रायेण परकौतुकमीक्षितुम् ॥ ४५७ ॥
किं त्वत्र समरोत्थानकारणं वस्तुतोऽन्यथा । युक्त्याऽन्यथा तु युष्माभिरूहितं हितकांक्षिभिः ॥ ४५८ ॥
कार्यमूलमविज्ञाय स्वयमभ्यूह्य[4] किंचन । शासितुः शासनं मोघं[5] भवेत्सुरगुरोरपि ॥ ४५९ ॥
दोष्मा[6]नस्मीति सहसा संग्राममेछुर्न खल्वहम् । सति भूयसि किं तैले शैला[7]भ्यंगो विधीयते ॥ ४६० ॥
षट्खंडभरतक्षेत्रे नृपतीन् जयतो मम । प्रतिमल्लो यथा नासीत् तथाऽद्यापि न विद्यते ॥ ४६१ ॥
प्रतिमल्लो द्विषन्नेव जयाजयनिबंधनम् । बाहुबलिस्त्वहमेव जातिभेदो विधेर्वशात् ॥ ४६२ ॥
निर्वादभीरुर्लज्जावान् विवेकी विनयी सुधीः । पुरा तातमिवामंस्त मां हि बाहुबलिः खलु ॥ ४६३ ॥
षष्टिं वर्षसहस्राणि कृत्वा दिग्जयमागतः । तं वीक्ष्येऽन्यादृशमिव भूयान् कालोऽत्र कारणम् ॥ ४६४ ॥
ततोऽभिषेकवर्षेषु द्वादशस्वपि मां नहि । आगाद्बाहुबलिस्तत्र प्रमादस्तर्कितो मया ॥ ४६५ ॥
आह्वानाय मया दूते प्रहितेऽप्येष नैति यत् । तर्क्यते मंत्रिणां मंत्रं दोषस्तत्रापि कारणम् ॥ ४६६ ॥
अहमप्याह्वयाम्येनं न लोभान्न च कोपतः । किंत्वंतर्न विशेच्चक्रमेकस्मिन्नप्यनानते[8] ॥ ४६७ ॥

---

१ सुपर्वसु देवेषु । २ मेघगर्जनगभीरया । ३ उदासीनो भवति । ४ वितर्क्य । ५ मोघ निष्फल । ६ बलवान् अस्मि । ७ पर्वताभ्यङ्ग° । ८ अनानते अनम्रीभूते ।

न चक्ररत्नं नगरीं प्रविशत्येष मां न च । परस्परस्पर्द्धयैवेत्यनयोः संकटेऽपतं ॥ ४६८ ॥
स एकवारमायातु मम भ्राता मनस्व्यपि । अन्योर्वीमपि गृह्णातु मत्तः पूजामिवातिथिः ॥ ४६९ ॥
विना चक्रप्रवेशं मे नान्यत्संग्रामकारणम् । न तेनाप्यनतेनापि न मे मानोऽनुजन्मना ॥ ४७० ॥
अथोचिरे सुरा राजन् महत्संग्रामकारणम् । अल्पेन कारणेनेदृक्प्रवृत्तिर्न भवादृशाम् ॥ ४७१ ॥
उपेत्य बाहुबलिनं बोधयामोऽधुना वयम् । युगक्षय इवागच्छन् रक्षणीयो जनक्षयः ॥ ४७२ ॥
भवानिव युधः सोपि यद्युच्चैः कारणांतरैः । वदेत्तथापि युद्धेन योद्धव्यमधमेन न ॥ ४७३ ॥
दृष्टिवाग्बाहुदंडाद्यैर्युद्धैर्योद्धव्यमुत्तमैः । वधो निरपराधानां गजादीनां यथा नहि ॥ ४७४ ॥
तथेति प्रतिपदाने चक्रवर्त्तिनि नाकिनः । द्वितीयस्मिन् बले बाहुबलिराजानमभ्ययुः ॥ ४७५ ॥
अहो अधृष्यो मूर्त्यासौ दृढावष्टंभगर्भया । इत्यंतर्विस्मयजुषस्ते तमेवं बभाषिरे ॥ ४७६ ॥
चिरं जय चिरं नंद वृषभस्वामिनंदन । जगन्नेत्रचकोराणामानंदैकनिशाकर ॥ ४७७ ॥
अंभोधिरिव मर्यादां नोल्लंघयसि जातुचित् । विभेष्यवर्णवादाच्च समरादिव कातरः ॥ ४७८ ॥
निजसंपत्स्वनुत्सेकी परसंपत्स्वमत्सरी । विनेता दुर्विनीतानां विनीतश्च गुरुष्वपि ॥ ४७९ ॥
विश्वाभयकृतो देवस्यानुरूपस्त्वमात्मजः । उच्छेदायापरस्यापि नान्वयुंक्था मनागपि ॥ ४८० ॥

---

१ मनस्वी प्रशस्तमानसः साभिमान इति यावत् । २ कल्पान्तकाल इव । ३ प्रतिपादनं कुर्वाणे । ४ बले सैन्ये । ५ धर्षितुमशक्यः । ६ दृढः अवष्टम्भो गर्भे यस्या इति मूर्तेर्विशेषणं । ७ लोकापवादात् । ८ युद्धात् । ९ गर्वरहितः । १० नाभियोगमकुरुथाः ।

भ्रांतेनायमियत्कालं दृष्टो गुरुधिया मया । स्वर्णबुद्ध्या पित्तलवन्मणिबुद्ध्या च काचवत् ॥ ४९५ ॥
पित्रा वंश्येन वाऽन्यस्याप्युर्वीं दत्तां निरागसः । न हरेदन्यराज्योपि किं पुनर्भरतेश्वरः ॥ ४९६ ॥
हृत्वानुजानां राज्यानि नूनमेष न लज्जितः । जितकाशी राज्यकृते मामप्याह्वयते यतः ॥ ४९७ ॥
जित्वासौ भरतं सर्वं रथादास्फालितो मयि । तीर्त्वांभोधिं पोत[1] इव दत्तो तटमहीभृतः[2] ॥ ४९८ ॥
ज्ञात्वा लुब्धममर्यादं क्रव्यादमिव[3] निर्घृणम्[4] । अमुं ममानुजन्मानोप्यभजन् लज्जया नहि ॥ ४९९ ॥
तस्य केन गुणेनाहं भवाम्यद्य वशंवदः । ब्रूत माध्यस्थ्यमास्थाय सभासद इवामराः ॥ ५०० ॥
अथ स्वविक्रमेणायं मां करोति वशंवदम् । तत्करोत्वेष पंथा हि क्षत्रियाणां वशंवदः ॥ ५०१ ॥
एवं स्थितेपि ह्यालोच्य वलित्वा हंत याति चेत् । एष क्षेमेण तद्यातु लुब्धोऽहं न ह्यसाविव ॥ ५०२ ॥
तद्दत्तं भरतं सर्वं भुंजेहमिति किं भवेत् । केशरी केनचिद्दत्तं किमश्नाति कदाचन ॥ ५०३ ॥
भरतं गृह्णतस्तस्य वर्षषष्टिसहस्रयगात् । इदं यद्याजिघृक्षिष्यमगृहीष्यं तदापि हि ॥ ५०४ ॥
कालेनैतावता तस्य जातं भरतवैभवम् । तद्धनस्य धनमिव कथं भ्राता हराम्यहम् ॥ ५०५ ॥
करीव जातीकवलेनामुना वैभवेन चेत् । अंधंभविष्णुर्भरतः सुखं न स्थातुमीश्वरः ॥ ५०६ ॥
तदेतद्भरतक्षेत्रवैभवं भरतेशितुः । हृतमेव मया वेत्थ[5]ोपेक्षितं ह्यनपेक्षया ॥ ५०७ ॥
महामर्पयितुं कोशं हस्त्यश्वादि यशोऽपि च । प्रतिभू[6]मिरिवानीतोऽमात्यैः स्वसदृशैरसौ ॥ ५०८ ॥

---

१ धातुविशेषवत् । २ तटमहीभृतः तटभूपस्य तटपर्वतस्य च । ३ क्रव्याद राक्षस । ४ निर्घृण निर्दय । ५ वेत्थ जानीश । ६ प्रतिभूमिः प्रतिनिधिः ।

वालयित्वा रथानश्वान् कुंजरांश्च महौजसः । अपक्रामत तद्भूयं वक्रीभूता ग्रहा इव ॥ ५२४ ॥
खड्गान् क्षिपत कोशेषु करंडेष्विव पन्नगान् । कुंतान्केतूनिवोदस्तान्मोचकांतर्विमुंचत ॥ ५२५ ॥
मुद्गरान्न्यंचतोदस्तान् हस्तानिव महाद्विपाः । उत्तारयत कोदंडान्मौर्वी भालादिव भ्रुवम् ॥ ५२६ ॥
भूयोपि बाणधौ बाणं न्यधत्तार्थं निधानवत् । शल्यानि संवृणुत च विद्युतो वारिदा इव ॥ ५२७ ॥
प्रतीहारगिरा वज्रनिर्घोषेणेव घूर्णिताः । सैनिका बाहुबलिनश्चेतस्येवं व्यचिंतयन् ॥ ५२८ ॥
अहो रणाज्ञाविनोपि भीतैर्वाणिजकैरिव । भरतेश्वरसैन्येभ्यो लब्धोत्कोचैरिवोच्चकैः ॥ ५२९ ॥
प्राग्जन्मवैरिभिरिवाकस्मादस्माकमागतैः । हा प्रभुं प्रार्थ्य विबुधैरुद्धो युद्धोत्सवोऽधुना ॥ ५३० ॥

युग्मम् ॥

अग्रतो भाजनमिव भोजनाय निषेदुषाम् । पर्यंकतः सूनुरिव लालनायोपसर्पताम् ॥ ५३१ ॥
आकर्षणी रज्जुरिव कूपान्निर्गच्छतामहो । अहारि दैवेनास्माकमागतोपि रणोत्सवः ॥ ५३२ ॥ युग्मम् ।
अन्यो भरततुल्यः कः प्रतिपक्षो भविष्यति । स्वामिनो येन संग्रामे भविष्यामोऽनृणा वयम् ॥ ५३३ ॥
मुधोपादायि दायादैरिव स्तेयंकरैरिव । सौवासिनेयैरिव चास्माभिर्बाहुबलेर्धनम् ॥ ५३४ ॥
नूनं मुधा गतं बाहुदंडवीर्यमिदं च नः । अरण्यभववृक्षाणामिव प्रसवसौरभम् ॥ ५३५ ॥
क्लीबैः स्त्रीणामिवास्त्राणामस्माभिः संग्रहो मुधा । व्यधायि शस्त्राभ्यासश्च शास्त्राभ्यासः शुकैरिव ॥५३६॥

१ वक्रीभूता वक्रगतियुक्ता. । २ मोचकान्त कुन्तकोशान्तः । ३ न्यञ्चत नम्रीकुरुत । ४ भालात् ललाटात् । ५ लब्धः गृहीतः उत्कोचः अन्यायकर्मकरणार्थं वादिप्रतिवादिभ्योऽर्थग्रहणं यैस्ते तैः । ६ अनृणाः ऋणरहिताः । ७ चौरैः । ८ चिरपितृगृहवासिनीसीपुत्रैः ।

तापसदारकैः ॥ ५३७ ॥
इदं चागृह्यतास्माभिः पादातमपि निष्फलम् । कामशास्त्रपरिज्ञानमिव तापसदारकैः ॥ ५३८ ॥
मुधैव कारिता मारोऽभ्यासमेते मतंगजाः । वाजिनश्च श्रमजयमस्माभिर्हतबुद्धिभिः ॥ ५३९ ॥
मुधा गर्जितमस्माभिर्वारिदैरिव शारदैः । महिषीभिरिवास्माभिर्विकटं च कटाक्षितम् ॥ ५४० ॥
मुधा सन्नद्धमस्माभिः सामग्रीदर्शकैरिव । तच्चाहंकारगर्भत्वमपूर्णे युद्धदोहदे ॥ ५४१ ॥
एवं विचिंतयंतस्ते विषादविषगर्भिताः । ससूत्कारा सफूत्कारा इव सर्पा अपासृपन् ॥ ५४२ ॥
तत्कालं भरतेशोऽपि क्षत्रव्रतमहाधनः । स्वामपासारयत्सेनां वेलामिव महार्णवः ॥ ५४३ ॥
चक्रिणा सैनिकाः स्वेऽपसार्यमाणा महौजसा । एवमालोचयामासुर्वृंदीभूय पदे पदे ॥ ५४४ ॥
स्वामिना कस्य मंत्रेण मंत्रिव्याजेन वैरिणः । द्विबाहुमात्रकेणैव द्वंद्वयुद्धममन्यत ॥ ५४५ ॥
स्वामिना यो हि संग्रामो यद्भोजनमुदश्वितता । पर्याप्तमेव तदहो किं कृत्यं नस्ततः परम् ॥ ५४६ ॥
षट्खंडभरतक्षेत्रभूभुजां रणकर्मसु । कोऽपि नः किमपक्रांतो यन्निषिध्यामहे रणात् ॥ ५४७ ॥
युक्तं भृत्येषु नष्टेषु जितेषु च हतेषु वा । युद्धं भर्तुर्नान्यथा तु विचित्रा हि रणे गतिः ॥ ५४८ ॥
स्वामिनः संशयं युद्धे जातु शंकामहे नहि । विनैकं बाहुबलिनं प्रतिपक्षो भवेद्यदि ॥ ५४९ ॥
उदग्रबाहुना बाहुबलिना सममाहवे । विजये संशयः पाकशासनस्यापि केऽपरे ॥ ५५० ॥
महाकल्लोलिनीपूरस्येव दुस्सहरंहसः । तस्य प्रथमतोऽप्याजौ स्थातुं भर्तुर्न युज्यते ॥

१ माराभ्यास सङ्ग्रामाभ्यास । २ युद्धमनोरथे । ३ उदश्विता तक्रेण । ४ प्रतिपक्ष शत्रुः । ५ पाकशासनस्य इन्द्रस्य । ६ दुस्सहवेगस्य । ७ आजौ युद्धे ।

अस्माभिर्योधिते पूर्वं भर्तुस्तत्रोचितो रणः । पूर्वमश्वदमैर्दांते वाजिनीवाधिरोहणम् ॥ ५५१ ॥
अन्योन्यं सैनिकानेवं गृणतः प्रेक्ष्य चक्रभृत् । भावज्ञ इंगिताकारैः समाहूयेत्यभाषत ॥ ५५२ ॥
तमोनिर्दलने भानोर्यद्वदग्रेसराः कराः । द्विपदायोधने तद्वद्यूयमग्रेसरा मम ॥ ५५३ ॥
युष्मासु सत्सु योधेषु न मां कोप्याययौ रिपुः । परिखायामगाधायामिव वप्रतटं द्विपः ॥ ५५४ ॥
अदृष्टपूर्विणो युद्धं ततो मे यूयमीदृशम् । आशंकध्वे मुधा भक्तिर्ह्यपदेपीक्ष्यते भयम् ॥ ५५५ ॥
सर्वे कुरुध्वं संभूय दोर्बलालोकनं मम । शंका नश्यति वो येनागदेनेव गदः क्षणात् ॥ ५५६ ॥
इत्युदित्वा क्षणेनापि चक्री खनकपूरुषैः । अतिविस्तीर्णगंभीरं गर्तमेकमखानयत् ॥ ५५७ ॥
तीरे दक्षिणपाथोधेरिव सह्यमहीधरः । अवटस्य तटे तस्योपाविशद्भरतेश्वरः ॥ ५५८ ॥
वामे स दोर्ष्णि निबिडाः शृंखलाः प्रतिशृंखलाः । अबंधयल्लंबमाना वटवृक्षे जटा इव ॥ ५५९ ॥
ताभिः सहस्रसंख्याभिः सहस्रांशुरिवांशुभिः । महाद्रुरिव वल्लीभिश्चकासामास चक्रभृत् ॥ ५६० ॥
सोऽथ राज्ञ उवाचैवं यूयं सबलवाहनाः । महाशकटवद्गावो मामाकर्षत निर्भयम् ॥ ५६१ ॥
सर्वे सर्वौजसा कृष्ट्वा मां गर्ते पातयंत्विह । मद्दोर्बलपरीक्षार्थं स्वाम्यवज्ञाछलं न वः ॥ ५६२ ॥
दुःस्वप्नोऽप्ययमस्माभिर्दृष्टस्तत्प्रतिहन्यताम् । स हि मोघीभवेदेव चरितार्थी कृतः स्वयम् ॥ ५६३ ॥
भूयोभूयश्च चक्रिणैवमादिष्टास्ते ससैनिकाः । कथंचित्प्रत्यपद्यंत स्वाम्याज्ञा हि बलीयसी ॥ ५६४ ॥

---

१ चेष्टिताकारैः । २ सह्याख्यः पर्वतः । ३ अवटस्य गर्तस्य । ४ दोष्णि भुजे । ५ गावो वृषाः ।

चक्रुषुः शृंखलाजालं सैन्याश्चक्रिभुजस्य ते । नेत्रीभूतमहिं मथ्नगिरेरिव सुरासुराः ॥ ५६५ ॥
गाढलग्नाः प्रलंबासु चक्रिदोःश्रृंखलासु ते । उत्तुंगशाखिशाखाग्रेष्विव शाखामृगा बभुः ॥ ५६६ ॥
इत्थानिवाडिं भिंदानान् कर्षतः स्वं च सैनिकान् । कौतुकप्रेक्षणायोपेक्षांचक्रे चक्रभृत् स्वयम् ॥ ५६७ ॥
हृद्यंगरागं चक्रेऽथ चक्री तेनैव पाणिना । मालाबद्धघटीमालान्यायात्ते तु सहापतन् ॥ ५६८ ॥
निरंतरं लंबमानैः सैनिकैश्चक्रिणो भुजा । रराज खर्जूरतरुशाखा खर्जूरकैरिव ॥ ५६९ ॥
हृष्यंतः स्वामिनः स्थाम्ना सैन्यास्तद्बाहुशृंखलाः । प्राकृतामिव दुःशंकामुज्झांचक्रुः क्षणादपि ॥ ५७० ॥
चक्रभृत्कुंजरारूढस्तदैव समराजिरम् । जग्राह प्राक्तनं भूयोप्युद्ग्राहमिव गायनः ॥ ५७१ ॥
उभयोः सैन्ययोर्मध्ये विपुलं विपुलातलम् । गंगायमुनयोरंतर्वेदिदेश इवाबभौ ॥ ५७२ ॥
जगत्संहाररक्षातो मुदिता मरुतस्ततः । आयुक्ता इव शनकैस्तत्रोर्व्यामहरन् रजः ॥ ५७३ ॥
गंधांबुवृष्ट्या समवसरणोर्वीमिवाञ्चितः । तां मेदिनीमभ्यषिंचन्नुचितज्ञा दिवौकसः ॥ ५७४ ॥
मांत्रिकाँ मंडलावन्यामिव तत्र रणावनौ । उन्मेषवंत्यनिमिषाः कुसुमानि विचिक्षिपुः ॥ ५७५ ॥
कुंजरादवतीर्याथ तावुभौ राजकुंजरौ । कुंजराविव गर्जंतौ प्रविष्टौ समरावनिम् ॥ ५७६ ॥
उभावपि महौजस्कौ सर्पंतौ लीलयापि हि । पदे पदेऽरोपयतां कूर्मेन्द्रं प्राणसंशये ॥ ५७७ ॥
दृष्टियुद्धेन योद्धव्यं प्रतिज्ञायेति तस्थतुः । सन्मुखावनिमेषाक्षौ शक्रेशानाविवापरौ ॥ ५७८ ॥

---

१ नेत्रीभूत मन्थनरज्जुभूत । २ मन्थगिरेर्मन्दरपर्वतस्य । ३ शाखामृगाः कपयः । ४ स्थाम्ना बलेन । ५ उद्ग्राह प्रथमारंभस्वरविशेष । ६ विपुलातलं पृथ्वीतल । ७ मन्त्रज्ञाः । ८ उन्मेषवन्ति विकाशवन्ति । ९ अनिमिषाः देवाः ।

संमुखौ मुखमन्योन्यमैक्षेतामरुणेक्षणौ । उभयत्रस्थितार्केन्दुसायाह्नगगनश्रियौ ॥ ५७९ ॥
उभौ मिथो निध्यायंतौ ध्यायंताविव योगिनौ । चिरकालं वितष्ठाते तौ निश्चलविलोचनौ ॥ ५८० ॥
दिवाकरकराक्रांतनीलोत्पलवदीक्षणे । ज्येष्ठस्य ऋषभस्वामिनंदनस्य न्यमीलताम् ॥ ५८१ ॥
कीर्त्तेर्महत्या भरतषट्खंडजयजन्मनः । वारीवाश्रुजलव्याजाददातां चक्रिणोऽक्षिणी ॥ ५८२ ॥
तदा शिरांसि धुन्वाना प्रत्यूषे पादपा इव । विदधुर्बाहुबलिनि पुष्पवृष्टिं दिवौकसः ॥ ५८३ ॥
विजये बाहुबलिनो वीरैः सोमप्रभादिभिः । हर्षकोलाहलश्चक्रे सूर्यस्येवोदये खगैः ॥ ५८४ ॥
जयतूर्याण्यवाद्यंत राज्ञो बाहुबलेर्बलैः । तत्कालं कीर्तिनर्तक्या नृत्तारंभ इवोद्यतैः ॥ ५८५ ॥
अभूवन् भरतस्यापि सैन्या मंदायितौजसः । मूर्छिता इव संसुप्ता इव रोगातुरा इव ॥ ५८६ ॥
ते विषादप्रमोदाभ्यामयुज्येतामुभे बले । अंधकारप्रकाशाभ्यां मेरुपार्श्वाविवाधिकम् ॥ ५८७ ॥
विजितं काकतालीय[1]न्यायेनेति स्म मावद । वाग्युद्धेनापि युद्धस्वेत्यवोचच्चक्रिणं नृपः ॥ ५८८ ॥
फणीव चरणस्पृष्टः सामर्षश्चक्रवर्त्यपि । जितकासी भवत्वेवमित्यभाषत भूपतिम् ॥ ५८९ ॥
ईशानोक्षेव[2] निनदं शक्रेभ[3] इव बृंहितम् । स्तनितं वारिद इवोच्चैः क्ष्वेडां भरतोऽकरोत् ॥ ५९० ॥
रणेक्षकाणां देवानां विमानान्यापतन्निव । नभस्तो ग्रहनक्षत्रतारका भ्रंशयन्निव ॥ ५९१ ॥
कुलाचलानामित्युच्चैः शृंगाणि चालयन्निव । समंताज्जलराशीनां जलान्युल्लालयन्निव ॥ ५९२ ॥

---

१ काकागमने तालपतनमिव इति न्यायेन । २ ईशानइंद्रस्य वृषभ इव । ३ ऐरावत इव ।

व्यानशे प्रसरंस्तस्य क्ष्वेडानादः स रोदसी[1] । महास्रवंत्याः[2] परितः पूरवारीव रोधसी[3] ॥ ५९३ ॥

त्रिभिर्विशेषकम् ।

रश्मीन्[4] वाजीगणन् रथ्या[5] गुर्वाज्ञामिव दुर्धियः । सृणीन्[6] नामानयन्नागाः पिशुना इव सज्जिरम् ॥ ५९४ ॥
अश्वा नाज्ञासिषुर्वल्गां कटुकं श्लेष्मणा[7] इव । मर्या[8] नागणयन्त्रासारज्जुं लज्जां विटा[9] इव ॥ ५९५ ॥
न वेशरा[10]ः कशापातं भूताविष्टा इवाविदन् । त्रस्यंतस्तेन नादेन न केपि स्थैर्यमादधुः ॥ ५९६ ॥
अथापतत्पक्षिराज[11]पक्षनिर्घोषबुद्धितः । पातालतोपि पातालं विविक्षुभिरिवोरगैः ॥ ५९७ ॥
अंतःप्रविष्टमंथाद्रिमंथनध्वानशंकया । मध्येजलधियादोभिस्त्रस्यद्भिः सर्वतोपि च ॥ ५९८ ॥
भूयोजंभारि[12]निर्मुक्तदंभोलिध्वनितभ्रमात् । क्षयं स्वस्याशंकमानैः कंपमानैः कुलाचलैः ॥ ५९९ ॥
कल्पांतपुष्करावर्तमुक्तविद्युद्ध्वनिभ्रमात् । लुठद्भिरवनीपीठे मध्यलोकनिवासिभिः ॥ ६०० ॥
अकांडागतदैत्यावस्कंद[13]कोलाहलभ्रमात् । आकुलैश्चामरकुलैः श्रूयमाणोऽतिदुःश्रवः ॥ ६०१ ॥
लोकनालिस्पर्द्धयेव वर्धमानोऽधरोत्तरम् । विदधे बाहुबलिना सिंहनादोऽतिभैरवः ॥ ६०२ ॥

षड्भिः कुलकम् ।

भूयो व्यधत्त भरतः सिंहनादं महाबलः । वैमानिकानां वनितास्त्रासयंतं मृगीरिव ॥ ६०३ ॥

---

१ रोदसी द्यावाभूमी । २ महानद्याः । ३ रोधसी तटे । ४ रश्मीन् प्रग्रहान् । ५ रथ्या रथयोजिताश्वाः । ६ सृणीन् अङ्कुशान् । ७ श्लेष्मरोगिणः । ८ मर्या उष्ट्राः । ९ विटा मूर्खा जाराश्च । १० वेशरा अश्वतराः । ११ पक्षिराजो गरुडः । १२ जम्भारिरिन्द्रः । १३ अवस्कन्द उपद्रवः ।

एवं क्रमेण चक्राते चक्रिनृपौ महाध्वनिम् । जगतो मध्यमस्यास्य क्रीडया जीषकाविव ॥ ६०४ ॥
हस्तो मतंगजस्येव शरीरं दृक्श्रुतेरिव । अहीयेततमां शब्दः क्रमेण जरतेशितुः ॥ ६०५ ॥
सिंहनादो महाबलेर्ववृधे त्वधिकाधिकम् । प्रवाहः सरित इव सज्जनस्येव सौहृदम् ॥ ६०६ ॥
शास्त्रीयवाग्युद्धेष्येवंवादिना प्रतिवाद्यसौ । वीरेण बाहुबलिना विजिग्ये जरतेश्वरः ॥ ६०७ ॥
अथ तौ बाहुयुद्धार्थमुद्यावपि हि बांधवौ । बबंधतुः परिकरं बद्धकद्दद्विपोपमौ ॥ ६०८ ॥
अथ बाहुबलेर्गर्जन्नुद्वेल इव वारिधिः । स्वर्णदंडधरः स्माह प्रतीहाराग्रणीरिति ॥ ६०९ ॥
वज्रकीलानिव शैलानवष्टभ्य विशेषतः । आस्थाय स्थाम चाशेषमपि पृथ्वि स्थिरीभव ॥ ६१० ॥
परितः पूरयित्वा च कुंभयित्वा च मारुतम् । हेनागराज नगवत् दृढीभूय धरां धर ॥ ६११ ॥
लुठित्वा वारिधेः पंके विहायाग्रेतनं श्रमम् । पुनर्नवीभूय महाक्रोड क्रोडीकुरु क्षितिम् ॥ ६१२ ॥
वज्रमानिन्निजांगानि संकोच्य परितोपि हि । स्वपृष्ठं कमठग्रष्ठ दृढयित्वा मही वह ॥ ६१३ ॥
प्रमादतो मदतो वा निद्रां मा धत्त पूर्ववत् । सर्वात्मना सावधाना वसुधां धत्त दिग्गजाः ॥ ६१४ ॥
वज्रसारो बाहुबलिर्वज्रसारेण बाहुना । यदसौ मल्लयुद्धेन योद्धुमुत्तिष्ठतेऽधुना ॥ ६१५ ॥
महामल्लौ तरुिदंडताडिताडिरवोपमम् । विदधानौ करास्फोटमाह्यासातां मिथोऽथ तौ ॥ ६१६ ॥
तौ सलीलपदन्यासं चेलतुश्चलकुंडलौ । सार्कैंदू धातकीखंमात् क्षुद्रमेरू इवागतौ ॥ ६१७ ॥

---

१ दृक्श्रुतेः सर्पस्य । २ अतिशयेन हीनोऽभवत् । ३ स्थाम बल । ४ स्तम्भयित्वा । ५ हे महावराह । ६ क्रोडीकुरु मध्येकुरु । ७ हे कमठश्रेष्ठ ।

अयुज्येतां क्षणेनापि व्ययुज्येतां क्षणेन च । तावासन्नमहावृक्षाविवोद्दंमानिलेरितौ ॥ ६१९ ॥
उत्पेततुः क्षणेनापि क्षणेनापि निपेततुः । वीरौ तौ दुर्दिनोन्मत्तमहांभोधितरंगवत् ॥ ६२०
अथ स्नेहादिवामर्षाद्भावित्वा तावुभावपि । अंगेनांगं पीडयंतौ सस्वजाते[1] महाभुजौ ॥ ६२१
क्षणादधः क्षणादूर्ध्वं कदाचित्कश्चिदप्यभूत् । नियुद्धविज्ञानवशात्प्राणी कर्मवशादिव ॥ ६२२
उपर्यसावधोसावित्यज्ञायेतां जनैर्नतौ । जलांतर्मत्स्यवद्वेगान्मुहुर्विपरिवर्तिनौ ॥ ६२३ ॥
चक्रतुर्बंधविज्ञानं महाही इव तौ मिथः । निरासतुश्च सद्योपि चपलौ प्लवंगाविव[2] ॥ ६२४ ॥
मुहुर्महीलुठनतस्तावुभौ धूलिधूसरौ । बभासाते प्राप्तधूलीमदौ मदकलाविव[3] ॥ ६२५ ॥
असहिष्णुस्तयोर्भारं शैलयोरिव सर्पतोः । पादनिर्घातनिर्घोषादाररा[4]टेव मेदिनी ॥ ६२६ ॥
अथ बाहुबलिः क्रुद्धः करेणैकेन चक्रिणम् । शरभः[5] कुंजरमिवोदग्रहीदुग्रविक्रमः ॥ ६२७ ॥
व्योमन्युल्लालयामास स तं रूपमिव[6] द्विपः । अहो निरवधिः सर्गो बलिनो बलिनामपि ॥ ६२८
चापादिषुरिवोन्मुक्तः पाषाण इव यंत्रितः । तारापथपथे[7] दूरं जगाम भरतेश्वरः ॥ ६२९ ॥
भरतेशादापततः शक्रमुक्तात्पवेरिव[8] । पलायांचक्रिरे सर्वे खेचराः समरेक्षणः ॥ ६३० ॥
हाहारवो महान् जज्ञे सेनयोरुभयोरपि । कस्य दुःखाकरो न स्यान्महतां ह्यापदागमः ॥ ६३१ ॥

१ सस्वजाते आलिङ्गितवन्तौ । २ प्लवगौ कपी । ३ मदकलौ हस्तिनौ । ४ आरराट आचुक्रोश । ५ अष्टापदः ।
७ गगनमार्गे । ८ पवेः वज्रात् ।

धिग्मे बलमिदं बाह्वोर्धिग्धिग् रात्भसिकं च मां । एतत्कर्मोपदेशकांश्च धिग् राज्यद्रव्यमंत्रिणः ॥ ६३२ ॥
किं वा विगर्हितैरेभिर्यावदद्यापि मेऽग्रजः । पतित्वा मेदिनीपृष्ठे कणशो न विशीर्यते ॥ ६३३ ॥
तावत्पतंतं गगनात्प्रतीच्छामीति चिंतयन् । तल्पकल्पौ भुजौ तस्याधो दधौ बाहुबल्यपि ॥ ६३४ ॥

त्रिभिर्विशेषकम् ।

ऊर्ध्वबाहुर्व्रतीवोर्ध्वबाहुर्बाहुबलिः क्षणम् । तस्थौ दिनकरालोकव्रतीव च तदोन्मुखः ॥ ६३५ ॥
पादाग्रप्राणतस्तिष्ठन्नुत्पित्सुरिव स क्षणात् । निपतंतं प्रतीयेषाग्रजं गेंडुकलीलया ॥ ६३६ ॥
भरतोत्क्षेपणोद्भूतं विषादं द्रागबाधत । चम्वोस्तत्क्षणाद्रूपं उत्सर्गमपवादवत् ॥ ६३७ ॥
लब्धार्पणैर्विवेकेन भ्रातृरक्षणजन्मना । विद्याशीलगुणेनेव पौरुषं तुष्टुवे जनैः ॥ ६३८ ॥
उपरिष्टाद्बाहुबलेः पुष्पवृष्टिं व्यधुः सुराः । तादृग्वीरव्रतजुषस्तस्येदमथवा कियत् ॥ ६३९ ॥
तदा वैलक्ष्यकोपाभ्यां युगपद्भरतेश्वरः । धूमध्वज इव धूपज्वालाभ्यां समयुज्यत ॥ ६४० ॥
अथ बाहुबलिर्लज्जानमद्वदनपंकजः । वैलक्ष्यं ज्यायसो हर्त्तुमित्युवाच स गद्गदम् ॥ ६४१ ॥
मा विषीद जगन्नाथ महावीर्य महाभुज । दैवात्कदाचित्केनापि विजय्यपि विजीयते ॥ ६४२ ॥
एतावता नासि जितो विजयी चास्मि नेयता । घुणाक्षरन्यायजन्वं मन्येद्याप्यात्मनो जयम् ॥ ६४३ ॥
इयत्यपि त्वमेवैको वीरोसि भुवनेश्वर । अमरैर्मथितोप्यब्धिरब्धिरेव न दीर्घिका ॥ ६४४ ॥

१ राभसिक साहसिक । २ शय्यातुल्यौ । ३ उत्पतितुमिच्छुः । ४ प्रतीयेष जग्राह । ५ गेन्दुकलीलया कदुकलीलया । ६ धूमध्वजोऽग्निः । ७ ज्येष्ठस्य । ८ घुणो जंतुः काष्ठे अनिच्छन्नपि अक्षर करोति तद्वन्न्यायेन । ९ दीर्घिका वापिका ।

फालच्युत इव द्वीपी[1] षट्खंडभरतेश्वर । किं तिष्ठसि समुत्तिष्ठोत्तिष्ठ स्वरणकर्मणे ॥ ६४५ ॥
बभाषे भरतोऽप्येवं निजदोषस्य मार्जनम् । करिष्यत्येव दोर्दंभो मुष्टिं प्रगुणयन्नयम् ॥ ६४६ ॥
ततो मुष्टिं समुद्यम्य फणामिव फणीश्वरः । प्रकोपात्ताम्रनयनोऽपेत्याऽधावत चक्रभृत् ॥ ६४७ ॥
भरतो मुष्टिना तेनाजघान नृपतेरुरः । कपाटं गोपुरस्येव दशनेन मतंगजः ॥ ६४८ ॥
प्रदानवदसत्पात्रे बधिरे कर्णजापवत् । सत्कारवच्च पिशुने[2] जलवृष्टिवदूषरे[3] ॥ ६४९ ॥
संगीतवदरण्यान्यां[4] हिमान्यां[5] वह्निपातवत् । मुधाभूच्चक्रिणो मुष्टिप्रहारः पार्थिवोरसि ॥ ६५० ॥
युग्मम् ॥
अस्मभ्यमपि किं क्रुद्ध इत्याशंकयेक्षितोऽमरैः । उच्चिक्षेपोच्चकैर्मुष्टिं सुनंदानंदनोऽप्यथ ॥ ६५१ ॥
मुष्टिनाताडयत्तेन सचक्रिणमुरस्थले । कुंभस्थले महामात्रोऽयोगोलेनेव[6] कुंभिनम् ॥ ६५२ ॥
घातेन तेन दंभोलिनिपातेनेव पर्वतः । पपात मूर्छाविधुरो भूतले भरतेश्वरः ॥ ६५३ ॥
चकंपे पतता तेन भूः पत्येव कुलांगना । पर्वता अप्यवेपंत बांधवेनेव बांधवाः ॥ ६५४ ॥
क्षत्रियाणां कुहेवाकः[7] कोऽयं वीरव्रताग्रहे । विग्रहो निग्रहांतोऽयं यत्र भ्रातर्यपीदृशः ॥ ६५५ ॥
न जीवेदग्रजश्चेत्तज्जीवितेन ममाप्यलम् । एवं मनसि कुर्वाणः सिंचन्नयनवारिभिः ॥ ६५६ ॥

---

१ द्वीपी व्याघ्र. । २ पिशुने मूर्खे । ३ ऊषरे क्षारभूमौ । ४ महति अरण्ये । ५ महति हिमे । ६ अयोगोलेन लोहगोलेन अङ्कुशेनेति यावत् । ७ कुस्वभाव. ।

स्वमुत्तरीयं [1]व्यजनीकृत्य बाहुबलिस्ततः । भरतं वीजयामास यो बंधुर्बंधुरेव सः ॥ ६५७ ॥

त्रिभिर्विशेषकम् ॥

चक्री सुप्त इवोत्तस्थौ लब्धसंज्ञः क्षणादथ । ददर्श च पुरोभृत्यमिव बाहुबलिं स्थितम् ॥ ६५८ ॥
अधोमुखौ वितष्ठाते बांधवौ तावुभावपि । पराजयो जयश्चापि लज्जायै महतामहो ॥ ६५९ ॥
किंचित्पश्चात्पदन्यासमपचक्राम चक्रभृत् । पुंसामोजायमानानां [2]युयुत्सालक्षणं ह्यदः ॥ ६६० ॥
युयुत्सुः पुनरप्यार्यः शंके युद्धेन केनचित् । नोज्झंति मानिनो मानं यावज्जीवं मनागपि ॥ ६६१ ॥
[3]अवर्णवादो बलवान् भावी बाहुबलेः खलु । भ्रातृहत्याभवो मन्ये नैवांतेऽपि विरंस्यति ॥ ६६२ ॥
इति संचिंतयामास यावद्बाहुबलिः क्षणम् । तावच्चक्रधरो दंडं [4]दंडपाणिरिवाददे ॥ ६६३ ॥
तेनोदस्तेन दंडेन चकासामास चक्रभृत् । चूलयेवाचलशृंगायापथेनेव मरुत्पथः ॥ ६६४ ॥
अथ तं दंडमुत्पातकेतुभ्रमविधायिनम् । नभसि भ्रामयामास क्षणं भरतभूपतिः ॥ ६६५ ॥
[5]पंचाननयुवा पुच्छदंडेनेव महीतलम् । शिरस्यताडयच्चक्री तेन दंडेन भूपतिम् ॥ ६६६ ॥
समास्फलंत्या सह्याद्रौ वेलयेव महोदधेः । तन्मूर्ध्नि चक्रिणो दंडघातेनाभून्महाध्वनिः ॥ ६६७ ॥
दंडेनाचूर्णयच्चक्री किरीटं मूर्ध्नि भूपतेः । [6]अयोघनेना[7]यँ इवा[8]धिकरण्यामवस्थितम् ॥ ६६८ ॥
किरीटरत्नखंडानि निपेतुर्नृपमूर्धतः । वातांदोलितवृक्षाग्रादिव पुष्पाणि भूतले ॥ ६६९ ॥

---

१ तालवृंतकीकृत्य । २ युद्धेच्छालक्षण । ३ लोकापवादः । ४ दण्डपाणिः यमराजः । ५ सिंहयुवा । ६ लोहघनेन । ७ अयः लोह । ८ अधिकरण्या तदाधारभूताया लोहशिलाया ।

भूपतिस्तेन घातेन क्षणं मुकुलितेक्षणः । तन्निर्घोषेण घोरेण लोकश्च समजायत ॥ ६७० ॥
उन्मील्य नयने हस्तेनाददे बाहुबल्यपि । उद्दंडमायसं दंडं सांग्रामिक इव द्विपः ॥ ६७१ ॥
पातयिष्यत्यसौ किं मां किं मामुत्पाटयिष्यति । इत्याशशंके स द्यावापृथिवीभ्यां यथाक्रमम् ॥ ६७२ ॥
रेजे बाहुबलेर्मुष्टौ लोहदंडः स आयतः । पर्वतस्याग्र[1]भागस्थवामलूर इवोरगः ॥ ६७३ ॥
दूरतोप्यंतकाह्वानसंज्ञावस्त्रमिवाथ तम् । भृशमुद्भ्रमयामास दंडं तक्षशिलापतिः ॥ ६७४ ॥
निर्दयं हृदये तेन चक्रिणं बह्लीपतिः । ताडयामास लकुटेनेव बीजा[3]न्नमूढकम् ॥ ६७५ ॥
तेन घातेन घटवद्दृढीयानपि खंडशः । विशीर्यते स्म सहसा सन्नाहश्चक्रवर्तिनः ॥ ६७६ ॥
निरभ्र[4] इव मार्तंडो निर्धूम इव पावकः । शीर्णवर्मा चक्रवर्ती दिद्युते सर्वतोऽधिकम् ॥ ६७७ ॥
क्षणार्धं विह्वलीभूतो नाचिंतयत किंचन । भरतः सप्तममदावस्थाप्राप्त इव द्विपः ॥ ६७८ ॥
प्रियमित्रमिवालंब्याविलंबाद्बाहुपौरुषम् । चक्रभृद्दंडमुद्यम्य भूयो राज्ञेऽभ्यधावत ॥ ६७९ ॥
पीडयन्नधरं दंतैर्भृकुटीभंगभीषणः । भरतोऽभ्रमयद्दंडं मौर्वा[5]वर्तविडंबनम् ॥ ६८० ॥
मूर्ध्नि बाहुबलिं तेन चक्रपाणिरताडयत् । तडिद्दंडेन कल्पांत[6]जीमूत इव पर्वतम् ॥ ६८१ ॥
ममज्जाजानु घातेन तेन बाहुबलिर्भुवि । लोहाधिकरणीमध्ये वज्रोपल[7] इवाहतः ॥ ६८२ ॥
आस्फाल्य बाहुबलिनि वज्रसारे व्यशीर्यत । स्वेन तेनागसा भीत इव दंडः स भारतः ॥ ६८३ ॥

---

१ अग्रभागस्थवल्मीके । २ दण्डेन । ३ बीजरूपान्नमूढक । ४ निर्मेघः । ५ वाडवाग्न्यावर्तविडम्बनम् । ६ कल्पातमेघ । ७ वज्रोपल. वज्रमणिः ।

आजानुमग्नो मेदिन्यामवगाढ इवाचलः । निष्क्रांतशेषः शेषाहि[1]रिव बाहुबलिर्बभौ ॥ ६८४ ॥
अधूनयत्स मूर्द्धानं घातवेदनया तया । अंतश्चमत्कृत इव ज्यायसो भ्रातुरोजसा ॥ ६८५ ॥
आत्माराम इव योगी न किंचिदश्रृणोत्क्षणम् । तदा बाहुबलिस्तेन घातेन प्राप्तवेदनः ॥ ६८६ ॥
निर्ययौ मेदिनीमध्यात्सुनंदानंदनस्ततः । आरण्यानकूलिनीकूल[2]पंकमध्यादिव द्विपः ॥ ६८७ ॥
लाक्षारसारुणैर्दृष्टिपातैरातर्जयन्निव । स्वौ दोर्दंडौ च दंडं चापश्यत्सोऽमर्षणाग्रणीः ॥ ६८८ ॥
दुःप्रेक्ष्यं तक्षक[3]मिवात्तीक्ष्णं तक्षशिलापतिः । ततस्तं भ्रमयामास दंडमेकेन पाणिना ॥ ६८९ ॥
सुनंदासूनुना दंडो भ्रम्यमाणोऽतिवेगतः । राधावेधपरिभ्राम्यच्चक्रलक्ष्मीमुवाह सः ॥ ६९० ॥
कल्पांतसागरावर्तगर्त[4]भ्रांतादिमत्स्यवत् । स भ्राम्यन् प्रेक्ष्यमाणोपि भ्रमिं व्यधित चक्षुषाम् ॥ ६९१ ॥
उत्पतंस्तपनं[5] कांस्यपात्रवत्स्फोटयिष्यति । भारुंडांडवद्[6]ऋक्षेशमंडलं[7] चूर्णयिष्यति ॥ ६९२ ॥
तारागणानामलकीफलवद्[8]भ्रंशयिष्यति । वैमानिकविमानानि नीडवत्[9]पातयिष्यति ॥ ६९३ ॥
पतत्पर्वतशृंगाणि नाकुवद्[10]दलयिष्यति । महातरुनिकुंजानि निष्पेक्ष्यति तृणौघवत् ॥ ६९४ ॥
अपक्वमृत्तिकागोलवच्च नेतस्यति मेदिनीम् । हस्तादमुष्य दैवाच्च दंड एष पतिष्यति ॥ ६९५ ॥
इत्याशंकाकुलैः सैन्यैः प्रेक्ष्यमाणोऽमरैरपि । नृपतिश्चक्रिणं तेन दंडेन शिरसि न्यहन् ॥ ६९६ ॥
पंचभिः कुलकम् ॥

---

१ शेषनागः । २ शुष्कनदीतटपंकमध्यात् । ३ तक्षक नागविशेष । ४ कल्पातकालेयः सागरावर्तः स एव गर्तस्तस्मिन् भ्रांतो भ्रमणं कुर्वन् आदिमत्स्यः मत्स्यावतारी विष्णुस्तद्वत् । ५ सूर्यं । ६ भारुण्डपक्षिणः अण्डवत् । ७ ऋक्षेशः चन्द्रस्तस्य मण्डल । ८ आमलकीफलवत् तदाख्यवृक्षफलवत् । ९ नीडवत् पक्षिगृहवत् । १० नाकुवत् वल्मीकवत् ।

तेन दंडाभिघातेन चक्रवर्ती महीयसा । आकंठं प्रविवेशोर्व्यां मुद्गराहतकीलवत् ॥ ६९७ ॥
यथास्मत्स्वामिनो दत्तं विवरं देहिनस्तथा । इतीव पेतुर्मेदिन्यां विषण्णाः स्वामिसेवकाः ॥ ६९८ ॥
राहुग्रस्त इवादित्ये भूमग्ने चक्रवर्तिनि । तुमुलो[1]ऽभूद्भुवि महान् नृणां दिवि दिवौकसां ॥ ६९९ ॥
निमीलिताक्षः श्यामास्यः षट्खंडभरतेश्वरः । लज्जयेव महीमध्ये क्षणमेकमवास्थित ॥ ७०० ॥
अथैकस्य क्षणस्यांते तेजसा सोतिभासुरः । निर्ययाववनीमध्यान्निशांत[2] इव भास्करः ॥ ७०१ ॥
सोऽथैवं चिंतयामास युद्धेषु निखिलेष्वपि । जितोहममुना द्यूतेष्विवांधद्यूतकारकः ॥ ७०२ ॥
किं स्यादस्योपयोगाय साधितं भरतं मया । गोदोहकस्येव गवा जग्धं[3] दूर्वातृणादिकम् ॥ ७०३ ॥
एकस्मिन् भरतक्षेत्रे युगपच्चक्रवर्तिनौ । उभावसी कोश इव न च दृष्टौ नवा श्रुतौ ॥ ७०४ ॥
इंद्रो विजीयते देवैश्चक्रवर्तीव पार्थिवैः । अनाकर्णितपूर्वं नश्चेदं खरविषाणवत् ॥ ७०५ ॥
अमुना विजितश्चक्री भूमौ किं न भवाम्यहम् । मयाप्यविजितो विश्वाजय्यस्तच्चक्रवर्त्यसौ ॥ ७०६ ॥
एवं चिंतयतस्तस्य चिंतामणिविडंबकैः । यक्षराजैः समानीय चक्रमारोपितं करे ॥ ७०७ ॥
तत्प्रत्ययाच्चक्रि[4]मानी चक्रं भ्रमयति स्म सः । वात्यावर्त इवांभोजरजोमंडलमंबरे ॥ ७०८ ॥
कालानल इवाकालेप्यौर्वानल इवापरः । वज्रानल इवाकस्मादुल्कापुंज इवोच्चकैः ॥ ७०९ ॥
रविबिंबमिव भ्रस्यद्विद्युद्गोल इवभ्रमत् । ज्वालाजालकरालं तच्चक्रं व्योमन्यलक्ष्यत ॥ ७१० ॥

युग्मम् ॥

---

१ तुमुलः कोलाहल. । २ निशाते रात्र्यते । ३ जग्ध भुक्त । ४ आत्मान चक्रिण मन्यते इति चक्रिमानी ।

भ्रम्यमाणं प्रहाराय तच्चक्रं चक्रवर्तिना। निध्याय दध्यौ मनसि मनस्वी बहलीपतिः ॥ ७११ ॥
धिक्तातपुत्रमानित्वमस्य क्षत्रव्रतं च धिक्। मयि दंडायुधे चक्रादानं यद्भरतेशितुः ॥ ७१२ ॥
समक्षे द्युसदामस्योत्तमयुद्धं प्रतिश्रुतम्। धिगहो बालकस्येव संव्यानादानमीदृशम् ॥ ७१३ ॥
तेजोलेश्यां तपस्वीव रुष्टश्चक्रं प्रदर्शयन्। यथैषोऽज्ञापयद्विश्वं मां बिज्ञाययिषुस्तथा ॥ ७१४ ॥
निजदोर्दंडदंडानां सारं विज्ञातवान् यथा। असौ तथा रथांगस्याप्यस्य जानातु विक्रमम् ॥ ७१५ ॥
एवं चिंतयतो बाहुबलेर्दोर्बलशालिनः। प्रेर्य सर्वौजसा चक्रं मुमोच भरतेश्वरः ॥ ७१६ ॥
दंडेन दलयाम्याशु किमिदं जीर्णभांडवत्। किं वा कंदुकवत्पश्चात्क्षिपाम्याहत्य लीलया ॥ ७१७ ॥
शंकुलोवत्किमथवा लीलयोल्लालयामि खे। यदि वा मेदिनीमध्ये न्यस्यामि शिशुनालवत् ॥ ७१८ ॥
गृह्णामि पाणिना किं वोल्ललच्चटकपोतवत्। अथापहस्तयाम्याराद्वधानर्हापराधिवत् ॥ ७१९ ॥
अथाधिष्ठायकानस्य सहस्रं यक्षकानमून्। दलयाम्याशु दंडेन घरट्टेन कणानिव ॥ ७२० ॥
विधेयमथवा सर्वमिदं पश्चादमुष्य हि। जानामि प्रथमं तावदलंकर्मीणतावधिम् ॥ ७२१ ॥
एवं विमृश्यतस्तक्षशिलाभर्तुरुपेत्य तत्। चक्रे प्रदक्षिणां चक्रमंतेवासी गुरोरिव ॥ ७२२ ॥

षड्भिः कुलकम् ॥

न चक्रं चक्रिणः शक्तं सामान्येपि सगोत्रजे। विशेषतस्तु चरमशरीरे नरि तादृशे ॥ ७२३ ॥

---

१ रथाङ्गस्य चक्रस्य। २ शङ्कुलावत् उत्पलपनिकावत्। ३ चटकः पक्षिविशेषः। ४ घरट्टेन कणपेषणयन्त्रेण। ५ पराक्रमानधिम्।
६ अन्तेवासी शिष्यः।

महाभवह्रदेऽमुष्मिंस्तंतु[1]पाशसहोदरैः । भ्रातृपुत्रकलत्राद्यै राज्येन च कृतं मम ॥ ७३८ ॥
त्रिजगत्स्वामिनो विश्वाभयदानैकसत्रिणः । एष पांथीभविष्यामि पथि तातस्य संप्रति ॥ ७३९ ॥
इत्युदित्वा महासत्वः सोऽग्रणीः शीघ्रकारिणाम् । तेनैव मुष्टिना मूर्ध्न उद्दध्रे तृणवत्कचान्[2] ॥ ७४० ॥
साधुसाध्विति सानंदं निगदंतो दिवौकसः । बाहुबलेरुपरिष्टात्पुष्पवृष्टिं वितेनिरे ॥ ७४१ ॥
सोऽप्येवं चिंतयामास प्रतिपन्नमहाव्रतः । किं तातपादपद्मांतमहं गच्छामि संप्रति ॥ ७४२ ॥
नो वा यास्यामि पूर्वात्तव्रतानां ज्ञानशालिनाम् । मध्येऽनुजानामपि मे यल्लघुत्वं भविष्यति ॥ ७४३ ॥
इहैव दग्ध्वा घातीनि कर्माणि ध्यानवह्निना । अवाप्तकेवलज्ञानो यास्यामि स्वामिपर्षदि ॥ ७४४ ॥
मनस्वी चिंतयन्नेवं प्रलंबितभुजद्वयः । कायोत्सर्गेण तत्रैवास्थाद्दलप्रतिमेव सः ॥ ७४५ ॥
भरतस्तं तथा दृष्ट्वा विचार्य स्वं कुकर्म च । बभूव न्यंचित[3]ग्रीवो विविक्षु[4]रिव मेदिनीम् ॥ ७४६ ॥
शांतं रसं मूर्त्तमिव भ्रातरं प्रणनाम सः । नेत्रजैरश्रुभिः कोष्णैः कोपशेषमिवोत्सृजन् ॥ ७४७ ॥
भरतः प्रणमंस्तस्याधि[5]कोपास्तिविधित्सया । नखादर्शेषु संक्रांत्या नानारूप इवाभवत् ॥ ७४८ ॥
सुनंदानंदनमुनेर्गुणस्तवनपूर्विकाम् । स्वनिंदामित्यथाकार्षीत्स्वापवादगदौषधीम् ॥ ७४९ ॥
धन्यस्त्वं तत्यजे येन राज्यं मदनुकंपया । पापोहं यदसंतुष्टो दुर्मदस्त्वामुपाद्रवम् ॥ ७५० ॥
स्वशक्तिं ये न जानंति ये चान्यायं प्रकुर्वते । जीयंते ये च लोभेन तेषामस्मि धुरंधरः ॥ ७५१ ॥
राज्यं भवतरोर्बीजं ये न जानंति तेऽधमाः । तेभ्योऽप्यहं विशिष्ये तदजहानो विदन्नपि ॥ ७५२ ॥

१ तन्तुपाशसदृशैः । २ कचान् केशान् । ३ वलितग्रीवः । ४ प्रवेष्टुमिच्छुरिव । ५ अधिकोपासना विधातुमिच्छया ।

त्वमेव पुत्रस्ततस्य यस्तातपथमन्वगाः । पुत्रोऽहमपि तस्य स्यां चेद्भवामि भवादृशः ॥ ७५३ ॥
विषादपंकमुन्मूल्य पश्चात्तापजलैरिति । तत्पुत्रं सोमयशसं तद्राज्ये स न्यवीविशत् ॥ ७५४ ॥
तदादि सोमवंशोऽभूत् शाखाशतसमाकुलः । तत्तत्पुरुषरत्नानामेकमुत्पत्तिकारणम् ॥ ७५५ ॥
ततो बाहुबलिं नत्वा भरतः सपरिच्छदः[1] । पुरीमयोध्यामगमत्स्वाराज्यश्रीसहोदराम् ॥ ७५६ ॥
भगवानपि तत्रैकस्तस्थौ बाहुबलिर्मुनिः । भूमेरिव समुद्भूतोऽवतीर्णो गगनादिव ॥ ७५७ ॥
ध्यानैकतानो नासांतविश्रांतनयनद्वयः । निःकंपः स मुनिः शंकुरिव दिक्साधनो[2] बभौ ॥ ७५८ ॥
विकिरंती वह्निकणानिवोष्णान् वालुकाकणान् । उष्णर्तुवात्यां[3] देहेन स सेहे वनवृक्षवत् ॥ ७५९ ॥
अग्निकुंडमिव ग्रीष्ममध्यंदिनरविं च सः । शुभ्रध्यानसुधामग्नो नाज्ञासीन्मूर्ध्न्यपि स्थितम् ॥ ७६० ॥
आशिरःप्रपदं[4] ग्रीष्मतापात्स स्वेदवारिभिः । रजःपंकीकृतैः क्रोडैः[5] इवाभ्रात्पंकनिर्गतः ॥ ७६१ ॥
स प्रावृषि महाझंझानिलघूर्णितपादपैः[6] । धारासारैर्गिरिरिव नाभिद्यत मनागपि ॥ ७६२ ॥
विद्युत्पातेषु निर्घातकंपिताद्रिशिरःस्वपि । न कायोत्सर्गतो नापि ध्यानतः प्रचचाल सः ॥ ७६३ ॥
अधोवहद्वारिभवैः शैवलैश्चरणद्वयम् । तस्योद्वसग्राम[7]वापीसोपानवदलिप्यत ॥ ७६४ ॥
हिमर्तौ हिमसद्धृतद्विपदघ्नसरित्यपि[8] । सोऽस्थात्कर्मेंधनप्लोषोद्युक्तध्यानाग्निना सुखम् ॥ ७६५ ॥
हैमनीषु[9] हिमप्लुष्टद्रुषु[10] रात्रिषु कुंदवत्[11] । धर्म्यं ध्यानं बाहुबलेरुज्जजृंभे विशेषतः ॥ ७६६ ॥

---

१ सपरिच्छदः सपरीवारः । २ शङ्कुना दिक्साधन भवति । ३ ग्रीष्मर्तुवातसमूह । ४ आमस्तकप्रपदं । ५ क्रोडोवराह. । ६ महासवृष्टिकवातघूर्णितवृक्षैः । ७ निर्जनग्रामवापीसोपानवत् । ८ हिमसद्धृतगजप्रमाणसरिति । ९ हेमन्तसम्बन्धिनीषु । १० हिमदग्धवृक्षासु । ११ माघ्यकुसुमवत् ।

मानात्स मोहनीयांशाज्ज्ञानं नाप्नोति केवलम् । तिरोहितः कां[1]डपटेनाप्यर्थो न हि दृश्यते ॥ ७८१ ॥
युवयोर्वचसा मानं सद्यस्त्यक्ष्यति सोद्य तत् । यातं तस्योपदेशाय समयः खलु वर्त्तते ॥ ७८२ ॥
तामाज्ञां शिरसादाय नत्वा च चरणौ प्रभोः । प्रति बाहुबलिं ब्राह्मीसुंदर्यौ चेलतुस्ततः ॥ ७८३ ॥
ज्ञात्वापि तन्मानमुपेक्षांचक्रे वत्सरं प्रभुः । अमूढलक्ष्या अर्हंतः समये ह्युपदेशकाः ॥ ७८४ ॥
ते आर्ये जग्मतुस्तत्र देशे वल्लीतिरोहितम् । रत्नं रजश्छन्नमिवालक्ष्येतां न तं मुनिम् ॥ ७८५ ॥
मुहुरन्वेषयंतीभ्यां ताभ्यामथ तथास्थितः । उपलक्षि कथंचित्स वृक्षोभ्योस्य विशेषभाक् ॥ ७८६ ॥
निपुणं लक्षयित्वा तं कृत्वा त्रिश्च प्रदक्षिणाम् । महामुनिं बाहुबलिं ते वंदित्वैवमूचतुः ॥ ७८७ ॥
आज्ञापयति तातस्त्वां ज्येष्ठार्य भगवानिदम् । हस्तिस्कंधाधिरूढानामुत्पद्येत न केवलम् ॥ ७८८ ॥
इत्युदित्वा भगवत्यौ जग्मतुस्ते यथागतम् । सोपि विस्मयमानोंतर्महात्मैवमचिंतयत् ॥ ७८९ ॥
त्यक्तसावद्ययोगस्य कायोत्सर्गजुषस्ततः । अस्मिन्तरोरिवारण्ये ममेभा[2]रोहणं कुतः ॥ ७९० ॥
इमे भगवतः शिष्ये भाषेते न मृषा क्वचित् । तत्किमेतदहो यद्वा हुं ज्ञातं हि चिरान्मया ॥ ७९१ ॥
को हि व्रतैं[3]गरिष्ठानां कनिष्ठानां नमस्क्रियाम् । कर्त्तेति मान एवेभस्तमारूढोस्मि निर्भरम् ॥ ७९२ ॥
जगत्त्रयगुरोस्तस्य चिरं सेवाजुषोपि मे । नाभूद्विवेकस्तरणं [4]कुलीरस्येव वारिणि ॥ ७९३ ॥
प्रतिपन्नव्रतेष्वादौ स्वभ्रातृषु महात्मसु । कनिष्ठा इति यत्तेषु नाभून्मम विवंदि[5]षा ॥ ७९४ ॥

---

१ काण्डपटेन पटखण्डेन । २ हस्त्यारोहणं । ३ व्रतैर्गरिष्ठाना गुरुतमाना । ४ कुलीरस्य कर्कटस्य जलजन्तोर्वा । ५ विवन्दिषा वन्दितुमिच्छा ।

तस्मिन्नरण्यमहिषा विषाणाच्छोटपूर्वकम् । महातरुस्कंध इव स्कंधकंडूयनं व्यधुः ॥ ७६७ ॥
वपुषा तद्वपुरवष्टभ्य शैलतटीमिव । वार्ध्रीणसकुलान्यन्वभूवन्निद्रासुखं निशि ॥ ७६८ ॥
सल्लकीपल्लवभ्रांत्या तत्पाणिचरणं मुहुः । कर्षंतः कष्टमसहा वैलक्ष्यं करिणो ययुः ॥ ७६९ ॥
उत्कंटककरालाभिर्जिह्वाभिः करपत्रवत् । विश्वस्तास्तं लिहंति स्मोदाननाश्चमरीगणाः ॥ ७७० ॥
लताभिः शतशाखाभिः प्रसरंतीभिरुच्चकैः । मुरजश्चर्मवध्रीभिरिव सोऽवेष्ट्यताभितः ॥ ७७१ ॥
परितस्तं शरस्तंबाः प्ररोहंति स्म संतताः । पूर्वस्नेहवशायातशराढ्यशरधिश्रियः ॥ ७७२ ॥
उच्चयुः पादयोस्तस्य प्रावृट्पंकनिमग्नयोः । चलच्छतपदीगर्भा अदभ्रा दर्भसूचयः ॥ ७७३ ॥
प्रचक्रिरे कुलायांश्च तद्देहे वल्लिसंकुले । परस्पराविरोधेन ते श्येनचटकादयः ॥ ७७४ ॥
अरण्यकेकिकेकातस्त्रस्तास्तत्र महोरगाः । वल्लीवितानगहने समारोहन् सहस्रशः ॥ ७७५ ॥
शरीरमधिरूढैस्तैर्लंबमानैर्भुजंगमैः । बभौ बाहुबलिर्बाहुसहस्रमिव धारयन् ॥ ७७६ ॥
पादपर्यंतवल्मीकविनिर्यातैर्महोरगैः । पादयोर्वेष्टयांचक्रे स पादकटकैरिव ॥ ७७७ ॥
इत्थं स्थितस्य ध्यानेन तस्यैको वत्सरो ययौ । विनाहारं विहरतो वृषभस्वामिनो यथा ॥ ७७८ ॥
पूर्णे तु वत्सरे विश्ववत्सलो वृषभध्वजः । आहूय भगवान् ब्राह्मीसुंदर्यावेवमादिशत् ॥ ७७९ ॥
स इदानीं बाहुबलिः क्षीणप्रचुरकर्मकः । शुक्ला चतुर्दशीरात्रिरिव प्रायेण निर्स्तमाः ॥ ७८० ॥

---

१ शृङ्गाच्छोटनपूर्वक । २ वार्ध्रीणसाः गण्डकाख्याः पशुविशेषाः । ३ उदानना उन्मुखाः । ४ मुरजो मृदङ्गः । ५ शतपदी कर्णखर्जूर इति ख्यातः कीटविशेषः । ६ पक्षिगृहाणि । ७ अरण्यमयूरवाणीतः । ८ बाहुबलिपक्षे निस्तमा अज्ञानरहितः रात्रिपक्षे निस्तमा अन्धकाररहिता।

## षष्ठः सर्गः

इतश्च स्वामिनः शिष्यो मरिचिर्भरतात्मजः । एकादशानामंगानामध्येता निजनामवत् ॥ १ ॥
सहितः श्रमणगुणैः सुकुमारो निसर्गतः । कलभो यूथपेनेव विहरन् स्वामिना समम् ॥ २ ॥
ग्रीष्मे मध्यंदिने भीष्मैर्दिवाकरकरोत्करैः । नाळींधमैरिव ध्मातेष्वभितो मार्गपांशुषु ॥ ३ ॥
अदृश्याभिर्हुतवहज्वालाभिरिव सर्वतः । महावात्याभिरुष्णाभिः खिलीभूतेषु वर्त्मसु ॥ ४ ॥
आपादमस्तकोद्भूतस्वेदधारानिरंतरे । अग्नितप्तेपदार्द्रैधःसध्रीचि निजवर्ष्मणि ॥ ५ ॥
पयःसंसिक्तसंशुष्कचर्मगंधवदुद्धते । प्रस्वेदक्लिन्नवस्त्रांगमलगंधे च दुःसहे ॥ ६ ॥
पादयोर्दह्यमानश्चावतप्तेनकुलस्थितम् । नाटयंस्तृष्णयाक्रांतश्चेतसैवमचिंतयत् ॥ ७ ॥
सप्तभिः कुलकम् ॥
केवलज्ञानदर्शनार्केन्दुमेरुमहीभृतः । ऋषभस्वामिनस्तावदस्मि पौत्रो जगद्गुरोः ॥ ८ ॥
अखंडषट्खंडमहीमंडलाखंडलस्यच । विवेकैकनिधेस्तस्य पुत्रोऽस्मि भरतेशितुः ॥ ९ ॥
चतुर्विधस्य संघस्यान्वक्षं च स्वामिनोऽतिके । प्राव्राजिषं पंचमहाव्रतोच्चारणपूर्वकम् ॥ १० ॥
एवं सति स्थानतोऽस्माल्लज्जया गलितस्य मे । न युज्यते गृहे गंतुं वीरस्येव रणाजिरात् ॥ ११ ॥

---

१ मृदु । २ निसर्गतः स्वभावात् । ३ मार्गरजःसु । ४ अग्नितप्तेपदार्द्रकाष्ठसमाने । ५ केवलज्ञानदर्शने एव अर्केन्दू तयोर्मेरुमहीभृतः । ६ अन्वक्ष प्रत्यक्ष ।

इदानीमपि गत्वा तान् वंदिष्येऽहं महामुनीन् । चिंतयित्वेति स महासत्वः पादमुदक्षिपत् ॥ ७९५ ॥
लतावलीवत्त्रुटितेष्वथितो घातिकर्मसु । तस्मिन्नेव पदे ज्ञानमुत्पेदे तस्य केवलम् ॥ ७९६ ॥
उत्पन्नकेवलज्ञानदर्शनः सौम्यदर्शनः । रवेरिव शशी सोऽथ जगाम स्वामिनोंतिकम् ॥ ७९७ ॥

प्रदक्षिणं तीर्थकृतो विधाय तीर्थाय नत्वा च जगन्नमस्यः ।
महामुनिः केवलिपर्षदंतस्तीर्णप्रतिज्ञो निषसाद सोऽथ ॥ ७९८ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये
प्रथमपर्वणि बाहुबलिसंग्रामदीक्षाकेवलज्ञानसंकीर्त्तनो
नाम पचमः सर्ग· संपूर्ण. ॥ ५ ॥

---

श्रामण्यं गुणभारं च महाद्रिमिव दुर्वहम् । मुहूर्त्तमपि चोद्वोढुमलमस्मि न सांप्रतम् ॥ १२ ॥
इतः कुलाद्यमलिनमितश्चासुकरं व्रतम् । इतस्तटीतः शार्दूलः संकटे पतितोऽस्मि हा ॥ १३ ॥
आ ज्ञातमथवास्तीह सुषमे विषमेपि हि । पर्वते दंरूकपथ इव पंथा अयं खलु ॥ १४ ॥
मनोवाक्कायदंडानां जयिनः श्रमणा ह्यमी । तैरहं विजितोऽस्मीति भविष्यामि त्रिदंडिकः ॥ १५ ॥
अमी मुंडाः शिरःकेशलुंचनेंद्रियनिर्जयैः । अहं पुनर्भविष्यामि क्षुरमुंडशिखाधरः ॥ १६ ॥
स्थूलसूक्ष्मप्राणिवधादिभ्योऽमी विरताः सदा । स्थूलप्राणातिपातादिविरतिर्भवतान्मम ॥ १७ ॥
एते ह्यकिंचना[1] मेऽस्तु स्वर्णमुद्रादि किंचन । एतेऽनुपानहो[2]ऽहं तु परिधास्याम्युपानहौ ॥ १८ ॥
एतेऽष्टादशशीलांगसहस्रयातिसुगंधयः । शीलेनाहं तु दुर्गंधि आदास्ये चंदनादिकम् ॥ १९ ॥
अपमोहाः[3] साधवोऽमी मोहच्छन्नोस्म्यहं ततः । तच्चिह्नं धारयिष्यामि छत्रकं मस्तकोपरि ॥ २० ॥
श्वेतवस्त्रधरा एते कषायकलुषस्त्वहम् । तत्स्मृत्यै परिधास्यामि काषायाण्यंशुकान्यहम्[4] ॥ २१ ॥
पापभीताः प्राज्यजीवजलारंभं त्यजंत्यमी । अस्तु स्नानं च पानं च पानीयेन मितेन मे ॥ २२ ॥
स्वबुद्ध्या कल्पयित्वैवं मरिचिर्लिंगमात्मनः । बभार तादृशश्चाथ विजह्रे स्वामिना सह ॥ २३ ॥
नाश्वो न च खरः किंतूभयांशोऽश्वतरो यथा । न संयतो न च गृही मरीचिरभवत्तदा ॥ २४ ॥
महर्षिषु विजातीयं[5] मरालेष्विव[6] वायसम्[7] । तं निरीक्ष्य जनो भूयान् धर्मं पप्रच्छ कौतुकात् ॥ २५ ॥

---

१ काञ्चनादिरहिताः । २ चर्मपादुकारहिताः ३ मोहरहिता । ४ अशुकानि वस्त्राणि । ५ विजातीय पृथकुजातीय । ६ मरालेषु हसेषु । ७ वायसं काक ।

विश्वोपकारकरणप्रावृषेण्यपयोमुचम् । कुर्वतो देशनां भर्तुर्धर्मस्तेन च शुश्रुवे ॥ ४० ॥
ज्योत्स्नेव चक्रवाकायोलूकायेव दिवामुखम् । प्रक्षीणभागधेयाय रोगितायेव भेषजम् ॥ ४१ ॥
शीतलं वातलायेव[1] छागायेव[2] घनागमः । स धर्मः स्वामिगदितो रुरुचे कपिलाय न ॥ ४२ ॥ युग्मम् ।
धर्मांतरं तु शुश्रूषुः क्षिपन् दृष्टिमितस्ततः । प्रेक्षांचक्रे मरीचिं स स्वामिशिष्यविलक्षणम् ॥ ४३ ॥
मरीचिं स्वामिनः सोऽगाद्धर्मांतरजिघृक्षया । महेभ्यहट्टाद्दरिद्रहट्टमिव[3] क्रायकबालकः ॥ ४४ ॥
धर्मं तेनानुयुक्तस्तु[4] मरीचिरिदमभ्यधात् । नेहास्ति धर्मो धर्मार्थी यदि तत्स्वामिनं श्रय ॥ ४५ ॥
ऋषभस्वामिनः पादाभ्यर्णे[5] भूयो जगाम सः । पुनराकर्णयामास धर्मं तत्र तथैव तम् ॥ ४६ ॥
स्वकर्मदूषितायास्मै स्वामिधर्मोऽरुचन्न हि । चातकस्य वराकस्य संपूर्णसरसापि किम् ॥ ४७ ॥
मरीचिमाययौ भूयः स इत्यूचे च किं तव । योपि सोपि न धर्मोस्ति निर्धर्मं किं व्रतं भवेत् ॥ ४८ ॥
मरीचिश्चिंतयामासानुरूपः कोप्ययं मम । अहो दैवादयं जज्ञे योगः सदृशयोश्चिरात् ॥ ४९ ॥
सहायो निःसहायस्य ममास्त्विति विचिंत्य सः । तत्रापि धर्मोस्त्यत्रापि धर्मोस्त्येवमभाषत ॥ ५० ॥
दुर्भाषितेन तेनैकेनाप्युपार्जयदुल्बणम् । अब्धिकोटीकोटिमानं मरीचिर्भवमात्मनः ॥ ५१ ॥
अदीक्षयत्सकपिलं स्वसहायं चकार च । परिव्राजकपाखण्डं ततः प्रभृति चाभवत् ॥ ५२ ॥
अथ साग्रं योजनानां शतं लोकान् रुजः क्षयात् । अनुगृह्णंस्तापशांत्या प्रावृषेण्य इवाम्बुदः ॥ ५३ ॥
पतंगमूषकशुकप्रायैस्तैरप्रवर्त्तितः । अनीतेरिव भूपालः सुखयन्नखिलाः प्रजाः ॥ ५४ ॥

---

१ वातरोगिणे । २ छागाय मेषाय । ३ महेभ्यहट्टात् । ४ अनुयुक्तः पृष्टः । ५ पादसमीप ।

नैमित्तिकानां वैराणां शाश्वतानां च सर्वतः । प्रशमन् प्रीणयन् जंतून् रविर्ध्वांतक्षयादिव ॥ ५५ ॥
व्यवहारप्रवृत्याग्रे सर्वसौस्थ्यकृता यया । आनंदयन्नमर्यादं परितोपि प्रजास्तथा ॥ ५६ ॥
अत्यंतवृष्ट्यनावृष्टी अजीर्णातिक्षुधाविव । प्रभावेना[1]गदेनेव जगतोप्यपसारयन् ॥ ५७ ॥
स्वान्य[2]चक्रभवेनांतःशल्येनेवापगच्छता । सद्यः प्रीतैर्जनपदैः क्रियमाणागमोत्सवः ॥ ५८ ॥
सर्वसंहारघोराच्च रक्षन् दुर्भिक्षतो जगत् । रक्षसो मांत्रिक इव स्तूयमानो भृशं जनैः ॥ ५९ ॥
भामं[3]डलं दधानश्च जितमार्त्तंडमंडलम् । बहिर्भूतमिवानंतं ज्योतिरंतरसंमितम् ॥ ६० ॥
चक्रवर्तीव चक्रेण निःसाधारणतेजसा । प्रसर्पता पुरो व्योम्नि धर्मचक्रेण राजितः ॥ ६१ ॥
लघुध्वजसहस्रेण पुरो धर्मध्वजेन च । सर्वकर्मजयस्तंभेनेव तुंगेन शोभितः ॥ ६२ ॥
स्वयं शब्दायमानेन दिव्यदुंदुभिना दिवि । क्रियमाणप्रयाणार्हकल्याण इव निर्भरम् ॥ ६३ ॥
नभःस्थितेन स्फटिकरत्नसिंहासनेन च । पादपीठसमेतेन यशसेवोपशोभितः ॥ ६४ ॥
सुरैः संचार्यमाणेषु सौवर्णे[4]ष्वंबुजन्मसु । कुर्वाणश्चरणन्यासं सलीलं राजहंसवत् ॥ ६५ ॥
भिया रसातलमिव विविक्षुभिरधोमुखैः । तीक्ष्णदंष्ट्रैः कंटकैरप्यनाश्लिष्टपरिच्छदः ॥ ६६ ॥
उपास्यमानो युगपदृतुभिर्निखिलैरपि । कर्त्तुं प्रायश्चित्तमिवानंगसाहाय्य[5]पाप्मनः ॥ ६७ ॥
मार्गा[6]वनीरुहैरुच्चैर्दूरान्नमितमूर्द्धनि । अपसंज्ञै[7]रपि नमस्क्रियमाण इवान्वितः ॥ ६८ ॥

---

१ अगदेन औषधेन । २ स्वचक्रपरचक्रभवेन । ३ तेजोमण्डलं । ४ कमलेषु । ५ कामसाहाय्यपापस्य ६ मार्गवृक्षैः ७ अपसंज्ञैः निश्चेष्टैः ।

तालवृंतानिलेनेव मृडुना शीतलेन च । अनिलेनानुकूलेन सेव्यमानो निरंतरम् ॥ ६९ ॥
न शुन्नं स्वामिवामानामिति ज्ञात्वेव पक्षिन्निः । प्रदक्षिणं प्रोत्तरद्भिर्लंघ्यमानाग्रवर्त्मकः ॥ ७० ॥
जघन्यतः कोटिसंख्यै राजमानः सुरासुरैः । यातायातपरैर्वेलातरंगैरिव सागरः ॥ ७१ ॥
न्नक्तिप्रन्नाववशतः सप्रन्नेण दिवापि हि । इंडुनेव नन्नःस्थेनातपत्रेण विराजितः ॥ ७२ ॥
इंदोर्मरीचिसर्वस्वकोशैरिव पृथक्कृतैः । गंगातरंगधवलैर्वीज्यमानश्च चामरैः ॥ ७३ ॥
तपसा दीप्यमानैश्च सौम्यैश्च श्रमणोत्तमैः । लक्षशः परिकरितः न्नुनाथ इवोडुन्निः ॥ ७४ ॥
प्रतिग्रामं प्रतिपुरं न्नव्यजंतून् प्रबोधयन् । प्रतिसिंधु प्रतिसरः पंकजानीव न्नास्करः ॥ ७५ ॥
ग्रामाकरपुरद्रोणमुखकर्वटपत्तनैः । मंरूपाश्रमखेटाद्यैश्चाऽपूर्णां विहरन् महीम् ॥ ७६ ॥
विश्वोपकारप्रवणो न्नगवान्वृषन्नध्वजः । अपरेद्युः क्रमात्प्रापदष्टापदमहाचलम् ॥ ७७ ॥

॥ पंचविंशत्या कुलकम् ॥

शारदानामिवान्नाणां राशिमेकत्र कल्पितम् । संस्त्यानीन्नूतडुग्धाब्धिवेलाकूटमिवाहृतम् ॥ ७८ ॥
जन्मान्निषेकविकृतपुरंदरककुद्मताम् । एकं ककुद्मंतमिवोत्तुंगशृंगमिव स्थितम् ॥ ७९ ॥
नंदीश्वरमहाद्वीपवार्त्तिपुष्करिणीसदाम् । मध्याद्दधिमुखाद्रीणामिवैकतममागतम् ॥ ८० ॥
जंबूद्वीपारविन्दस्य बिंशखंडमिवोद्धृतम् । उन्नटं मुकुटमिव श्वेतरत्नमयं न्नुवः ॥ ८१ ॥

---

१ व्यजनपवनेन । २ स्वामिप्रतिकूलाना । ३ साधूत्तमैः । ४ उडुनाथश्चन्द्र. । ५ उडुभिर्नक्षत्रैः । ६ घनीभूतदुग्धसमुद्रवेलाकूट । ७ ककुद्मन्त वृषभं । ८ पुष्करिणी वापी सरसी च । ९ बिशखण्ड नालखण्ड ।

पक्कद्राक्षाफलोन्मत्तशुकैः क्वापि कृतारवम् । क्वापि चूतांकुरोन्मत्तपिकोद्ग्राहितपंचमम्[1] ॥ ९६ ॥
क्वचिन्नवबिसास्वादमत्तहंसस्वरोत्कुरं । सरित्तटमदक्रौंचक्रेंकारमुखरं क्वचित् ॥ ९७ ॥
क्वाप्यासन्नघनोन्माद्यत्केकिकेकारवाकुलम् । क्वचित्सरःपरिसरत्सारसस्वरसुंदरम् ॥ ९८ ॥
कौसुंभवाससमिव रक्ताशोकदलैः क्वचित् । तमालतालहिंतालैर्[2]नीलांबरमिव क्वचित् ॥ ९९ ॥
पीतांशुकमिव क्वापि किंशुकैः कुसुमांचितैः । श्वेतवस्त्रमिव क्वापि मालतीमल्लिकावनैः ॥ १०० ॥
अष्टयोजनमानेनोच्छ्रायेणाभ्रंलिहं[3] ततः । गिरिं गिरिगरिष्ठस्तमारुरोह जगद्गुरुः ॥ १०१

चतुर्विंशत्या कुलकम् ॥

मरुत्कीर्णैर्द्रुकुसुमैस्तथा निर्झरवारिभिः । त्रिजगत्स्वामिनः सोऽङ्घ्रिरर्घ्यपाद्ये[4] व्यधादिव ॥ १०२ ॥
अष्टापदगिरिः सोऽथ स्वामिपादैः पवित्रितः । न हीनमान्यन्नूनमेरोस्तज्जन्मस्नानपावितात् ॥ १०३ ॥
प्रहृष्टपरपुष्टादिकूजितव्याजतो[5] मुहुः । जगाविव जगन्नाथगुणानष्टापदाचलः ॥ १०४ ॥
क्षेत्रे योजनमात्रेऽथ तृणकाष्ठादिकं क्षणात् । वर्द्धनीजीविन[6] इव जह्रुर्वायुकुमारकाः ॥ १०५ ॥
विकृत्य सद्योऽप्यभ्राणि पानीयमहिषानिव । गंधांबुभिस्तां सिषिचुः क्षितिं मेघकुमारकाः ॥ १०६ ॥
स्वर्णरत्नशिलाभिश्च विशालाभिर्दिवौकसः । सममादर्शतलवद्बबंधुर्धरणीतलम् ॥ १०७ ॥
पंचवर्णाः शक्रधनुःखंडोत्करविडंबिनीः । जानुदघ्नीः[7] सुमनसो[8] ववृषुर्व्यंतरामराः ॥ १०८ ॥

---

१ आम्राङ्कुरोन्मत्तकोकिलोद्ग्राहितपञ्चमस्वर । २ तमालतालहिन्ताला वृक्षविशेषा । ३ गगनपर्यन्तोन्नत । ४ अर्घ्यपाद्योदके । ५ प्रहर्षितकोकिलादिकूजितमिषात् । ६ वर्द्धनीजीविनः मार्जनीजीविनः । ७ जानुप्रमाणाः । ८ पुष्पाणि ।

द्वारे द्वारे न्यधीयंत व्यंतरैर्धूपचारिकाः । चक्षूरेखांजनलेखायितधूपोर्मिधारिणः ॥ १२२ ॥
मध्यवप्रांतरे पूर्वोदीच्यां विश्रांतये विभोः । देवच्छंदं व्यधुर्देवा देवालयमिवौकसि ॥ १२३ ॥
त्रिकोशमानश्चैत्यद्रुर्विचक्रे व्यंतरामरैः । अंतःसमवसरणं पोतांतरिव कूपकः ॥ १२४ ॥
पीठं रत्नमयं चक्रुस्तेऽथ चैत्यतरोरधः । तं मूलतः पल्लवितमिव कुर्वाणमंशुभिः ॥ १२५ ॥
मृज्यमानं मुहुश्चैत्यशाखिशाखांतपल्लवैः । तस्योपरिष्टात्पीठस्य ते रत्नच्छंदकं व्यधुः ॥ १२६ ॥
तस्यांतः प्राक्सांघ्रिपीठं रत्नसिंहासनं व्यधुः । कर्णिकामिव विकचांभोजकोशस्य मध्यतः ॥ १२७ ॥
छंदकस्योपरि छत्रत्रितयं ते विचक्रिरे । आवर्त्तितं त्रिपथगास्रोतस्त्रयमिवान्वितः ॥ १२८ ॥
कुतोपि हि समाहृत्य पूर्वसिद्धमिव क्षणात् । इत्थं समवसरणमस्थाप्यत सुरासुरैः ॥ १२९ ॥
ततश्च पूर्वद्वारेण मोक्षद्वारं जगत्पतिः । भव्यानां हृदयमिव प्रविवेश तदुच्चकैः ॥ १३० ॥
तत्कालं श्रवणोत्तंसीभवच्छाखांतपल्लवम् । ततः प्रदक्षिणीचक्रे तमशोकतरुं प्रभुः ॥ १३१ ॥
नमस्तीर्थायेति वदन् पूर्वाशाभिमुखोऽथ तत् । राजहंस इवांभोजं भेजे सिंहासनं विभुः ॥ १३२ ॥
दिक्ष्वन्यास्वपि तिसृषु रूपाणि परमेष्ठिनः । रत्नसिंहासनस्थानि विचक्रुर्व्यंतरामराः ॥ १३३ ॥
पूर्वद्वाराविशन्साधुसाध्वीवैमानिकस्त्रियः । प्रदक्षिणीकृत्य नेमुर्जिनं तीर्थं च भक्तितः ॥ १३४ ॥
प्राकारे प्रथमे तत्र धर्मारामद्रुमाः । पूर्वदक्षिणदिश्यासांचक्रिरे सर्वसाधवः ॥ १३५ ॥

---

१ कूपकः नौकाया "डोल" इति ख्यातो गुणाधारो दण्डः । २ गङ्गाप्रवाहत्रय । ३ पूर्वदिशाभिमुखः । ४ धर्मोद्यानमहावृक्षाः ।

तेषां च पृष्ठतस्तस्थुरूर्ध्वा वैमानिकस्त्रियः । तासां च पृष्ठतस्तस्थुस्तथैव व्रतिनीगणाः[1] ॥ १३६ ॥

त्रिभिर्विशेषकम् ॥

प्रविश्य दक्षिणद्वारा प्राग्विधानेन नैर्ऋते । तस्थुर्भुवनेशज्योतिर्व्यंतराणां स्त्रियः क्रमात् ॥ १३७ ॥
प्रविश्य पश्चिमद्वारा तद्वन्नत्वाऽवतस्थिरे । मरुद्दिशि भुवनेशज्योतिष्कव्यंतराः क्रमात् ॥ १३८ ॥
तदा च नाथं समवसृतं विज्ञाय वासवः । नादयन्द्यां विमानौघैस्तत्र सत्वरमाययौ ॥ १३९ ॥
प्रविश्योदीच्यद्वारेण स्वामिनस्त्रिः प्रदक्षिणम् । कृत्वा नत्वा च सुत्रामा[2] भक्तिमानेवमस्तवीत् ॥ १४० ॥
अपि सर्वात्मना ज्ञातुमशक्या योगिपुंगवैः । स्तुत्याः क्व ते गुणाः स्तोता क्वाहं नित्यप्रमद्वरः ॥ १४१ ॥
तथापि नाथ स्तोष्यामि यथाशक्ति भवद्गुणान् । दीर्घाध्वनि व्रजन् खंजः[3] किं केनापि निवार्यते ॥१४२॥
भवदुःखातपक्लेशविवशानां शरीरिणाम् । [4]छत्रच्छायायमानांघ्रिच्छाय त्रायस्व नः प्रभो ॥ १४३ ॥
कृतार्थस्त्वं स्वयं नाथ कृते लोकस्य केवलम् । एवं विहरसे स्वार्थायोद्याति किमहस्करः[5] ॥ १४४ ॥
मध्यंदिनादित्य इव त्वयि प्रभवति प्रभो । संकुचत्यन्नितः कर्म देहच्छायेव देहिनाम् ॥ १४५ ॥
तिर्यंचोऽपि हि धन्यास्ते ये त्वां पश्यंति सर्वदा । भवद्दर्शनवंध्यास्तु त्रिविष्टपसदो[6]ऽपि न ॥ १४६ ॥
प्रकृष्टेभ्यः प्रकृष्टास्ते भविकास्त्रिजगत्पते । एको हृदयचैत्येषु येषां त्वमधिदेवता ॥ १४७ ॥
एकं याचे भवत्पादान् ग्रामाद्ग्रामं पुरात्पुरम् । विहरन्नपि मा जातु विहासीर्हृदयं मम ॥ १४८ ॥

१ साध्वीगणाः । २ सुत्रामा इन्द्र. । ३ खञ्ज. पादविकल. । ४ हे छत्रच्छायायमानचरणच्छाय इति सम्बोधन । ५ अहस्करः सूर्यः । ६ देवा. ।

प्रभुं स्तुत्वेति पंचांगस्पृष्टभूमिः प्रणम्य च । पूर्वोत्तरस्यां दिश्यासांचक्रे दिविषदां पतिः ॥ १४९ ॥
तथा च समवसृतं स्वामिनं शैलपालकाः । शशंसुश्चक्रिणे तत्र तदर्थं स्थापिता हि ते ॥ १५० ॥
स वदान्यो[1] ददौ स्वर्णकोटीर्द्वादश सार्द्धिकाः । तेभ्यो जिनं ज्ञपयद्भ्यः सर्वं स्तोकं हि तादृशम् ॥ १५१ ॥
सिंहासनादथोत्थायाभिमुखं भगवद्दिशः । गत्वा पदानि सप्ताष्टान्यनमद्विनयात्प्रभुम् ॥ १५२ ॥
स्थित्वा सिंहासने भूयो भूयः सैन्यानजूहवत् । स्वामिपादांतयानाय पुरंदर इवामरान् ॥ १५३ ॥
आययुः सर्वतो भूपाः क्षणेन भरताज्ञया । वेलयेव पयोराशेरुच्चैर्नीचिपरंपराः ॥ १५४ ॥
जगर्जुर्दंतिनस्तारं वाजिनश्च जिहेषिरे । त्वरयंत इव स्वामियानाय स्वाधिरोहकान् ॥ १५५ ॥
रथिनः पत्तयश्चेयुः प्रमोदपुलकांकिताः । राजाज्ञा भगवद्याने सुगंधिस्वर्णसन्निभा ॥ १५६ ॥
सैन्यान्याष्टापदायोध्यं न मांति स्म स्थितान्यपि । महा[2]निर्झरिणीपूरपयांसीव तदन्वयम् ॥ १५७ ॥
श्वेतातपत्रैर्मायूरातपत्रैश्च वियत्यपि । मंदाकिनीयमुनयोर्वेणीसंग इवाऽभवत् ॥ १५८ ॥
सा[3]दिवीरकराग्रस्थाः स्फुरद्भिः स्वैर्मरीचिभिः । कुंता अपि समुत्क्षिप्तकुंता इव चकाशिरे ॥ १५९ ॥
गर्जद्भिरूर्जितं हर्षादारूढैर्वीरकुंजरैः । कुंजरा अपि चोदूढकुंजरा इव रेजिरे ॥ १६० ॥
चक्रितोप्यौ[4]त्सुकायंत सैन्या नंतुं जगत्पतिम् । असिकोशस्तदसितो नितांतं निशितो[5]ऽभवत् ॥ १६१ ॥
सर्वतो मिलिताः सैन्या महाकोलाहलेन ते । द्वाःस्थेनेव न्यवेद्यंत मध्यस्थस्यापि चक्रिणः ॥ १६२ ॥
अथागशौचं स्नानेन प्रचक्रे चक्रवर्त्यपि । रागद्वेषजयेनेव मनःशौचं मुनीश्वरः ॥ १६३ ॥

---

१ वदान्यो दाता । २ महानदीपूरपयासीव । ३ अश्वारोहवीरहस्ताग्रस्थाः । ४ उत्सुका अभवन् । ५ निशितस्तीक्ष्णः ।

भरतेशकृतप्रायश्चित्तकौतुकमंगलः । पर्यधाद्वस्त्रनेपथ्यान्युज्वलानि स्ववृत्तवत् ॥ १६४ ॥
मूर्ध्नि श्वेतातपत्रेण चामराभ्यां च पार्श्वयोः । भ्राजमानः स शुभ्राभ्यां ययौ वेश्मांतवेदिकाम् ॥ १६५ ॥
पूर्वाचलमिवादित्यस्तामारुह्य महीपतिः । नभोमध्यमिवोदग्रमारुरोह महागजम् ॥ १६६ ॥
भेरीशंखानकप्रायवर्यतूर्यमहारवैः । अश्नुवानोऽम्बराभोगं यंत्रधाराजलैरिव ॥ १६७ ॥
दिशो गजैर्निरुंधानोऽम्बुदैरिव महांबुभिः । तुरंगैश्छादयन्नुर्वीं तरंगैरिव सागरः ॥ १६८ ॥
हर्षत्वराभ्यां युग्मिभ्यामिव कल्पद्रुमैरन्वितः । सांतःपुरपरीवारः सोऽगादष्टापदं क्षणात् ॥ १६९ ॥
त्रिभिर्विशेषकम् ॥

सोऽवरुह्य गजात्तस्मादारुरोह महागिरिम् । गृहस्थधर्मादुत्तुंगं चारित्रमिव संयमी ॥ १७० ॥
उदग्द्वारेण समवसरणं प्रविवेश सः । प्रभुं ददर्श चानंदकंदलोद्गमवारिदम् ॥ १७१ ॥
त्रिश्च प्रदक्षिणां कृत्वा नत्वा च चरणौ प्रभोः । बद्धांजलिः शिरस्येवमारेभे भरतः स्तुतिम् ॥ १७२ ॥
कुंभैर्मानमिवांभोधेः स्तवनं मादृशैस्तव । स्तोष्यामि तदपि स्वामिन् भक्त्या ह्यस्मि निरंकुशः ॥ १७३ ॥
त्वदाश्रितास्तु त्वत्तुल्या भवंति भविनः प्रभो । यांति दीपस्य संपर्काद्वर्त्तयोऽपि हि दीपताम् ॥ १७४ ॥
माद्यदिंद्रियदंतींद्रमदीकरणभेषजम् । तव स्वामिन् विजयते शासनं मार्गशासनम् ॥ १७५ ॥
हत्वा घातीनि कर्माणि शेषकर्माण्युपेक्षसे । भुवनानुग्रहायैव मन्ये त्रिभुवनेश्वर ॥ १७६ ॥
पादलग्नास्तव विभो लंघंते भविनो भवम् । उदन्वंतं पक्षिराजपक्षमध्यगता इव ॥ १७७ ॥

१ अश्नुवानो व्याप्नुवानः ।

जयत्यनंतकल्याणद्रुमोल्लासनदोहदम् । विश्वमोहमहानिद्राप्रत्यूषं[1] दर्शनं तव ॥ १७८ ॥
त्वत्पदांभोजसंस्पर्शाद्दीर्यंते कर्म देहिनाम् । इंदोर्मृदुभिरप्यस्तै[2]र्दंतिदंताः स्फुटंति हि ॥ १७९ ॥
वृष्टिर्वारिधरस्येव मृगांकस्येव चंद्रिका । जगन्नाथ प्रसादस्ते सर्वसाधारणः खलु ॥ १८० ॥
एवं जगत्पतिं स्तुत्वा नत्वा च भरतेश्वरः । निषसाद हरेः पृष्ठे सामानिक इवामरः ॥ १८१ ॥
दिवौकसां पृष्ठतश्च निषेदुरपरे नराः । नराणां पृष्ठतो नार्य ऊर्ध्वा एवावतस्थिरे ॥ १८२ ॥
इत्थं प्रथमवप्रांतस्तस्थौ संघश्चतुर्विधः । चतुर्विधो धर्म इवानवद्ये[3] स्वामिशासने ॥ १८३ ॥
प्राकारे च द्वितीयस्मिंस्तिर्यंचस्तस्थुरुन्मदाः । विरोधिनोऽपि हि मिथः सस्नेहाः सोदरा इव ॥ १८४ ॥
तार्त्तीयीके पुनर्वप्रे नृपादीनामुपेयुषाम् । देशनाकर्णनोत्कर्णास्तस्थुर्यानपरंपराः[4] ॥ १८५ ॥
सर्वभाषानुगामिन्या मेघनिर्घोषधीरया । गिरा त्रिभुवनस्वामी विदधे धर्मदेशनाम् ॥ १८६ ॥
आसक्तभारनिर्मुक्ता इवासेष्टपदा इव । कृताभिषेककल्याणा इव ध्यानस्थिता इव ॥ १८७ ॥
प्राप्ता इवाहमिंद्रत्वं परं ब्रह्म गता इव । शृण्वंतो देशनां हर्षात्तस्थुस्तिर्यङ्नरामराः ॥ १८८ ॥ युग्मम् ।
देशनांते च भरतो भ्रातॄनात्तमहाव्रतान् । निरीक्ष्य समनस्तापो[5] मनस्येवमचिंतयत् ॥ १८९ ॥
बंधूनां गृह्णता राज्यमेतेषां किं कृतं मया । अनारतमतृप्तेन भस्मकामयितेव[6] हा ॥ १९० ॥
अन्येभ्योऽपि ददानोऽस्मि लक्ष्मीं भोगफलामिमाम् । तच्च मे भस्मनि हुतमिव मूढस्य निष्फलम् ॥ १९१ ॥

१ विश्वमोहमहानिद्राया प्रत्यूष प्रातःकालरूप । २ अस्तै रश्मिभिः । ३ अनवद्ये निर्दोषे । ४ वाहनपरम्पराः । ५ मनस्तापसहित. । ६ भस्मकामयिता अग्निना ।

काकोप्याहूय काकेभ्यो दत्वान्नाद्युपजीवति । ततोपि हीनस्तदहं भोगान् भुंजे विना ह्यमून् ॥ १९२ ॥
दीयमानान् यदि पुनर्भोगान् भूयोपि मद्गुणैः । आददीरन्नमी भिक्षां मासक्षपणिका[1] इव ॥ १९३ ॥
एवमालोच्य भरतः पादमूले जगद्गुरोः । भ्रातॄन्निमंत्रयामास भोगाय रचितांजलिः ॥ १९४ ॥
प्रभुरप्यादिदेशैवमृज्वाशय विशांपते । भ्रातरस्ते महासत्वाः प्रतिज्ञातमहाव्रताः ॥ १९५ ॥
संसारासारतां ज्ञात्वा परितस्त्यक्तपूर्विणः । न खलु प्रतिगृह्णंति भोगान् भूयोपि वांतवत्[2] ॥ १९६ ॥
युग्मम् ।

एवं निषिद्धो भोगेषु स्वामिना भरतेश्वरः । भूयो विचिंतयामास सानुतापेन[3] चेतसा ॥ १९७ ॥
यदि तावदमी त्यक्तसंगा भोगान्न भुंजते । तथापि तावदाहारं भोक्ष्यंते प्राणधारणम् ॥ १९८ ॥
एवं विचिंत्य शकटशतैः पंचभिरुच्चकैः । आनाय्याहारमनुजान्ययमंत्रयत पूर्ववत् ॥ १९९ ॥
स्वामी भूयोप्युवाचैवमन्नादि भरतेश्वर । आधाकर्माहृतं जातु यतीनां नहि कल्पते ॥ २०० ॥
एवं निराकृतो भूयोऽप्यकृताकारितेन सः । अन्नेनामंत्रयांचक्रे शोभते सर्वमार्जवे[4] ॥ २०१ ॥
राजेन्द्र राजपिंडोऽपि महर्षीणां न कल्पते । एवं भूयो निराचक्रे चक्रभृद्धर्मचक्रिणा[5] ॥ २०२ ॥
स्वामिना प्रतिषिद्धोऽस्मि सर्वथेति महीयसा । अदूयतानुतापेन राहुणेव निशाकरः ॥ २०३ ॥
उपलक्ष्य विलक्षत्वं सहस्राक्षः[6] क्ष्मापतेः । पप्रच्छ स्वामिनमिति कतिधा स्यादवग्रहः ॥ २०४ ॥

१ मासोपवासिनो मुनय. । २ वमनवत् । ३ सानुतापेन पश्चात्तापगहितेन। ४ सरलत्वे । ५ श्रीतीर्थङ्करेण । ६ सहस्राक्ष इन्द्रः ।

स्वाम्यपि व्याजहारैवं पंचधा स्यादवग्रहः । इंद्रचक्रिनृपागारिसाधुसंबंधिभेदतः ॥ २०५ ॥
उत्तरेणोत्तरेणैषां पूर्वः पूर्वः प्रबाध्यते । विधिः परोक्तो बलवान् यत्पूर्वोक्तपरोक्तयोः ॥ २०६ ॥
शक्रोऽप्यूचेऽवग्रहे मे साधवो विहरंति ये । तदमीषां मया देवानुजज्ञेऽवग्रहो निजः ॥ २०७ ॥
इत्युदित्वा स्वामिपादान् वंदित्वाऽवस्थिते हरौ । एवं संचिंतयामास भूयोऽपि भरतेश्वरः ॥ २०८ ॥
एभिर्मदीयमुनिभिर्यद्यप्यन्नादि नादृतम् । अवग्रहानुज्ञयाऽद्य कृतार्थः स्यां तथाप्यहम् ॥ २०९ ॥
संप्रधार्येति हृदये हृदयालुर्महीपतिः । शक्रवत्स्वामिपादाग्रे त्वज्ञासीत्स्वमवग्रहम् ॥ २१० ॥
सब्रह्मचारिणमिवेत्यपृच्छद्वासवं च सः । मया किं कार्यममुना भक्तपानादिनाऽधुना ॥ २११ ॥
गुणोत्तरेभ्यो दातव्यमिति शक्रेण भाषिते । एवं स दध्यौ मम के विना साधून् गुणोत्तराः ॥ २१२ ॥
आ ज्ञातमथवा संति विरताविरताः खलु । गुणोत्तराः श्रावका मे तेभ्यो देयमिदं मया ॥ २१३ ॥
कर्त्तव्यं तच्च निश्चित्य चक्रवर्ती दिवस्पतेः । भास्वदाकृतिकं रूपं दृष्ट्वा पप्रच्छ विस्मितः ॥ २१४ ॥
किमीदृशेन रूपेण यूयं स्वर्गेऽपि तिष्ठथ । रूपांतरेण यदि वा कामरूपा हि नाकिनः ॥ २१५ ॥
देवराजोऽब्रवीद्राजन्निदं रूपं न तत्र नः । यत्तत्र रूपं तन्मर्त्यैर्न द्रष्टुमपि पार्यते ॥ २१६ ॥
भरतः पुनरप्यूचे सहस्राक्ष ममोच्चकैः । यौष्माकीणस्य रूपस्य दर्शने तस्य कौतुकम् ॥ २१७ ॥
तस्या दिव्याकृतेः स्वस्या दर्शनेन दिवस्पते । परिप्रीणय मे चक्षुश्चकोरमिव चंद्रमाः ॥ २१८ ॥
त्वं पुमानुत्तमोसीति मातेऽभूत् प्रणयो मुधा । तदेकमंगावयवं दर्शयिष्यामि भूपते ॥ २१९ ॥

१ इन्द्र–चक्री नृप आगारी साधुसम्बधी इति पञ्चभेदाः । २ हरौ इन्द्रे । ३ एकगुरुत्वेन समान । ४ प्रणयः प्रार्थना ।

इत्युदीर्य शुनासीरो योग्यालंकारशालिनीम् । स्वांगुलीं दर्शयामास जगद्वेश्मैकदीपिकाम् ॥ २२० ॥
पार्वणेंदुमिवोदन्वान् विकसद्भासुरद्युतिम् । तां महेन्द्रांगुलीं दृष्ट्वा मुमुदे मेदिनीपतिः ॥ २२१ ॥
भगवंतं प्रणम्याथ राजानमनुमान्य च । शतमन्युस्तिरोधत्त संध्याभ्रमिव तत्क्षणात् ॥ २२२ ॥
स्वामिनं प्रणिपत्याथ चक्रवर्त्यपि शक्रवत् । कृत्यानि चिंतयंश्चित्ते विनीतां नगरीं ययौ ॥ २२३ ॥
शक्रांगुलीं न्यस्य रात्रौ भरतोऽष्टाहिकां व्यधात् । भक्तौ स्नेहे च सतां कर्त्तव्यं तुल्यमेव हि ॥ २२४ ॥
इंद्रस्तंभं समुत्तभ्य ततःप्रभृति सर्वतः । इंद्रोत्सवः समारब्धो लोकैरद्यापि वर्त्तते ॥ २२५ ॥
विजहार ततोऽन्यत्राष्टापदाद्भगवानपि । भव्याब्जबोधकृत्क्षेत्रात् क्षेत्रांतरमिवार्यमा ॥ २२६ ॥
भरतोऽथ समाहूय श्रावकानभ्यधादिदम् । गृहे मदीये भोक्तव्यं युष्माभिः प्रतिवासरम् ॥ २२७ ॥
कृष्यादि न विधातव्यं किंतु स्वाध्यायतत्परैः । अपूर्वज्ञानग्रहणं कुर्वाणैः स्थेयमन्वहम् ॥ २२८ ॥
भुक्त्वा च मेऽतिकगतैः पठनीयमिदं सदा । जितो भवान् वर्द्धते भीस्तस्मान्माहन माहन ॥ २२९ ॥
प्रतिपद्य तथा ते तु भुंजते स्म तदौकसि । तथा च तद्वचः पेठुः स्वाध्यायमिव तत्पराः ॥ २३० ॥
रतिमग्नो देव इव नृदेवोऽपि प्रमद्वरः । तच्छब्दाकर्णनादेव किंचिदेवं व्यचिंतयत् ॥ २३१ ॥
जितोऽस्मि केन हुं ज्ञातं कषायैर्वर्द्धते च भीः । कुतो मे तेभ्य एवेति मा हन्यां प्राणिनस्ततः ॥ २३२ ॥
एवं च स्मारयंत्येते नित्यमेव विवेकिनः । अहो मम प्रमादित्वमहो विषयलुब्धता ॥ २३३ ॥
औदासीन्यमहो धर्मेऽप्यहो संसाररागिता । अहो महापु[3]रुषतोचिताचारविपर्ययः ॥ २३४ ॥

---

१ शुनासीर इन्द्रः । २ इद विशेषण चन्द्राङ्गुल्योः पक्षे योज्यम् । ३ उत्तमपुरुषत्वोचिताचारवैपरीत्यम् ।

अनया चिंतया धर्मध्यानं प्रावर्त्तत क्षणम् । गंगाप्रवाहः क्षाराब्धाविव तस्मिन् प्रमादिनि ॥ २३५ ॥
भूयोपि भूपः शब्दादिष्विंद्रियार्थेष्वसज्यत । कर्मभोगफलं कोऽपि नान्यथा कर्तुमीश्वरः ॥ २३६ ॥
सूदाध्यक्षै[1]रथान्येद्युरेवं व्यज्ञपि भूपतिः । श्रावकोऽश्रावको वापि भूयस्त्वान्नोपलक्ष्यते ॥ २३७ ॥
आदिशद्भरतः सूदान् श्राद्धा यूयमपि स्थ यत् । परीक्षापूर्वकं देयमतःप्रभृति भोजनम् ॥ २३८ ॥
को भवान् श्रावकोऽहं तद्व्रतानि कति शंस नः । तानि नः श्रावकाणां स्युः किं त्वस्माकं सदापि हि॥२३९
अणुव्रतानि पंचाथ सप्त शिक्षाव्रतानि च । एवं परीक्षानिर्व्यूढास्तैस्तेऽदर्श्यंत भूपतेः ॥ २४० ॥
ज्ञानदर्शनचारित्रलिंगं रेखात्रयं ततः । वैकक्ष[2]मिव काकिण्या विदधे शुद्धिलक्षणम् ॥ २४१ ॥
अर्द्धवर्षेऽर्द्धवर्षे च परीक्षां चक्रिरे नवाः । श्रावकाः काकिणीरत्नेनालंभ्यन्त तथैव हि ॥ २४२ ॥
तद्वांछनाद्भोजनं ते लेभिरेऽथापठन्निदम् । जितो भवानित्याद्युच्चैर्माहनास्ते[3] ततोऽभवन् ॥ २४३ ॥
निजान्यपत्यरूपाणि साधुभ्यो ददिरे च ते । तन्मध्यात्स्वेच्छया कैश्चिद्विरक्तैर्व्रतमाददे ॥ २४४ ॥
परीषहाऽसहैः कैश्चित् श्रावकत्वमुपाददे । तथैव बुभुजे तैश्च काकिणीरत्नलांछितैः ॥ २४५ ॥
भूभुजा दत्तमेतेभ्यो लोकोपि श्रद्धया ददौ । पूजितैः पूजितो यस्मात्केन केन न पूज्यते ॥ २४६ ॥
अर्हत्स्तुतिमुनिश्राद्धसामाचारीपवित्रितान् । आर्यान्वेदान् व्यधाच्चक्री तेषां स्वाध्यायहेतवे ॥ २४७ ॥
क्रमेण माहनास्ते तु ब्राह्मणा इति विश्रुताः । काकिणीरत्नरेखास्तु प्रापुर्यज्ञोपवीतताम् ॥ २४८ ॥
इयं भरतराज्येऽभूत्स्थितिरर्कयशाः पुनः । स्वर्णयज्ञोपवीतानि चक्रे काकिण्यभावतः ॥ २४९ ॥

---

१ पाचकाधिपतिभिः । २ तिर्यक्कक्षावलम्बी हारभेदः । ३ माहना इदानीं ब्राह्मणनाम्ना प्रसिद्धिं प्राप्ताः ।

महायशःप्रभृतयः केचिद्रौप्याणि चक्रिरे । पट्टसूत्रमयान्यन्ये परे सूत्रमयानि तु ॥ २५० ॥ युग्मम्
भरतादादित्ययशास्ततश्चासीन्महायशाः । अतिबलो बलभद्रो बलवीर्यस्ततोऽपि च ॥ २५१ ॥
कीर्तिवीर्यो जलवीर्यो दंडवीर्यस्ततोऽष्टमः । इत्यष्टौ पुरुषान् यावदाचारोऽयं प्रवृत्तवान् ॥ २५२ ॥
एभिर्भूपैश्च बुभुजे भरतार्धं समंततः । भगवन्मुकुटः शक्रोपनीतो मूर्ध्न्यधारि च ॥ २५३ ॥
शेषैर्महाप्रमाणत्वान्न स वोढुमपार्यत । हस्तिभिर्हस्तिभारो हि वोढुं शक्येत नापरैः ॥ २५४ ॥
जज्ञे साधुविच्छेदोऽन्तर्नवमदशमार्हतोः[1] । एवं सप्तस्वंतरेषु जिनानामेष वृत्तवान् ॥ २५५ ॥
वेदाश्चार्हत्स्तुतियतिश्राद्धधर्ममयास्तदा । पश्चादनार्याः सुलसायाज्ञवल्क्यादिभिः कृताः ॥ २५६ ॥
इतश्च भरतस्तस्थौ दिवसानतिवाहयन् । श्राद्धदानैः कामकेल्या विनोदैरपरैरपि ॥ २५७ ॥
अवनिं पावयन्पादैर्[2]गगनं चंद्रमा इव । अन्येद्युर्भगवानागादष्टापदमहागिरिम् ॥ २५८ ॥
सद्यश्च तत्र समवसरणे निर्मिते सुरैः । आसांचक्रे जगन्नाथो विदधे धर्मदेशनाम् ॥ २५९ ॥
तथा स्थितो जगत्स्वामी समेत्यायुक्तपूरुषैः[3] । शशंसे भरतेशाय त्वरितैरनिलैरिव ॥ २६० ॥
पूर्वं प्रमाणं तेभ्योऽदाद्भरतः पारितोषिकम् । दिने दिने कल्पतरुर्ददानो न हि हीयते ॥ २६१ ॥
अष्टापदे च समवसृतं स्वामिनमेत्य सः । प्रदक्षिणीकृत्य नमस्कृत्य चक्रीति तुष्टुवे ॥ २६२ ॥
त्वत्प्रभावात्स्तवीमि त्वामप्राज्ञोपि जगत्पते । शशिनं पश्यतां दृष्टिर्मंदापि हि पटूयति[4] ॥ २६३ ॥
मोहांधकारनिर्मग्नजगदालोकदीपकम् । आकाशवदनंतं ते स्वामिन् जयति केवलम् ॥ २६४ ॥

१ सुविधिशीतलाख्यतीर्थकृतो. । २ पादैश्चरणैः, चन्द्रपक्षे पादैः किरणैः । ३ आयुक्तपूरुषैः नियुक्तपूरुषैः । ४ समर्था भवति ।

प्रमादनिद्रामग्नानां नाथ कार्येण मादृशाम् । एवं गतागतानि त्वं करोष्यर्क इवासकृत् ॥ २६५ ॥
जन्मलक्षार्जितं कर्म त्वदालोकाद्विलीयते । कालेन दृषदीभूतमप्याज्यं वह्निना द्रवेत् ॥ २६६ ॥
एकांतसुखमातोपि साध्वी च सुखदुःखमा । यत्र कल्पद्रुमेभ्यस्त्वं विशिष्टफलदो भव ॥ २६७ ॥
समस्तभुवनेशेदं भुवनं भूषितं त्वया । राज्ञा पुरीव ग्रामेभ्यो भुवनेभ्यः प्रकृष्यते ॥ २६८ ॥
पिता माता गुरुः स्वामी यत्सर्वेपि न कुर्वते । एकोऽप्यनेकीभूयेव त्वं हितं विदधासि तत् ॥ २६९ ॥
निशा निशाकरेणेव हंसेनेव महासरः । वदनं तिलकेनेव शोभते भुवनं त्वया ॥ २७० ॥
इति स्तुत्वा नमस्कृत्य भगवंतं यथाविधि । निषसाद यथास्थानं विनयी भरतेश्वरः ॥ २७१ ॥
आयोजनविसर्पिण्या सर्व[3]भाषानुयातया । भारत्या भगवान् विश्वोपकृत्यै देशनां व्यधात् ॥ २७२ ॥
देशनाविरतौ नत्वा स्वामिनं भरतेश्वरः । रोमांचितवपुर्बद्धांजलिरेवं व्यजिज्ञपत् ॥ २७३ ॥
नाथेह भरते यूयं यथा विश्वहितास्तथा । कत्यन्ये भाविनो धर्म[4]चक्रिणश्चक्रिणः कति ॥ २७४ ॥
तेषां च नगरं गोत्रं पितरावभिधायुषी । वर्णं मानांतरे दीक्षागती विज्ञापय प्रभो ॥ २७५ ॥
अथाचचक्षे भगवान् भरते भाविनोऽपरे । त्रयोविंशतिरर्हंत एकादश च चक्रिणः ॥ २७६ ॥
जिनौ च विंशद्वाविंशौ तत्र गोतमवंशजौ । काश्यपान्वयजास्त्वन्ये सर्वे निर्वाणगामिनः ॥ २७७ ॥
अयोध्यायां जितशत्रुविजयातनयोऽजितः । द्वासप्ततिपूर्वलक्षायुष्को निष्क[6]समद्युतिः ॥ २७८ ॥

१ प्रस्तरीभूत । २ आज्य घृतम् । ३ सर्वभाषानुगामिन्या । ४ धर्मचक्रिणस्तीर्थङ्कराः । ५ अभिधा नाम । ६ निष्कसमद्युतिः सुवर्णसमद्युतिः ।

पूर्वांगोनपूर्वलक्षपर्यायोऽसौ भविष्यति ॥ २७९ ॥
अर्द्धपंचमकोदंडशतान्युच्चुंगविग्रहः । पूर्वांगोनपूर्वलक्षपर्यायोऽसौ लक्षाः पंचाशदंतरम् ॥ २८० ॥
तथा मदीयनिर्वाणाजितनिर्वाणकालयोः । सागरोपमकोटीनां लक्षाः पंचाशदंतरम् ॥ २८१ ॥
श्रावस्त्यां जितारिसेनाङ्गः स्वर्णाभश्च संभवः । षष्टिपूर्वलक्षायुष्कश्चतुर्धन्वशतोच्छ्रयः ॥ २८२ ॥
चतुःपूर्वांगहीना च पूर्वलक्षाऽस्य तु व्रते । सागरोपमकोटीनां लक्षाणि त्रिंशदंतरम् ॥ २८३ ॥
विनीतापुर्यां संवरसिद्धार्थाजोऽभिनंदनः । पंचाशत्पूर्वलक्षायुः सार्द्धधन्वशतत्रयः ॥ २८४ ॥
स्वर्णाभः पूर्वलक्षाष्टपूर्वांगोनास्य तु व्रते । सागरोपमकोटीनां दशलक्षाणि चांतरम् ॥ २८५ ॥
तत्पुर्यां सुमतिर्मेघमंगलाङ्गः सुवर्णरुक् । चत्वारिंशत्पूर्वलक्षायुर्धनुस्त्रिशतीमितः ॥ २८६ ॥
द्वादशपूर्वांगहीना पूर्वलक्षास्य तु व्रते । सागरोपमकोटीनां नवलक्षाणि चांतरम् ॥ २८७ ॥
कौशांब्यां धरसुसीमासूनुः पद्मप्रभोऽरुणः । त्रिंशत्पूर्वलक्षायुष्कः सार्द्धधन्वशतद्वयः ॥ २८८ ॥
षोडशपूर्वांगन्यूना पूर्वलक्षास्य तु व्रते । अब्धिकोटिसहस्राणां नवतिः पुनरंतरम् ॥ २८९ ॥
वाराणस्यां तु प्रतिष्टपृथ्वीसूनुः सुवर्णरुक् । सुपार्श्वो विंशतिपूर्वलक्षायुर्द्विधनुः शतः ॥ २९० ॥
विंशत्यंगविहीनास्य पूर्वलक्षा व्रते पुनः । सागरोपमकोटीनां सहस्राणि नवांतरम् ॥ २९१ ॥
चंद्रानने महासेनलक्षणाङ्गः शशिप्रभः । दशपूर्वलक्षायुष्कः शुभ्रः सार्द्धधनुःशतः ॥ २९२ ॥
चतुर्विंशत्यंगहीना पूर्वलक्षास्य तु व्रते । सागरोपमकोटीनां शतानि नव चांतरम् ॥ २९३ ॥
काकंद्यां सुग्रीवरामातनयः सुविधिः सितः । पूर्वलक्षद्वयायुष्क एकधन्वशतोच्छ्रयः ॥

१ विग्रहः कायः । २ सवरः पिता सिद्धार्था माता ताभ्या जातः । ३ तदाख्ये नगरे ।

अष्टाविंशत्यंगहीना पूर्वलक्षास्य तु व्रते । सागरोपमकोटीनां नवतिः पुनरंतरम् ॥ २९४ ॥
शीतलो भद्दिलपुरे नंदादृढरथात्मजः । स्वर्णाभः पूर्वलक्षायुर्धनुर्नवतिमुच्छ्रितः ॥ २९५ ॥
अमुष्य तु व्रते पूर्वसहस्राः पंचविंशतिः । अंतरं तु सरित्नाथोपमानां कोटयो नव ॥ २९६ ॥
सिंहपुरे विष्णुराजविष्णोः सूनुः सुवर्णरुक् । श्रेयांसस्तु जिनोऽशीतिशरासनसमुन्नतिः ॥ २९७ ॥
वर्षाणां चतुरशीत्या लक्षैः प्रमितजीवितः । अमुष्य तु व्रते वर्षलक्षाणामेकविंशतिः ॥ २९८ ॥
षट्त्रिंशत्याब्दसहस्रैः षट्पष्ट्या वर्षलक्षकैः । तथार्णवशतेनोनार्णवकोटिर्जिनांतरम् ॥ २९९ ॥
चंपापुर्यां वासुपूज्यो वसुपूज्यजयात्मजः । द्वासप्तत्यब्दलक्षायुर्धनुःसप्ततिमुन्नतः ॥ ३०० ॥
रक्तोऽस्य चतुःपंचाशद्वर्षलक्षाणि तु व्रतम् । तथा सागरोपमानां चतुःपंचाशदंतरम् ॥ ३०१ ॥
कांपिल्ये[1] च कृतवर्मश्यामाभूर्विमलो जिनः । षष्टिवत्सरलक्षायुः षष्टिधन्वा सुवर्णरुक् ॥ ३०२ ॥
अमुष्य च पंचदशवर्षलक्षाणि तु व्रतम् । वासुपूज्यांततन्मोक्षांतरे च त्रिंशदर्णवाः ॥ ३०३ ॥
अयोध्यायां सिंहसेनसुयशाभूः सुवर्णरुक् । अनंतस्त्रिंशल्लक्षाब्दायुः पंचाशद्धनून्नतिः ॥ ३०४ ॥
सार्धानि वर्षलक्षाणि सप्त तस्य पुनर्व्रतम् । विमलमोक्षतन्मोक्षांतरे च नवसागराः ॥ ३०५ ॥
धर्मो रत्नपुरे भानुसुव्रताभूः सुवर्णरुक् । दशाब्दवर्षायुः पंचचत्वारिंशद्धनून्नतः ॥ ३०६ ॥
पर्यायस्तस्य वर्षाणां सार्धं लक्षद्वयं खलु । अनंतमोक्षतन्मोक्षांतरेऽर्णवचतुष्टयं ॥ ३०७ ॥
पुरे गजपुरे शांतिर्विश्वसेनाचिरासुतः । सुवर्णवर्णोऽब्दलक्षायुश्चत्वारिंशद्धनून्नतिः ॥ ३०८ ॥

१ काम्पिल्ये नगरे ।

पंचविंशतिरब्दानां सहस्राण्यस्य तु व्रते । अब्धित्रयं पल्यचतुर्भागत्रिकोनमंतरम् ॥ ३०९ ॥
कुंथुर्गजपुरे स्वर्णवर्णः शूरश्रियोः सुतः । पंचनवत्यब्दसहस्रायुः पल्यार्द्धकांतरः ॥ ३१० ॥
पंचत्रिंशद्धनुस्तुंगः पर्यायेऽस्य तु वत्सराः । त्रयोविंशतिसहस्राः सार्द्धसप्तशतानि च ॥ ३११ ॥
स्वर्णाभोऽरो[1] गजपुरे देवीसुदर्शनात्मजः । चतुरशीत्यब्दसहस्रायुस्त्रिंशद्धनून्नतिः ॥ ३१२ ॥
पर्याये तस्य वर्षाणां सहस्राण्येकविंशतिः । पल्यतुर्यांशोऽब्दकोटिसहस्रोनो जिनांतरं ॥ ३१३ ॥
मल्लिनाथो मिथिलायां कुंभप्रभावतीप्रसूः । पंचविंशतिधन्वाब्दकोटीसहस्रकांतरः ॥ ३१४ ॥
नीलोऽस्याब्दसहस्राणि पंचपंचाशदायुषि । एकवर्षशतोनानि पूर्वोक्ताब्दानि तु व्रते ॥ ३१५ ॥
पद्मासुमित्रसूराजगृहे कृष्णस्तु सुव्रतः । त्रिंशद्वर्षसहस्रायुर्धनुर्विंशतिमुन्नतः ॥ ३१६ ॥
सप्तवर्षसहस्राणि सार्द्धान्येतस्य तु व्रतम् । चतुःपंचाशदब्दानां लक्षाणि तु जिनांतरम् ॥ ३१७ ॥
मिथिलायां स्वर्णवर्णो वप्राविजयभूर्नमिः । दशवर्षसहस्रायुः पंचदशधनून्नतिः ॥ ३१८ ॥
समासहस्रद्वितयं सार्द्धमेतस्य तु व्रतम् । मोक्षांतरं नमिनेम्योर्वर्षलक्षाः षडेव हि ॥ ३१९ ॥
शिवासमुद्रविजयात्मज शौर्यपुरे शितिः[2] । नेमिर्दशधनुस्तुंगः समासहस्रजीवितः ॥ ३२० ॥
शतानि सप्तवर्षाणां प्रव्रज्यायाममुष्य तु । मुक्त्यंतरे नमिनेम्योर्वर्षलक्षाणि पंच तु ॥ ३२१ ॥
वामाश्वसेनभूः पार्श्वो वाराणस्यां विनीलरुक् । नवहस्तप्रमाणांगः शतवत्सरजीवितः ॥ ३२२ ॥
वर्षाणां सप्ततिस्तस्य दीक्षायामंतरे पुनः । सहस्राणि त्र्यशीतिः सार्द्धानि सप्तशतानि च ॥ ३२३ ॥

---

१ अराख्यस्तीर्थङ्करः । २ शितिः नीलवर्णः ।

कुंडग्रामे महावीरः सिद्धार्थत्रिशलासुतः । स्वर्णाभः सप्तहस्तांगो द्वासप्तत्यब्दजीवितः ॥ ३२४ ॥
द्वाचत्वारिंशदब्दानि प्रव्रज्यायाममुष्य च । पार्श्ववीरांतरालं तु सार्द्धं वर्षशतद्वयम् ॥ ३२५ ॥
काश्यपा[1]श्चक्रिणो हेमवर्णा अष्टैषु मोक्षगाः । त्वं मयीवा[2]जिते तत्रायोध्यायां सगरः[3] खलु ॥ ३२६ ॥
तुक् सुमित्रयशोमत्योः सार्द्धधन्वचतुःशतः । द्वासप्तत्या पूर्वलक्षैः स तु प्रमितजीवितः ॥ ३२७ ॥
श्रावस्त्यां मघवा भद्रासमुद्रविजयात्मजः । पंचाब्दलक्षायुः सार्द्धद्विचत्वारिंशधन्वकः ॥ ३२८ ॥
सनत्कुमारोऽब्दलक्षत्रयायुर्हस्तिनापुरे । प्राग्मानादेकधन्वोनः सहदेव्यश्वसेनभूः ॥ ३२९ ॥
धर्मशांत्यंतरे चैतौ तृतीयस्वर्गगामिनौ । शांतिः कुंथुररश्चैतेऽर्हंतश्चक्रभृतोऽपि च ॥ ३३० ॥
ताराकृतवीर्यसुतः सुभूमो हस्तिनापुरे । षष्टिवर्षसहस्रायुरष्टाविंशधनून्नतिः ॥ ३३१ ॥
अरमल्ल्यंतरे भावी सप्तमं नरकं गमी । वाराणस्यां पुनः पद्मो[4] ज्वालापद्मोत्तरात्मजः ॥ ३३२ ॥
त्रिंशद्वर्षसहस्रायुर्धनुर्विंशतिमुन्नितः । कांपिल्ये हरिषेणस्तु मेरामहाहरिप्रसूः ॥ ३३३ ॥
दशवर्षसहस्रायुः पंचदशधनून्नतिः । मुनिनम्योर्विहरतोर्द्वावप्येतौ भविष्यतः ॥ ३३४ ॥
वप्राविजयभूराजगृहे द्वादशकार्मुकः । जयस्[5]त्र्यब्दसहस्रायुर्नमिनेमिजिनांतरे ॥ ३३५ ॥
कांपील्ये ब्रह्मदत्तस्तु चुलनीब्रह्मनंदनः । सप्तवर्षशतायुष्कः सप्तधन्वसमुन्नतिः ॥ ३३६ ॥
श्रीनेमिनाथश्रीपार्श्वनाथतीर्थांतरे त्वसौ । रौद्रध्यानपरो गामी सप्तमीं नरकावनीम् ॥ ३३७ ॥

---

१ काश्यपाः कश्यपगोत्रिणः । २ अजिते तीर्थङ्करे । ३ सगरनामा चक्री । ४ पद्माख्यश्चक्री । ५ जयाख्यश्चक्री ।

तत्र प्रभुरपृष्टोऽपीत्याख्यच्चत्रयर्द्धविक्रमाः । त्रिखंडावनिभोक्तारो वासुदेवा नवासिताः ॥ ३३८ ॥
अष्टमः काश्यपकुलस्तेषु शेषास्तु गौतमाः । सापत्ना भ्रातरस्तेषां बलदेवाः सिता नव ॥ ३३९ ॥
त्रिपृष्टः केशवस्तत्र नगरे पोतनाह्वये । प्रजापतिमृगावत्योः सुतोऽशीतिधनून्नतिः ॥ ३४० ॥
महीं विहरमाणे तु श्रेयांसजिनपुंगवे । चतुरशीत्यब्दलक्षायुरंत्यनरकं गमी ॥ ३४१ ॥
द्वारावत्यां द्विपृष्टस्तु धनुःसप्ततिसुन्नतः । भुवं विहरमाणे तु वासुपूज्यजिनेश्वरे ॥ ३४२ ॥
द्वासप्ततिवर्षलक्षायुः पद्माब्रह्मनंदनः । गमिष्यति च सोऽवश्यं षष्टीं नरकमेदिनीम् ॥ ३४३ ॥
द्वारावत्यां स्वयंभूस्तु धनुःषष्टिसमुन्नतः । षष्टिवत्सरलक्षायुर्विमलस्वामिवंदकः ॥ ३४४ ॥
भद्रराजस्य पृथिवीदेव्याश्चैष तनूरुहः । गमिष्यति च पूर्णायुः षष्टिकां नरकावनीम् ॥ ३४५ ॥
तस्यामेव नगर्यां च पुरुषोत्तम आख्यया । पंचाशत्कार्मुकोत्तुंगः सोमसीतातनूरुहः ॥ ३४६ ॥
वर्त्तमाने जिनेऽनंते त्रिंशल्लक्षाब्दजीवितः । समाप्तायुरसौ षष्टीं नरकोर्वीं गमिष्यति ॥ ३४७ ॥
अश्वपुरे तु पुरुषसिंहो नाम्ना भविष्यति । धर्मनाथजिने पंचचत्वारिंशद्धनून्नतिः ॥ ३४८ ॥
शिवराजामृतासूनुर्वर्षलक्षाण्यसौ दश । आयुरनुपाल्य षष्टीं नरकोर्वीं गमिष्यति ॥ ३४९ ॥
चक्रपुर्यां तु पुरुषपुंडरीकोऽभिधानतः । अरमल्ल्यंतरे लक्ष्मीवतीमहाशिरःसुतः ॥ ३५० ॥
एकोनत्रिंशतं चापानयमुन्नतविग्रहः । पंचषष्टिसहस्राब्दायुः षष्ठं नरकं गमी ॥ ३५१ ॥

---

१ प्रभुः ऋषभः । २ असिताः कृष्णवर्णाः । ३ गौतमा गौतमकुलाः । ४ पोतनाख्ये पुरे । ५ द्वारावत्या द्वारिकाया । ६ तदाख्यस्य पितुः । ७ नाम्ना । ८ अरमल्लीनाथान्तरे । ९ एकोनत्रिंशद्धनून्नतकायः ।

दत्तो वाराणसीपुर्यां षड्विंशतिधनून्नतिः । जिनांतरे तु तत्रैव शेषवत्यग्निसिंहभूः ॥ ३५२ ॥
षट्पंचाशत्सहस्राणि वर्षाणामस्य जीवितम् । गमिष्यति च पूर्णायुः पंचमीं नरकावनीम् ॥ ३५३ ॥
नारायण इति ख्यातः पुरे राजगृहाह्वये । द्वादशाब्दसहस्रायुर्मुनिनम्यंतरे त्वसौ ॥ ३५४ ॥
कैकेयीदशरथभूर्धनुःषोडशकोन्नतिः । गमिष्यति च पूर्णायुस्तुरीयां नरकावनीम् ॥ ३५५ ॥
कृष्णस्तु मथुरापुर्यां देवकीवसुदेवभूः । वंदिता नेमिनाथस्य दशधन्वसमुच्छ्रयः ॥ ३५६ ॥
सहस्रमेकं वर्षाणामायुरस्य भविष्यति । ततो नरकमेदिन्यां तृतीयायां गमिष्यति ॥ ३५७ ॥
प्रथमो बलदेवस्तु तत्र भद्रासुतो बलः । पंचाशीतिवर्षलक्षाण्यायुरस्य भविष्यति ॥ ३५८ ॥
द्वितीयस्तु बलदेवो भावी विजय आख्यया । सुभद्राभूः पंचसप्तत्यब्दलक्षाणि जीविता ॥ ३५९ ॥
तृतीयस्तु बलदेवो भद्र इत्यभिधानतः । सुप्रभाभूः पंचषष्टिवर्षलक्षाणि जीविता ॥ ३६० ॥
चतुर्थस्तु बलदेवः सुप्रभो नामधेयतः । सौदर्शनेयोऽब्दपंचपंचाशल्लक्षजीवितः ॥ ३६१ ॥
पंचमो बलदेवस्तु भावी नाम्ना सुदर्शनः । सप्तदशवर्षलक्षजीवितो विजयासुतः ॥ ३६२ ॥
षष्ठो बलो वैजयंत्याः सूनुरानंद आख्यया । पंचाशीतिसहस्राणि वर्षाणामस्य जीवितम् ॥ ३६३ ॥
सप्तमो बलदेवस्तु नंदनो नामधेयतः । पंचषष्टिसहस्राब्दायुर्जयंतीसमुद्भवः ॥ ३६४ ॥
अष्टमस्तु बलदेवः पद्मोऽपराजितासुतः । पंचदशसहस्राणि वर्षाणामस्य जीवितं ॥ ३६५ ॥
नवमस्तु बलदेवो राम इत्यभिधानतः । द्वादशाब्दशतायुष्को रोहिणीतनुसंभवः ॥ ३६६ ॥

१ दत्ताख्यः । २ भद्राख्याया मातुः सुतः ।

तत्राष्टौ मोक्षगा रामो ब्रह्मकल्पं गमिष्यति । उत्सर्पिण्यां स भरते कृष्णतीर्थे तु सेत्स्यंति[1] ॥ ३६७ ॥
अश्वग्रीवस्तारकश्च मेरुको मधुरेव च । निशुंभबलिप्रह्लादलंकेशमगधेश्वराः ॥ ३६८ ॥
वासुदेवप्रतिमल्लाः[2] सर्वे चक्रप्रहारिणः । हनिष्यंति निजैश्चक्रैर्वासुदेवकरं गतैः ॥ ३६९ ॥ युग्मम् ।
श्रुत्वा तद्भरताधीशो भव्यसत्वैः समाकुलाम् । दृष्ट्वा च तां सभां हृष्टः पप्रच्छ स्वामिनं प्रभुः ॥ ३७० ॥
जगत्त्रय इवैकत्र सामस्त्येनापि तस्थुषि । तिर्यग्नरामरमये सदसि त्रिजगत्पतेः ॥ ३७१ ॥
अत्र किं कश्चिदप्यस्ति भगवन् भगवानिव । तीर्थं प्रवर्त्य भरतक्षेत्रं यः पावयिष्यति ॥ ३७२ ॥
युग्मम् ॥

शशंस भगवानेवं य एष तव नंदनः । मरीचिर्नामधेयेन परिव्राजक[3] आदिमः[4] ॥ ३७३ ॥
आर्त्तरौद्रध्यानहीनः सम्यक्त्वेन च शोभितः । ध्यायंश्चतुर्विधं धर्म्यं ध्यानं च रहसि स्थितः ॥ ३७४ ॥
दुकूलमिव पंकेन निःश्वासेनेव दर्पणः । कर्मणा मलिनोऽमुष्य जीवः संप्रति वर्त्तते ॥ ३७५ ॥
शुक्लध्यानाग्निसंयोगादग्निशौचमिवांशुकम् । जात्यं सुवर्णमिव च स क्रमाच्छुद्धिमेष्यति ॥ ३७६ ॥
इहैव भरतक्षेत्रे नगरे पोतनाभिधे । त्रिपृष्ठो नाम दाशार्हः प्रथमोऽसौ भविष्यति ॥ ३७७ ॥
क्रमात्प्रत्यक्विदेहेषु मूकायां पुरि चक्र्यसौ । तुकृधनंजयधारिण्योः प्रियमित्रो भविष्यति ॥ ३७८॥
चिरं च संसृत्य भवे भविष्यत्यत्र भारते । अयं नाम्ना महावीरश्चतुर्विंशस्तु तीर्थकृत् ॥ ३७९ ॥
सप्तभिः कुलकम् ॥

---

१ सिद्धिं गमिष्यति । २ प्रतिवासुदेवाः । ३ परिव्राजकः त्रिदण्डीक. । ४ आदिम. प्रथमः ।

इति श्रुत्वा स्वाम्यनुज्ञामादाय भरतेश्वरः। मरीचिं वंदितुं भक्त्या भगवंतमिवाभ्यगात् ॥ ३८० ॥
नाम्ना त्रिपृष्ठः प्रथमो दशार्हाणां भविष्यति। चक्रवर्त्ती विदेहेषु प्रियमित्राभिधश्च यत् ॥ ३८१ ॥
न तद्वंदे न ते वंदे पारिव्राज्यं[1] न जन्म च। किंतु वंदे चतुर्विंशो यत्त्वमर्हन् भविष्यति ॥ ३८२ ॥
इति ब्रुवाणः शिरसि बद्धांजलिपुटस्ततः। तं त्रिः प्रदक्षिणीकृत्य ववंदे भरतेश्वरः ॥ ३८३ ॥
त्रिभिर्विशेषकम् ॥

अथ नत्वा जगन्नाथं जगाम जगतीपतिः। अयोध्यां नगरीं नागराजो भोगवतीमिव[2] ॥ ३८४ ॥
मरीचिस्तद्गिरा हृष्यंस्त्रिः करास्फोटपूर्वकम्। जातप्रमोदोऽभ्यधिकं वक्तुमेवं प्रचक्रमे ॥ ३८५ ॥
यद्याद्यो वासुदेवानां विदेहेषु च चक्रभृत्। अंत्यो[3]ऽर्हन् भवितास्मीति पूर्णमेतावता मम ॥ ३८६ ॥
पितामहोऽर्हतामाद्यश्चक्रिणां च पिता मम। दशार्हाणामयं चेति श्रेष्ठं कुलमहो मम ॥ ३८७ ॥
त्रैलोक्यमेकतः सर्वमेकतश्च कुलं मम। एकतोऽन्यद् गजकुलं यथैरावण[4] एकतः ॥ ३८८ ॥
ग्रहेभ्य इव चंडांशु[5]रुडुभ्य[6] इव चंद्रमाः। सर्वेभ्योऽपि कुलेभ्यो मे कुलमेकं प्रकृष्यते ॥ ३८९ ॥
एवमात्मकुलमदं कुर्वाणेन मरीचिना। लूतयेव[7] पुटं नीचगोत्रं सूत्रितमात्मनः ॥ ३९० ॥
पुंडरीकप्रभृतिभिर्वृतो गणधरैरथ। नाथोऽप्यचालीत् [8]पुनन्विहारव्याजतो महीम् ॥ ३९१ ॥
कृपया पुत्रवद्धर्मकौशलं कोशलान्नयत्। तपस्यमुग्धान् मगधान् कुर्वन्परिचितानिव ॥ ३९२ ॥

---

१ परिव्राजकवेश। २ भोगवतीं नागपुरीं। ३ अन्त्यः अर्हन् चरमतीर्थङ्करः श्रीमहावीर। ४ इन्द्रहस्ती। ५ चण्डांशुः सूर्यः। ६ उडुभ्यः नक्षत्रेभ्यः। ७ लूता कीटविशेषः। ८ पवित्रीकुर्वन्।

काशीन् विकाशयन् पद्मकोशानिव दिवाकरः । आनंदयन् दशार्णांश्चार्णवानिव निशाकरः ॥ ३९३ ॥
देशनासुधया चेदींश्चेतयन्मूर्छितानिव । मालवैर्मालयन् धर्मधुरां वत्सतरैरिव ॥ ३९४ ॥
कुर्वन् पापविपन्नाशान्निर्जरानिव गौर्जरान् । सौराष्ट्रान् पटयन् वैद्य इव शत्रुंजयं ययौ ॥ ३९५ ॥
चतुर्भिः कुलकम् ॥
विदेशमिव वैताढ्यं क्वचिद्रौप्यशिलाचयैः । स्वर्णग्रावोच्चयैः क्वापि मेरोस्तटमिवाहृतम् ॥ ३९६ ॥
क्वचिच्च रत्नखानीभी रत्नाचलमिवापरम् । क्वाप्यौषधीभिर्हिमाद्रिमिव स्थानांतरस्थितम् ॥ ३९७ ॥
आमुक्तचोलकमिवासक्तसंसक्तवारिदैः । स्कंधावलंबिसंव्यानमिव निर्झरवारिभिः ॥ ३९८ ॥
शिरोऽभ्यर्णजुषा सूर्येणोत्किरीटमिवाहनि । नक्तं च चंदनरसतिलकांकमिवेंदुना ॥ ३९९ ॥
सहस्रमूर्धानमिव शृंगैर्गगनरोधिभिः । अनेकदोर्दंडमिव तुंगैस्तालमहीरुहैः ॥ ४०० ॥
नालिकेरीवनेषूच्चैः पाकपिंगासु लुंबिषु । निजापत्यभ्रमाद्वेगात्पतत्प्लवगसंकुलम् ॥ ४०१ ॥
चूतावचायसक्तानां सौराष्ट्रहरिणीदृशाम् । आकर्ण्यमानमधुरगीतिमुत्कीर्णकैर्मृगैः ॥ ४०२ ॥
उद्बुद्धसूचिव्याजेन संजातपलितैरिव । जरद्भिः केतकीवृक्षैरशून्याधित्यकाभुवम् ॥ ४०३ ॥
स्थाने स्थाने सिंदुवारैः श्रीखंडद्रवपांडुभिः । कृतसर्वांगमंगल्यपुंड्रावलिमिवोच्चकैः ॥ ४०४ ॥
शाखास्थितगोलांगूललांगूलजटिलैः कृतैः । चंचांडुमैरनुकृतप्लक्षन्यग्रोधपादपम् ॥ ४०५ ॥

१ काशीन् देशविशेषान् । २ दशार्णान् तदाख्यदेशीयान् । ३ चेदीन् तदाख्यदेशीयान् । ४ निर्जरान् देवान् । ५ लुम्बिषु फलगुच्छेषु । ६ आम्रावचयनासक्ताना । ७ अशून्योर्द्ध्वभूमिं । ८ वृक्षविशेषैः । ९ गोलागूलाः कपयः । १० आम्लवृक्षैः ।

अद्भुतस्वपरी[1]णाहसंपदामुदितैरिव । नित्यं कंटकितफलैः पनसैरुपशोभितम् ॥ ४०६ ॥
श्लेष्मातकैरमा[2]रात्रितमःसब्रह्मचारिभिः । अंजनाचलचूलाभिराहृताभिरिवांतिकम् ॥ ४०७ ॥
किंशुकैः शुकचंचूवदारक्तकुसुमर्द्धिभिः । शोभमानं महा[3]नागं कुंकु[4]मस्थासकैरिव ॥ ४०८ ॥
क्वापि द्राक्षाभवं क्वापि खार्जूरं क्वापि तालजम् । मध्वापिबद्भिराबद्धगोष्ठीकं शबरीजनैः ॥ ४०९ ॥
अभेद्यैरर्ककिरणेषूणामस्खलतामपि । सन्नाहमिव बिभ्राणं तांबूलीनवमंरूपैः ॥ ४१० ॥
आर्द्रदूर्वांकुरास्वादमुदितैर्मृगमंडलैः । आ[5]बध्यमानरोमंथं महाविटपिनां तले ॥ ४११ ॥
सहकारफलास्वादमग्नचंचुपुटैश्चिरम् । शुकैर्निरंतरैर्जात्यवैडूर्यैरिव मंडितम् ॥ ४१२ ॥
केतकीचंपकाशोककदंबबकुलोद्भवैः । परागैः पवनोद्भूतै रजस्वलशिलातलम् ॥ ४१३ ॥
पांथसार्थास्फाल्यमाननालिकेरीफलांभसा । परितः पंकिलीभूतोप[6]त्यकातटभूतलम् ॥ ४१४ ॥
भद्रशालप्रभृतीनां मध्याद्वैशा[7]ल्यशालिना । वनेनैकतमेनेव तरुखंडेन मंडितम् ॥ ४१५ ॥
पंचाशद्योजनं मूले शिखरे दशयोजनम् । तमष्टयो[8]जनोत्सेधमारुरोह गिरिं प्रभुः ॥ ४१६ ॥
एकविंशत्या कुलकम् ॥
तत्र सद्योऽपि समवसरणे सुरनिर्मिते । सर्वी[9]यो भगवानासांचक्रे चक्रे च देशनाम् ॥ ४१७ ॥
गंभीरया गिरा भर्तुर्विदधानस्य देशनाम् । अनुवादेव स गिरिर्गह्वरोत्थैः प्रतिस्वनैः ॥ ४१८ ॥

---

१ परिणाहो विशालता । २ अमावास्यारात्रितमःसमानैः । ३ महागज । ४ कुकुमतिलकैः । ५ आबध्यमानचर्वितचर्वण । ६ उपत्यका आसन्नभूमिः । ७ विशालताशोभिना । ८ अष्टयोजनोन्नति । ९ सर्वहितकारी ।

वृष्टेरिव पयोवाहः प्रावृषि त्रिजगत्पतिः । गतायामथ पौरुष्यां व्यरंसी[1]द्देशनाविधेः ॥ ४१९ ॥
उत्थाय च ततः स्थानान्मध्यप्राकारमंडले । देवच्छंदे देवदेवो न्यषीदद्देवनिर्मिते ॥ ४२० ॥
ततश्च स्वामिनः पादपीठे गणधराग्रणीः । श्रीपुंडरीको न्यषदत्सम्रा[2]जो युवराडिव ॥ ४२१ ॥
तथैव हि निषेदुष्यां सत्रायां गणभृद्वरः । भगवल्लीलया धर्मदेशनां विदधेतराम् ॥ ४२२ ॥
सोऽपि द्वितीयपौरुष्यां पारयामास देशनाम् । अवश्या[3]यसुधासेकं समीरण इव प्र[4]गे ॥ ४२३ ॥
एवं स[5]त्त्वोपकाराय कुर्वाणो धर्मदेशनाम् । कंचित्कालं तत्र तस्थावष्टापद इव प्रभुः ॥ ४२४ ॥
अन्यतश्च प्रति[6]ष्ठासुरपरेद्युर्जगद्गुरुः । गणभृत्पुंडरीकं तं पुंडरीकं समादिशत् ॥ ४२५ ॥
महामुने प्रयास्यामो विहर्तुं वयमन्यतः । गिरौ तिष्ठ त्वमत्रैव मुनिकोटिभिरावृतः ॥ ४२६ ॥
अत्र क्षेत्रानुभावेन भवतोऽचिरकालतः । ज्ञानं सपरिवारस्योत्पत्स्यते केवलं खलु ॥ ४२७ ॥
इहैव शैले शैलेशीध्यानमासेदुषस्तव । परिवारसमेतस्याचिरान्मोक्षो भविष्यति ॥ ४२८ ॥
तथेति स्वामिनो वाचं प्रतिपद्य प्रणम्य च । तत्रैव सोऽस्थाद्गणभृत्सहैव गणिकोटिभिः ॥ ४२९ ॥
तीरगर्तेषु रत्नौघमुद्वेल इव वारिधिः । मुक्त्वा तं तत्र नाथोऽगादन्यतः सपरिच्छदः ॥ ४३० ॥
पुंडरीकः स्थितस्तत्र पर्वते मुनिभिः समम् । उदयाद्रितटे सार्द्धमृ[7]क्षैरिव निशाकरः ॥ ४३१ ॥
ततः परमसंवेगात्प्रभोर्मधुरया गिरा । पुंडरीको गणधरः श्रमणानित्यभाषत ॥ ४३२ ॥

---

१ विराम प्राप्तवान् । २ सम्राजः मण्डलेश्वरस्य । ३ हिमामृतसिञ्चन । ४ प्रगे प्रातःकाले । ५ प्राण्युपकाराय । ६ प्रस्थातुमिच्छु. । ७ ऋक्षैर्नक्षत्रैः ।

गिरिः क्षेत्रप्रभावेण सोऽयं सिद्धिनिबंधनम् । जिगीषूणां दुर्गमिव सीमांतावनिसाधकम् ॥ ४३३ ॥
कार्या संलेखना मुक्तेः साधनांतरमप्यहो । भवति द्विविधा सा तु द्रव्यभावविशेषतः ॥ ४३४ ॥
सर्वोन्मादमहारोगनिदानानां[1] समंततः । शोषणं सर्वसाधूनां द्रव्यसंलेखना मता ॥ ४३५ ॥
यो रागद्वेषमोहानां कषायाणां च सर्वतः । नैसर्गिकद्विषां[2] छेदो भावसंलेखना तु सा ॥ ४३६ ॥
इत्युदित्वा पुंडरीकः समं श्रमणकोटिभिः । सर्वानालोचयामासातीचारान् सूक्ष्मबादरान् ॥ ४३७ ॥
महाव्रतारोपणं च भूयश्चक्रेऽतिशुद्धये । क्षौमस्य[3] क्षालितं द्विस्त्रिर्ह्यतिनैर्मल्यकारणम् ॥ ४३८ ॥
जीवाः क्षाम्यंतु सर्वे मे तेषां च क्षांतवानहम् । मैत्री मे सर्वभूतेषु वैरं मम न केनचित् ॥ ४३९ ॥
इत्युक्त्वा भवचरिम निराकारं सुदुष्करम् । प्रतिपेदे सोऽनशनं समस्तश्रमणैः समम् ॥ ४४० ॥
क्षपकश्रेणिमारूढः स्याद्युद्यन्नभितोऽपि हि । घातीनि कर्माणि तस्यौजस्विनो जीर्णरज्जुवत्[4] ॥ ४४१ ॥
साधूनां कोटिसंख्यानां तेषामपि हि तुत्रुटुः । सद्यो घातीनि कर्माणि सर्वसाधारणं तपः ॥ ४४२ ॥
मासांते चैत्रराकायां पुंडरीकस्य केवलम् । ज्ञानं बभूव प्रथमं पश्चात्तेषां महात्मनाम् ॥ ४४३ ॥
शुक्लध्यानस्थितास्तूर्ये निर्योगे[5] ते च योगिनः । प्रक्षीणाशेषकर्माणो निर्वाणपदवीं ययुः ॥ ४४४ ॥
समागत्य दिवो देवा मरुदेव्या इव क्षणात् । भक्त्या विदधिरे तेषां निर्वाणगमनोत्सवम् ॥ ४४५ ॥
भगवानृषभस्वामी प्रथमस्तीर्थकृद्यथा । तथाभूत्प्रथमं तीर्थं शत्रुंजयगिरिस्तदा ॥ ४४६ ॥

१ सर्वोन्मादमहारोगमूलकारणाना । २ स्वाभाविकशत्रूणा । ३ क्षौमस्य दुकूलस्य । ४ " जीर्णपर्णवत् " इत्यपि पाठ, क्वचित् दृश्यते । ५ निर्योगे पादे ।

तस्थिवांसं तथा विश्वनाथं पर्वतपालकाः । आशु विज्ञापयामासुर्गत्वा भरतचक्रिणे ॥ ४६२ ॥
प्रभोश्चतुर्विधाहारप्रत्याख्यानं निशम्य सः । शोकेन शंकुनेवांतः प्रविष्टेन व्यबाध्यत ॥ ४६३ ॥
ततोऽकृशेन संस्पृष्टः सद्यः शोककृशानुना । तरुः सिमसिमाबिंदूनिवाश्रूणि मुमोच सः ॥ ४६४ ॥
सांतःपुरपरीवारो दुर्वारासुखपीडितः । प्रतस्थे पादचारेण प्रत्यष्टापदमार्पभिः ॥ ४६५ ॥
नाजीगणत्कर्करान् स कर्कशानपि पादयोः । वेद्यते वेदना नैव हर्षेणेव शुचापि यत् ॥ ४६६ ॥
अक्षरन् रक्तधाराश्च पदोः कर्करदूनयोः । आसीच्चालक्तकांकेव तस्यांघ्रिन्यासपद्धतिः ॥ ४६७ ॥
अवाजगणदुर्वीशो जनान्यानोपयायिनः । आरोहणक्षणेनापि माभूद्विघ्नो गतेरिति ॥ ४६८ ॥
आतपत्रे शिरःस्थेऽपि तप्ततप्तो जगाम सः । न तापो मानसो जातु सुधावृष्ट्यापि शाम्यति ॥ ४६९ ॥
शुंग्विहस्तो हस्तदातृनपहस्तयते स्म सः । मार्गे विलगतः शाखिशाखाप्रांतानिवोच्चकैः ॥ ४७० ॥
अग्रेसरान्वेत्रधरानपि पश्चाच्चकार सः । रयार्त्तरीव तीरद्रून् सरिदायामगामिनी ॥ ४७१ ॥
पदे पदे स्खलंतीश्च वेगाच्चामरधारिणीः । चक्री प्रतीक्षांचक्रे न चित्तवत्क्रतुमुत्सुकः ॥ ४७२ ॥
उच्छल्योच्छल्य वेगेनोरस्थलास्फालनैर्मुहुः । विशीर्णमपि नाज्ञासीन्मुक्ताहारं महीपतिः ॥ ४७३ ॥
प्रभौ गतमनस्कत्वात्पार्श्वस्थानप्यजूहवत् । भूयः प्रष्टुं स्वामिवार्त्तां वेत्रिणा गिरिपालकान् ॥ ४७४ ॥
नापश्यत्किंचिदप्यन्यन्नाशृणोत्कस्यचिद्वचः । दध्यौ स प्रभुमेवैकं ध्यानस्थ इव योगवित् ॥ ४७५ ॥
लघूकुर्वन्निवाध्वानं रंहसा भरतेश्वरः । समीरण इव प्राप क्षणेनाष्टापदाचलम् ॥ ४७६ ॥

१ शङ्कुना कीलेन । २ महता । ३ शोकाग्निना । ४ दुर्वारदुःखपीडित. । ५ कठोरान् । ६ अतितप्तः । ७ शोकेन विह्वलः । ८ तरी नाविका ।

परिश्रममजानानो जनवत्पादचार्यपि । अध्यारुरोह भरतस्ततोऽष्टापदपर्वतम् ॥ ४७७ ॥
ईक्षांचक्रे चक्रवर्त्ती शोकहर्षसमाकुलः । तत्र च त्रिजगन्नाथं पर्यंकासनसंस्थितम् ॥ ४७८ ॥
तत्र प्रदक्षिणीकृत्य वंदित्वा च जगत्पतिम् । देहच्छायेव पार्श्वस्थः समुपास्ते स्म चक्रभृत् ॥ ४७९ ॥
इत्थं स्थिते प्रभावे तेऽप्यस्मासु कथमासते । इति हेतोरिवेंद्राणामासनानि चकंपिरे ॥ ४८० ॥
अवधिज्ञानतो ज्ञात्वासनकंपनकारणम् । इंद्रा जिनेंद्रमभ्येयुश्चतुःषष्टिरपि द्रुतम् ॥ ४८१ ॥
तेऽपि प्रदक्षिणीकृत्य जगन्नाथं प्रणम्य च । विषण्णाश्च निषण्णाश्च तस्थुरालिखिता इव ॥ ४८२ ॥
तथास्यामवसर्पिण्यां तृतीयस्यारकस्य तु । पक्षेष्वेकोननवतावविशिष्टेषु सत्सु च ॥ ४८३ ॥
माघाभिधानमासस्य कृष्णत्रयोदशीतिथौ । पूर्वाह्णेऽभीचि नक्षत्रे शशियोगमुपागते ॥ ४८४ ॥
तथा निषण्णः पर्यंकासने स्थित्वा च बादरे । काययोगे बादरौ वाक्चित्तयोगौ रुरोध च ॥ ४८५ ॥
सूक्ष्मेण काययोगेन काययोगं च बादरम् । रुद्ध्वा रुरोध सूक्ष्मौ च योगौ वाक्चित्तलक्षणौ ॥ ४८६ ॥
इति सूक्ष्मक्रियं नाम शुक्लध्यानं तृतीयकम् । अस्तसूक्ष्मतनूयोगं[1] क्रमात्प्रभुरसाधयत् ॥ ४८७ ॥
ततश्च ध्यानमुत्सन्नक्रियं नाम तुरीयकम् । पंचह्रस्वाक्षरोच्चारमितकालमशिश्रियत्[2] ॥ ४८८ ॥
सर्वदुःखपरित्यक्तः केवलज्ञानदर्शनी । क्षीणकर्मा निष्ठितार्थोऽनंतवीर्यसुखर्द्धिकः ॥ ४८९ ॥
बंधाभावादूर्ध्वगतिरेरंडफलबीजवत् । प्रभुः स्वभावादृजुना पथा लोकाग्रमासदत् ॥ ४९० ॥

अष्टभिः कुलकम् ॥

१ अस्तसूक्ष्मशरीरयोग । २ पञ्चह्रस्वाक्षरोच्चारे यावान् कालो जायते तावत्कालमित काल ।

प्रपन्नानशनास्तेऽपि सहसा व्रतिनां दश । क्षपकश्रेणिमारूढाः सर्वेऽप्युत्पन्नकेवलाः ॥ ४९१ ॥
मनोवचनकायानां योगं रुद्ध्वा च सर्वतः । क्षणादासादयामासुः स्वामिवत्परमं पदं ॥४९२॥ युग्मम् ॥
स्वामिनिर्वाणकल्याणान्निर्वाणो दुःखपावकः । अदृष्टसुखलेशानां नारकाणामपि क्षणम् ॥ ४९३ ॥
महाशोकसमाक्रांतश्चक्रवर्त्ती तु तत्क्षणम् । पपात मूर्छितः पृथ्व्यां वज्राहत इवाचलः ॥ ४९४ ॥
महत्यप्यागते दुःखे दुःखशैथिल्यकारणम् । विदांचकार रुदितं न कश्चिदपि यत्तदा ॥ ४९५ ॥
दुःखशैथिल्यहेतुं तच्चक्रिणो ज्ञापयन् स्वयम् । शक्रश्चकार रुदितं महापूत्कारपूर्वकम् ॥ ४९६ ॥
अनुसंक्रंदनं चक्रे क्रंदनं त्रिदशैरपि । समा हि समदुःखानां चेष्टा भवति देहिनाम् ॥ ४९७ ॥
तेषां च रुदितं श्रुत्वा संज्ञामासाद्य भर्यपि । उच्चैःस्वरेण चक्रंद ब्रह्मांडं स्फोटयन्निव ॥ ४९८ ॥
रुदितेनास्फुटद्राज्ञः शोकग्रंथिर्महानपि । पालीबंधो महास्रोतोरंहसेव महीयसा ॥ ४९९ ॥
सुरासुरमनुष्याणां रुदितैरुदितैस्ततः । त्रैलोक्यकरुणारस एकछत्र इवाभवत् ॥ ५०० ॥
ततः प्रभृति लोकेऽपि देहिनां शोकसंभवे । रोदनाध्वा प्रववृते शोकशल्य[3]विशल्यकः ॥ ५०१ ॥
नैसर्गिकमपि त्यक्त्वा धैर्यं भरतभूपतिः । दुःखितो विललापैवं तिरश्चोपि हि दुःखयन् ॥ ५०२ ॥
हा तात हा जगद्बंधो हा कृपारससागर । अज्ञानिव भवारण्ये त्यक्तवानसि नः कथम् ॥ ५०३ ॥
अम्लानकेवलज्ञानप्रकाशेन विना त्वया । तमसीव कृते दीपं स्थास्यामोऽत्र कथं भवे ॥ ५०४ ॥
छद्मस्थस्यैव ते मौनं किमेतत्परमेश्वर । कुरुष्व देशनां नानुगृह्णासि किममुं जनम् ॥ ५०५ ॥

---

१ महाप्रवाहवेगेन । २ रोदनमार्गः । ३ शोक एव शल्य तस्य विशल्यकः विशल्यकारकः ।

लोकाग्रमथवायासीर्भगवान् भाषसे न यत् । आ भाषंते दुःखितं मां तेऽपि मद्बंधवो न किम् ॥ ५०६ ॥
हुं ज्ञातमथवा ते हि सदा स्वाम्यनुगामिनः । स्वामिनोऽननुगो नास्ति मत्कुले मां विनापरः ॥ ५०७ ॥
ततो जगत्त्रयत्राता बाहुबल्यादयोऽनुजाः । स्वसारौ ब्राह्मीसुंदर्यौ पुंडरीकादयः सुताः ॥ ५०८ ॥
श्रेयांसाद्याश्च न[1]सारो हत्वा कर्मद्विषो[2]ऽखिलान् । ययुर्लोकाग्रमद्यापि जीवामि प्रियजीवितः ॥५०९॥युग्मं॥
शोकाज्जीवितनिर्विण्णं मुमूर्षु[3]मिव चक्रिणम् । दृष्ट्वा बोधयितुमिति प्रारेभे पाकशासनः[4] ॥ ५१० ॥
भरतेशमहासत्वस्वाम्यसौ तावदावयोः । संसारांभोधिमतरत्तारयामास चापरान् ॥ ५११ ॥
एतत्कृतेन तीर्थेन तीर्थेनेव[5] महानदीम् । उत्तरिष्यंति संसारं चिरं संसारिणोऽपरे ॥ ५१२ ॥
कृतकृत्यः स्वयं ह्येष भगवानपरानपि । कृतकृत्यान् जनान् कर्त्तुं पूर्ववल्लक्षमवास्थितः ॥ ५१३ ॥
अनुगृह्याखिलं लोकं स्थानं तदपुनर्भवं[6] । आसेदुषो जगद्भर्त्तुः राजन् किं नाम शोचसि ॥ ५१४ ॥
प्रेत्य[7] यो योनिलक्षेषु महादुःखैकवेश्मसु । अनेकशः संचरति परासुः[8] स हि शोच्यते ॥ ५१५ ॥
तत्किं न लज्जसे शोचन् प्रभावन्यजनेष्विव । शोचितुः शोचनीयस्य चोभयोरपि नोचितम् ॥ ५१६ ॥
एकदापि हि योऽश्रौषीत्स्वामिनो धर्मदेशनाम् । न सोऽपि शोकहर्षाभ्यां जीयते किं पुनर्भवान् ॥५१७॥
महांभोधेरिव क्षोभः कंपो मेरुगिरेरिव । उद्वर्त्तनमिवावन्याः कुलिशस्येव कुंठता ॥ ५१८ ॥
पीयूषस्येव वैरस्य[9]मनुष्णांशो[10]रिवोष्णता । असंभाव्यं महीनाथ तवेदं परिदेवनम्[11] ॥ ५१९ ॥ युग्मम् ॥

१ नसारः पौत्रा । २ कर्मशत्रून् । ३ मर्त्तुमिच्छु । ४ इन्द्रः । ५ जलावतारेण । ६ अपुनर्भव मोक्षस्थान । ७ प्रेत्य मृत्वा । ८ मृतः । ९ वैरस्य रसराहित्यं । १० चन्द्रस्य । ११ परिदेवनं विलापः ।

धीरो भव धराधीश विद्ध्यात्मानं यदीशितुः । जगत्त्रयैकधीरस्य तनयस्तस्य नन्वसि ॥ ५२० ॥
गोत्रवृद्धेनेव वृद्धश्रवसैवं प्रबोधितः । आललंबे नृपो धैर्यं साहजं शैत्यमंबुवत् ॥ ५२१ ॥
अथ स्वाम्यंगसंस्कारोपस्काराहरणे द्रुतम् । आदिदेश शुनासीरस्त्रिदशानान्नियोगिकान् ॥ ५२२ ॥
ततः संक्रंदनादेशान्नंदनोद्यानतः क्षणात् । गोशीर्षचंदनैधांसि समानिन्युर्दिवौकसः ॥ ५२३ ॥
इंद्रादेशादथैंद्र्यां ते स्वामिदेहस्य हेतवे । वृत्तामारचयामासुश्चितां गोशीर्षचंदनैः ॥ ५२४ ॥
कृते तथा महर्षीणामिक्ष्वाकुकुलजन्मिनाम् । दिशि न्यधुर्दक्षिणस्यां त्र्यस्राकारां चितां सुराः ॥ ५२५ ॥
अन्येषामनगाराणां कृते च त्रिदिवौकसः । चतुरस्रां चितां चक्रुरपरस्यां पुनर्दिशि ॥ ५२६ ॥
अथ क्षीरोदपाथोधेः पुष्करावर्त्तकैरिव । देवैरानाययामास द्रुतं पाथांसि वासवः ॥ ५२७ ॥
तेन च स्नपयामास पयसा भगवत्तनूम् । गोशीर्षचंदनरसैर्विलिलेप च वज्रभृत् ॥ ५२८ ॥
वासवो वासयामास वाससा हंसलक्ष्मणा । ततस्तं देवदूष्येण शरीरं परमेशितुः ॥ ५२९ ॥
सर्वतो भूषयामास दिव्यैर्माणिक्यभूषणैः । परमेष्ठिशरीरं स त्रिविष्टपसदग्रणीः ॥ ५३० ॥
अन्ये तु देवा अन्येषां मुनीनामपि तत्क्षणात् । इंद्रवद्विदधुर्भक्त्या तत्सर्वं स्नपनादिकम् ॥ ५३१ ॥
जगत्त्रय्या रत्नसारैः पृथक् पृथगिवाहृतैः । सहस्रवाह्याः शिबिकास्तिस्रश्चक्रुर्दिवौकसः ॥ ५३२ ॥
प्रणम्य चरणौ भर्तुर्वपुश्चारोप्य मूर्द्धनि । शिबिकायां निचिक्षेप स्वयमेव पुरंदरः ॥ ५३३ ॥
वपुंषीक्ष्वाकुवंश्यानामपरस्यां दिवौकसः । शिबिकायां शिवपथातिथीनां परिचिक्षिपुः ॥ ५३४ ॥

---

१ इन्द्रेण । २ इन्द्रादेशात् । ३ ऐन्द्र्या पूर्वदिशि । ४ पाथांसि जलानि । ५ हंसचिह्नेन । ६ इन्द्रः । ७ मोक्षमार्गातिथीनां ।

शिबिकायां तृतीयस्यामन्येषामनगारिणाम् । निदधुर्विबुधाः कायान्निजेष्वारोप्य मूर्द्धसु ॥ ५३५ ॥
अथ ता[1] स्वामिशिबिकामुद्दधार स्वयं हरिः । मुनीनामपरेषां तु शिबिके अपरे सुराः ॥ ५३६ ॥
अप्सरःसु ददानासु तालरासकमेकतः । कुर्वाणासु च संगीतं मधुरध्वानमन्यतः ॥ ५३७ ॥
पुरःपुरो धूपघटीर्धारयत्सु सुपर्वसु[2] । धूपधूमच्छलाद्बाष्पं वमंतीरिव शोकतः ॥ ५३८ ॥
क्षिपत्सु पुष्पदामानि शिबिकोपरि केषुचित् । शेषाहेतोश्च तान्येवोपददानेषु केषुचित् ॥ ५३९ ॥
देवदूष्यैस्तोरणानि पुरः कुर्वत्सु केषुचित् । ददत्सु केषुचिद्यक्षकर्दमैः सेकमग्रतः ॥ ५४० ॥
केषुचिद्विलुठत्स्वग्रे यंत्रभ्रष्टाश्मगोलवत् । धावत्सु पृष्ठतोऽन्येषु मोहचूर्णाहतेष्विव ॥ ५४१ ॥
उच्चैःशब्दायमानेषु नाथनाथेति केषुचित् । मंदभाग्या हताः स्मः स्वमिति निंदत्सु केषुचित् ॥ ५४२ ॥
शिक्षां नो देहि नाथेति मुहुर्नाथत्सु[3] केषुचित् । को धर्मसंशयं छेत्स्यत्येवं जल्पत्सु केषुचित् ॥ ५४३ ॥
वयं यामोऽधवत्केति सानुशय्येषु केषुचित् । ददातु भूर्नो विवरमित्याकांक्षत्सु केषुचित् ॥ ५४४ ॥
वाद्यमानेषु तूर्येषु तां स्वामिशिबिकां हरिः । उपचित्यं निनायान्ये निन्युश्च शिबिके सुराः ॥ ५४५ ॥
नवभिः कुलकम् ॥
प्राचीनबर्हिः[4] प्राचीनचितायां स्वामिनस्तनुम् । शनकैः स्थापयामास स्वपुत्र इव कृत्यवित् ॥ ५४६ ॥
चितायां दाक्षिणात्यायामिक्ष्वाकुकुलजन्मनाम् । वपूंषि स्थापयंति स्म सनाभय[5] इवामराः ॥ ५४७ ॥
अन्येषामनगाराणां शरीराण्यपरे सुराः । प्रतीचीनचितायां तु समीचीनविदो न्यधुः ॥ ५४८ ॥

---

१ साधूना । २ सुपर्वसु देवेषु । ३ नाथत्सु याचमानेषु । ४ प्राचीनबर्हि इन्द्रः । ५ सनाभय. सहोदरा' ।

अत्र गोत्रभिदादेशान्नाकिनोऽग्निकुमारिकाः । चितासु तासु तत्कालमग्निकायान्विचक्रिरे ॥ ५४९ ॥
शक्राज्ञया विचक्रुश्च वायून्वायुकुमारकाः । अग्नितो ज्वालयामासुर्वह्निमह्नाय[1] ते ततः ॥ ५५० ॥
चितास्विन्द्राज्ञया देवाः कर्पूरादीनि भारशः । निदधुः कुंभशश्चापि सर्पींषि[2] च मधूनि च ॥ ५५१ ॥
मुक्त्वास्थि धातवो यावद्दग्धास्तावच्चितानलम् । व्यधापयन् सुराः क्षीरांभोभिर्मेघकुमारकाः ॥ ५५२ ॥
प्रतिमावत्पूजयितुं स्वविमाने पुरंदरः । अग्रहीदुपरितनीं दंष्ट्रां वामेतरां प्रभोः ॥ ५५३ ॥
ईशानोप्युपरितनीं तद्दंष्ट्रां दक्षिणेतराम् । अधस्तनीं दक्षिणां च चमरेन्द्र उपाददे ॥ ५५४ ॥
बलिर्वामामधोदंष्ट्रां जग्राहान्ये तु वासवाः । शेषदंतान्नाकिनोऽन्ये जगृहुः कीकसानि[3] तु ॥ ५५५ ॥
मार्गतः श्रावका देवैर्दत्तकुंडत्रयाग्नयः । ततः प्रभृत्यभूवंस्ते ब्राह्मणा अग्निहोत्रिणः ॥ ५५६ ॥
ते हि स्वामिचितावह्निं गृहे नित्यमपूजयन् । रक्षंति स्म च निर्वातं लक्षदीपमिवेश्वराः ॥ ५५७ ॥
इक्ष्वाकुवंश्यशेषानगाराणां ते चितानलौ । निर्वाणौ जीवयंति स्म स्वामिचित्याकृशानुना[4] ॥ ५५८ ॥
इक्ष्वाकूणां महर्षीणामपि चित्याकृशानुना । अन्यानगारिचित्याग्निं ते निर्वाणमबोधयन् ॥ ५५९ ॥
अन्यानगारिचित्याग्निं चित्याग्न्योरन्ययोः पुनः । न हि संक्रमयंति स्म द्विजेष्वद्याप्यसौ विधिः ॥ ५६० ॥
केचित्तु लब्धभस्मानो भक्त्या भस्म ववंदिरे । ततः प्रभृति जाताश्च तापसा भस्मभूषणाः ॥ ५६१ ॥
चितास्थानत्रये देवा रत्नस्तूपत्रयं ततः । अष्टापदगिरेर्नव्यं शृंगत्रयमिव व्यधुः ॥ ५६२ ॥
ततो नंदीश्वरे द्वीपे शाश्वतप्रतिमोत्सवम् । कुर्वाणास्ते तु गीर्वाणाः[5] सेंद्राः स्वं स्वं पदं ययुः ॥ ५६३ ॥

---

१ अह्नाय शीघ्रं । २ सर्पींषि घृतानि । ३ कीकसानि अस्थीनि । ४ कृशानुना अग्निना । ५ गीर्वाणाः देवाः ।

इंद्राः स्वस्वविमानेषु सुधर्मायां च पर्षदि । अधिमाणवकस्तंभं वृत्तवज्रसमुद्गके ॥ ५६४ ॥
न्यवेशयन् स्वामिदंष्ट्रा आनर्चुश्च निरंतरम् । तासां प्रभावात्तेषां च सदा विजयमंगलम् ॥ ५६५ ॥
युग्मम् ॥

भरतस्तत्र च स्वामिसंस्कारासन्नभूतले । प्रासादं योजयामास त्रिगव्यूतिसमुच्छ्रयम् ॥ ५६६ ॥
नामतः सिंहनिषद्यां पद्यां निर्वाणवेश्मनः । उच्चैर्वर्द्धकिरत्नेन रत्नाश्मभिरकारयत् ॥ ५६७ ॥
युग्मम् ॥

तस्य द्वाराणि चत्वारि स्फटिकाश्ममयानि च । रम्याणि स्वामिसमवसरणस्यैव जज्ञिरे ॥ ५६८ ॥
प्रतिद्वारमुभयतो बभूवुस्तत्र षोडश । रत्नचंदनकलशाः कोशा इव शिवश्रियाम् ॥ ५६९ ॥
द्वारे द्वारे रत्नमयास्तोरणाः षोडशाऽभवन् । साक्षादिव समुद्भूताः परितः पुण्यवल्लयः ॥ ५७० ॥
द्वारे द्वारेऽष्टमंगल्यो मंगल्याः षोडशाभवन् । प्रासादद्वारविन्यस्तप्रशस्तिलिपिसन्निभाः ॥ ५७१ ॥
द्वारेषु तेषु चाभूवन् विशाला मुखमंडपाः । दिक्पालानां चतुर्णामप्याहृता इव पर्षदः ॥ ५७२ ॥
तेषां चतुर्णां च मुखमंडपानां पुरोऽभवन् । श्रीवल्लीनां मंडपांतः प्रेक्षासदनमंडपाः ॥ ५७३ ॥
तेषां प्रेक्षामंडपानां मध्यभागेषु जज्ञिरे । अक्षवाटा वज्रमयाः सूर्यबिंबोपहासिनः ॥ ५७४ ॥
अक्षवाटेऽक्षवाटे च मध्यभागे मनोहरम् । रत्नसिंहासनमभून्मध्येऽब्जमिव कर्णिका ॥ ५७५ ॥
प्रतिप्रेक्षामंडपाग्रे बभूव मणिपीठिका । चैत्यस्तूपास्तदुपरि चाभवन् रत्नशालिनः ॥ ५७६ ॥
तेषां च चैत्यस्तूपानां पुरतो द्योतितांबराः । प्रत्येकं च प्रतिदिशं महती मणिपीठिका ॥ ५७७ ॥

प्रत्येकं तदुपरिष्टात्पंचधन्वशतप्रमाः । चैत्यस्तूपसन्मुखीनाः सर्वांगं रत्ननिर्मिताः ॥ ५७८ ॥
ऋषभा वर्द्धमाना च ततश्चंद्राननापि च । वारिषेणेति पर्यंकासनासीना मनोहराः ॥ ५७९ ॥
शाश्वत्यः प्रतिमा जैन्यो नेत्र[1]कैरवचंद्रिकाः । नंदीश्वरमहाद्वीपचैत्यमध्य इवाभवन् ॥ ५८० ॥

त्रिभिर्विशेषकम् ॥

तेषां च चैत्यस्तूपानां प्रत्येकं पुरतोऽभवत् । अनर्घ्यमाणिक्यमयी विशाला चारुपीठिका ॥ ५८१ ॥
पीठकानां पुरस्तासां प्रत्येकं चैत्यपादपाः । चैत्यद्रूणां पुरस्तेषां प्रत्येकं मणिपीठिकाः ॥ ५८२ ॥
उपरींद्रध्वजास्तासां प्रत्येकमपि चाभवन् । जयस्तंभो दिशि दिशि धर्मेणेवाधिरोपितः ॥ ५८३ ॥
इंद्रध्वजानां च पुरः प्रत्येकमपि चाभवत् । नाम्ना नंदा पुष्करिणी त्रिसोपाना सतोरणा ॥ ५८४ ॥
स्वच्छशीतजलापूर्णा विचित्रांभोजशालिनी । मनोहरा दधिमुखाधारपुष्करिणीनिभा ॥ ५८५ ॥

युग्मम् ॥

आसीत्सिंहनिषद्याया महाचैत्यस्य तस्य तु । मध्यभागे सुमहति महती मणिपीठिका ॥ ५८६ ॥
तस्याश्चोपसमवसरणस्येव मध्यतः । चित्ररत्नमयो देवच्छंदकः समजायत ॥ ५८७ ॥
नानावर्णांशुकमय उल्लोचस्तदुपर्यभूत् । उद्भावयन्नकालेपि संध्याभ्रपटलश्रियम् ॥ ५८८ ॥
उल्लोचस्यांतरे पार्श्वतश्च वज्रमयांकुशाः । आसन्नुल्लोचशोभा तु तथाप्यासीन्निरंकुशा ॥ ५८९ ॥
सुधाधारोपमा हारा अंकुशेष्ववलंबिताः । कुंभमयै[2]रामलकस्थूलैर्मुक्ताफलैः कृताः ॥ ५९० ॥

---

१ नेत्रकुमुदज्योत्स्नाः । २ आमलकफलवत् स्थूलैः ।

प्रत्येकं पार्श्वयोस्तासामुत्क्षिप्तमणिचामरे । चामरधारप्रतिमे रत्नमय्यौ बभूवतुः ॥ ६०५ ॥

नागयक्षभूतकुंडधाराणां प्रतिमे शुभे । प्रत्येकमग्रे भगवत्प्रतिमानां बभूवतुः ॥ ६०६ ॥

ताः कृतांजलयो रत्नमय्यः सर्वांग उज्ज्वलाः । निषेदिवांसः प्रत्यक्षा इव नागादयो बभुः ॥ ६०७ ॥

देवछंदे रत्नघंटाश्चतुर्विंशतिरुज्ज्वलाः । संक्षिप्तादित्यबिंबाभास्तथा माणिक्यदर्पणाः ॥ ६०८ ॥

स्थानस्था दीपिका हैम्यस्तथा रत्नकरंडिकाः । पुष्पश्चंगेरिकाश्चंगाः सरिदावर्त्तवर्त्तुलाः ॥ ६०९ ॥

लोमहस्तपटल्योऽथ विभूषणकरंडकाः । हैमानि धूपदहनकानि चारात्रिकाणि च ॥ ६१० ॥

रत्नमंगलदीपाश्च रत्नभृंगारका अपि । स्फाराणि रत्नस्थालानि तापनीयाः पतद्ग्रहाः ॥ ६११ ॥

रत्नचंदनकलशा रत्नसिंहासनानि च । रत्नमय्योऽष्टमंगल्यो हैमास्तैलसमुद्गकाः ॥ ६१२ ॥

धूपभाण्डानि हैमानि हैमाश्चोत्पलहस्तकाः । पुरो बभूवुश्च चतुर्विंशतेः श्रीमदर्हताम् ॥ ६१३ ॥

पञ्चभिः कुलकम् ॥

इति नानारत्नमयं त्रैलोक्येऽप्यतिसुंदरम् । मूर्त्तेन धर्मेणेवेन्दुकांतवप्रेण शोभितम् ॥ ६१४ ॥

ईहामृगोक्षमकरतुरंगनरकिंनरैः । विहंगबालकरुरुशरभैश्चमरैर्द्विपैः ॥ ६१५ ॥

वनलताब्जलताभिर्विचित्राद्भुतभंगिकम् । बहुद्रुममिवोद्यानं रत्नस्तंभसमाकुलम् ॥ ६१६ ॥

व्योमगंगोर्मिभिरिव पताकाभिर्मनोरमम् । उन्नतैर्दंतुरमिव ध्वजदंडैश्च कांचनैः ॥ ६१७ ॥

ध्वजस्थकिंकिणीक्वाणैः प्रसरद्भिर्निरंतरैः । खेचरस्त्रैणरसनादामध्वनिविडंबकम् ॥ ६१८ ॥

---

१ लोमहस्ताना पटल्य. समूहाः । २ पतद्ग्रहाः पात्राणि । ३ ईहामृगो वृकः । ४ रुरुर्मृगविशेषः ।

अत्र माशातनां कार्षुर्गमनागमनैर्नराः । इत्यकार्षीद्यंत्रमयान् लौहानारक्षकान्नृपः ॥ ६३३ ॥
आरक्षपुरुषैर्लौहैर्यंत्रायुक्तैश्च तैरभूत् । नृणामगम्यं स्थानं तन्मर्त्याद्बहिरिव स्थितम् ॥ ६३४ ॥
दंडरत्नेन रत्नेशो दंतांश्चिच्छेद तत्र च । ऋजूच्चस्तंभवत् सोऽद्रिरनारोह्यस्ततोऽभवत् ॥ ६३५ ॥
नृपो नृभिरलंघ्यानि योजनांतरितानि च । पदानि मेखलारूपाण्यष्टौ तं परितो व्यधात् ॥ ६३६ ॥
ततः प्रभृति शैलोऽसौ नाम्नाष्टापद इत्यभूत् । लोके हराद्रिः कैलासः स्फटिकाद्रिश्च कीर्त्यते ॥ ६३७ ॥
इति चैत्यं विनिर्माप्य प्रतिष्ठाप्य च चक्रभृत् । श्वेतांशुकधरस्तत्राविशन्मेघ इवोडुपः ॥ ६३८ ॥
कृत्वा प्रदक्षिणां तत्र प्रतिमास्ताः सुगंधिभिः । उदकैः स्नपयामास भूपतिः सपरिच्छदः ॥ ६३९ ॥
ममार्ज देवदूष्यैश्च भरतः परितोऽपि ताः । रत्नादर्श इवाभूवंस्तास्ततश्चाधिकोज्ज्वलाः ॥ ६४० ॥
गोशीर्षचंदनरसैर्विलिलेप नृपोऽथ ताः । सुगंधिस्त्यानतां प्राप्तैर्ज्योत्स्नापूरैरिवामलैः ॥ ६४१ ॥
ताः क्ष्मापतिरानर्च्च विचित्रै रत्नभूषणैः । दिव्यदामभिरुद्दामैर्देवदूष्यांशुकैरपि ॥ ६४२ ॥
ददाह वादयन् घंटां धूपं तद्धूमवर्त्तिभिः । कुर्वन् चैत्यांतरं नीलवल्लरीभिरिवांकितम् ॥ ६४३ ॥
ततश्चोत्तारयामास कर्पूरारात्रिकं नृपः । संसारशीतभीतानामग्निकुंडमिव ज्वलत् ॥ ६४४ ॥
ऋषभस्वामिनो नत्वा प्रतिमां भरतेश्वरः । आक्रांतः शोकभक्तिभ्यां स्तोतुं प्रस्तुतवानिति ॥ ६४५ ॥
कल्याणैः पंचभिर्दत्तसुखाय श्वभ्रिणामपि । जगत्सुखाकर नमस्तुभ्यं त्रिजगदीश्वर ॥ ६४६ ॥
स्वामिन् विश्वजनीनेन त्वया विहरतान्वहम् । रविणेवानुगृहीतं चराचरमिदं जगत् ॥ ६४७ ॥

---

१ उडुपः शशी । २ सुगन्धिघनता । ३ नारकिणा । ४ विश्वहितकारकेन ।